# श्रीविष्णुसहस्रनामस्तोत्रम्

## व्याख्यानचतुष्टयसमलङ्कृतम्



प्रधानसम्पादकः

**प्रो. कृ.त. पाण्डुरङ्गि**

**सम्पादकौ**

डा. आर्. जि. माळगि । डा. एस्. आर्. पाण्डुरङ्गि

प्रकाशकः - द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानम्, बेङ्गलूरु

# श्रीविष्णुसहस्रनामस्तोत्रम्

श्रीमज्जयतीर्थशिष्यश्रीविद्याधिराजतीर्थविरचितया
श्रीविष्णुसहस्रनामनिरुक्त्या,
श्रीरघुनाथतीर्थविरचितया बृहतीसहस्रव्याख्यानात्
तत्त्वसारत् उद्धृतया श्रीविष्णुसहस्रनामस्तोत्रव्याख्यया,
श्रीसत्यसन्धतीर्थकृतेन श्रीविष्णुसहस्रनामभाष्येण,
श्रीपाङ्गरी श्रीनिवासाचार्यविरचितेन
श्रीविष्णुसहस्रनामव्याख्यानेन च समलङ्कृतम्


*Editor-in-Chief*

Mahāmahopādhyāya

**Prof. K.T. Pandurangi**

former Prof. of Sanskrit, Bangalore University

*Editors*

**Dr. R.G. Malagi,** M.A., Ph.D.

former Deputy Director, Oriental Research Institute, Mysore

**Dr. S.R. Pandurangi**

B.Sc. (Hons.), M.Sc., M.A., Ph.D.



**This volume is Published with the financial assistance from Government of Karnataka**






*Published by*

**Dvaita Vedanta Studies and Research Foundation**

No.11, Uttaradi Matha Compound,

Basavanagudi, Bangalore-4.

**ŚrīViṣṇusahasranāmaStotram** - with the commentaries of ŚrīVidyādhirājayatitīrtharu, ŚrīRaghunāthatīrtharu, ŚrīSatyasandhatīrtharu and ŚrīPāṅgari Śrīnivasāchārya.

Published by : **Dvaita Vedanta Studies and Research Foundation** B'lore.

Editor-in-Chief : **Prof. K.T. Pandurangi**

Editors : **Dr. R.G. Malagi,** M.A., Ph.D.
**Dr. S.R. Pandurangi,** B.Sc. (Hons.) M.Sc., M.A., Ph.D.



Year of Publication : 2017

No. of Pages : lii+546

Price : 280

No. of Copies : 1000

ISBN No. : 978-93-83679-34-8

Cover Design by : **Sri K.M. Sheshagiri**

Typeset & Printed at : M/s. Vagartha, B'lore.

॥ श्री दिग्विजयरामो विजयते ॥

# श्रीमज्जगद्गुरु श्रीमध्वाचार्य मूलमहासंस्थानम्

# उ त्त रा दि म ठः

5th Cross, Satyapramoda teertha Marg, Shankarpuram,
Basavanagudi, BANGALORE - 560 004, Phone : 080 - 2242 6203



॥ श्रीशः शरणम् ॥ श्रीगुरुभ्यो नमः ॥

## ॥ पुण्डरीकाक्षं स्तवैरर्चेत् ॥

## अनुग्रहसन्देशः

विष्णौ अनन्यभक्तिर्हि विष्णुप्रीतिजननी । तादृशीं अनन्यभक्तिं जनयति गुणोत्कर्षधीः ; गुणोत्कर्षधियं प्रसूते गुणाभिधानरूपा स्तुतिः । विष्णुप्रीतिजनकभक्तिजनकगुणोत्कर्षप्रतिपादनाय प्रवृत्तानि समस्तानि सच्छास्त्राणि । तेषु सच्छास्त्रेषु अनन्तवेदाः वरम्, महाभारतं वरीयः, ततो वरिष्ठे गीतानामसहस्रे ।

**त्रिविधं महत्–**

यस्य नाम्नो द्रष्टा **महद्ब्रह्म** वेदव्यासः, येषु नामसु स्तुत्यं अनन्तवेदोक्ततदनुक्तानन्तगुणगणविशिष्टं अनन्तरूपं **महद्ब्रह्म**, यया स्तुत्या प्राप्यं **महामोक्षफलम्** ।

**अनुत्तमं नामशास्त्रम्–**

तदिदं वैष्णवं पदसहस्रं विष्णोः अनन्तगुण-तनुवाचकं सत् महद्ब्रह्म यावद्रूपैर्विष्ठितं

तावद्रूपजातं प्रतिपादयितुं अनुसरति । अथापि 'शब्दातिगः' श्रीहरिः स्वेन महामहिम्ना सर्वानपि शब्दान् अतिशेते । ईदृशशब्दातिगमहिमाऽपि शब्दसहो भगवान् सदागमैक-विज्ञेयो भवति । तदयं दयानिधेः श्रीनिवासस्य अगाधमहिमा ।

अमितमहिमोपेतभगवद्रूपप्रतिपादनादिरूपेण ईदृशेन सर्वातिशायिना महिम्ना सर्वाणि नामसहस्राण्यतिगच्छति अयं श्रीविष्णुस्तवराजः ।

एतादृशं समस्तशास्त्रसारं बृहतीसहस्रमन्त्रव्याख्येयं इदं नामसहस्रं लेखन-श्रवण-सङ्कीर्तन-जप-व्याख्यानप्रभृतिभिः विष-पिशाच-व्याधि-ग्रह-दुःस्वप्नदुर्निमित्ताद्यशिवोप-शमनरूपावान्तरफलकं सत् महापातकादिप्रायश्चित्ताय, संसारग्रन्थिविस्रंसनाय, परम-पदावाप्तये परमं निदानम् ।

अतिमहिमामण्डितां इमां स्तुतिसुधां श्रीमदानन्दतीर्थभगवत्पादाचार्याः स्वीयवचोमहा-घटेन पण्डितान् पाययामासुः । अथ च स्वभाष्यादिषु कतिपयानां शब्दानां अपूर्वमर्थं आविश्चक्रुः । आनन्दतीर्थीयमतानुयायिनः बहवः मुनिपुङ्गवाः तत्सन्दर्शितपन्थानः पाण्डित्यप्रचुरां टीकां व्यररचन् । तासु टीकासु श्रीमज्जयतीर्थपूज्यपादकृतिव्याकृति-प्रथितयशसाम्, अगाधपाण्डित्यनिधीनाम्, अनवरतं सञ्चिन्तितविष्णुतत्वानां श्रीविद्याधिराजमुनीन्द्राणां प्रथमं व्याख्यानम्, शेषचन्द्रिकाचार्यनाम्ना प्रथितैः श्रीरघुनाथतीर्थैर्विरचितं बृहतीसहस्रव्याख्यानादुद्धृतं द्वितीयं व्याख्यानम्, 'अष्टैश्वर्यशालिनः' इति गरिमानयशसां श्रीमत्सत्यसन्धतीर्थनां श्रीविष्णुसहस्रनामविवृतिः (विष्णुसहस्रनामभाष्यम्) तृतीयं व्याख्यानम्, पाङ्करी श्रीनिवासाचार्यविरचितं तुरीयं व्याख्यानम् ।

इतः पूर्वं मुद्रितानि जिज्ञासूनामवश्यं अत्युपयुक्तानि इमानि व्याख्यानानि नैकमातृकासमीक्षणपूर्वकं संशोध्य उपायनीक्रियते । संशोधनकर्मणि निष्णाताः विद्वांसः डा. माळगी रामाचार्याः, डा.एस्.आर्. पाण्डुरङ्गी च इमानि व्याख्यानानि एकत्र संयोज्य, सुष्ठु संशोध्य श्रीविष्णुसहस्रनामप्रतिपाद्यस्य महाविष्णोः महतीं सेवां अकुरुताम् । श्रीविष्णुसहस्रनामप्रतिपाद्यः अनन्तरूपो हरिः, तदभिन्नाः अस्मदुपास्याः श्रीमन्मूलराम-दिग्विजयरामवेदव्यासाः एतौ अनुगृह्णन्तु इति आशास्महे ।

इति नारायणस्मरणानि

श्रीमत्सत्यात्मतीर्थश्रीपादङ्गळवरु
उत्तरादिमठ

# सम्पादकीयम्

द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानद्वारा व्याख्यानचतुष्टयोपेतं विष्णुसहस्रनामस्तोत्रं प्रकाशं प्राप्नोति इति वक्तुं महान् सन्तोषः सञ्जायते ।

श्रीमन्मध्वाचार्यैः स्वकृतभगवद्गीतातात्पर्ये ब्रह्माण्डपुराणान्तर्गतश्लोकोदाहरणपूर्वकं विष्णुसहस्रनाम्नः महिमा सुष्ठु प्रतिपादितः । स च श्लोकः एवं वर्तते–

**''शास्त्रेषु भारतं सारं तत्र नामसहस्रकम् ।**
**वैष्णवं कृष्णगीता च तज्ज्ञानात् मुच्यतेऽञ्जसा''** ॥ इति

महाभारतं सकलशास्त्रेषु मध्ये सारभूतम् । तत्रापि महाभारते विष्णुसहस्रनामस्तोत्रं भगवद्गीता च सारभूते । समीचीनतया तयोर्ज्ञानात् साधकः मोक्षं प्राप्नोतीति विष्णुसहस्रनामस्तोत्रस्य मोक्षसाधनत्वं प्रतिपादितम् ।

एतानि नामानि न केवलं भगवतः विष्णोः नामानि किन्तु भगवतः सहस्ररूपाणि वर्णयन्ति च ।

'यदेकमव्यक्तमनन्तरूपम्' इति उपनिषत् भगवतः अनेकानि रूपाणि प्रतिपादयति । भगवतः अनन्तानि रूपाणि वर्तन्ते इति श्रीनारायणपण्डिताचार्यैः स्वीये सुमध्वविजयनामककाव्ये सुस्पष्टम् उपवर्णितम् । स च श्लोकः एवं भवति–

**परमात्मने सततमेकरूपिणे दशरूपिणे शतसहस्ररूपिणे ।**
**अविकारिणे स्फुटमनन्तरूपिणे सुखचित्समस्ततनवे नमो नमः** ॥ इति ।

भगवान्नारायणः एकरूपवान्, दशरूपवान्, शतरूपवान् सहस्ररूपवान् अनन्तरूपवांश्च । ''एकमेवाद्वितीयं ब्रह्म'' इति श्रुतिः भगवतः एकत्वं वक्ति भगवतः एकत्वेऽपि तस्य अनेकरूपत्वं वर्तते । तस्य अनेकरूपवत्वेऽपि सः अविकारी, तस्य सर्वाण्यपि रूपाणि सुखात्मकानि, चित्स्वरूपाणि,

ज्ञानात्मकानि च । एतादृशानन्तरूपेषु मध्ये विश्वादिसहस्ररूपाणां व्यूहं सहस्रनामानि प्रतिपादयन्ति ।

एकैकमपि नाम भगवतः शताधिकान् गुणान् प्रतिपादति । एक एव भगवान्नारायणः भेदप्रतिनिधिविशेषबलान् अनेकरूपवान् भवति । सः गुणवान् अपि भवति गुणस्वरूपोऽपि भवति । एवमेव मध्वसिद्धान्तः ।

तथा च भगवान् अनन्तगुणवान् अनन्तरूपवाश्च । एवमेव तस्य उपासना कर्तव्या । सा च उपासना मोक्षाय भवति इति साधकं प्रति भगवतः उपासनाक्रमः अत्रोच्यते । एवं च मोक्षसाधनोपासनायां अत्युपयुक्तानि एतानि सहस्रनामानि । अत एवास्य स्तोत्तस्य "तज्ज्ञानात् मुच्यतेऽञ्जसा" इति मोक्षसाधनता या उक्ता सा अत्यन्तं समीचीना ।

अपि च श्रीमन्मध्वाचार्यैः भगवद्गीताभाष्यपीठिकायां विष्णुसहस्रनाम्नः महिमा एवम् उपवर्णिता वर्तते–

**"भारतं सर्वशास्त्रेषु भारते गीतिका वरा ।**
**विष्णोः सहस्रनामापि ज्ञेयं पाठ्यं च तद्वयम्"** ॥ इति ।

अयं च महाकौर्मपुराणान्तर्गतो श्लोकः । अत्र भारतं सकलशास्त्रोत्तमम् । भारतेऽपि कृष्णगीता विष्णुसहस्रनाम च सारभूतम् । अतः तयोः ज्ञानं पठनं च साधकैः अवश्यं सम्पाद्यं, कार्यश्च इति कूर्मपुराणे विष्णुसहस्रनाम्नां ज्ञानस्य पारायणस्य च आवश्यकता प्रतिपादिता ।

किञ्च विष्णुसहस्रनामस्तोत्रं धर्मसाधनम् भवति । तथाहि– सर्वधर्माणां परमः धर्मः कः? येन धर्माचरणेन साधकः जन्मसंसारबन्धनात् मुच्यते? इति धर्मराजेन पृष्टः भीष्मः एवमुत्तरति–

**"एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।**
**यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा"** ॥ इति ।

"एतैः विष्णुसहस्रनामभिः भक्त्या पुण्डरीकाक्षार्चनमेव सर्वेषां धर्माणां मध्ये परमः धर्मः" इति ।

एवं च भगवतः अर्चनं परमः धर्मः । तादृशधर्मसाधनं विष्णुसहस्रनाम-स्तोत्रमिति अस्य स्तोत्रस्य परमधर्मसाधनत्वमुक्तम् । तेन धर्माचरणेन प्रसन्नः भगवान् अर्चकस्य मोक्षं ददाति इति धर्मसाधनद्वारा एतानि नामानि मोक्षकारणीभूतानि इति भीष्मः धर्मराजमुपदिष्टवान् ।

अपि च किं जपन् जन्मसंसारसागरात् मुच्यते ? इत्यस्यापि उत्तरमेवं भवति । विष्णुसहस्रनामानि जपन् साधकः जन्मसंसारसागरात् मुच्यते इति । तथा च संसारसागरतारकत्वम् एषां नाम्नां वर्तते इत्यपि सिद्धं भवति ।

एतादृशानां सहस्रसङ्ख्याकानां नाम्नां चत्वारः ज्ञानिनः व्याख्यातारः वर्तन्ते । तेषु चतुर्षु मध्ये त्रयः पीठाधिपतयः चतुर्थः भवति गृहस्थाश्रमी ।

१. प्रथमतः श्रीश्रीजयतीर्थपूज्यपादानां शिष्याः श्रीविद्याधिराजतीर्थ-श्रीमच्चरणाः श्री उत्तादिमठाधीशाः ।

२. द्वितीयतया श्रीश्रीरघुनाथतीर्थश्रीपादाः श्रीव्यासराजमठाधीशाः ।

३. तृतीयतया श्रीश्रीसत्यसन्धतीर्थश्रीमच्चरणाः श्रीउत्तरादिमठाधीशाः ।

४. चतुर्थाः भवन्ति श्रीपाङ्गरिश्रीनिवासाचार्याः ।

एतेषां चतुर्णामपि द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानस्य प्रतिनिधिः भूत्वाऽहं साष्टाङ्गनमस्कारान् समर्पयामि ।

द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानस्य मुख्यसंरक्षकेभ्यः तथा मार्गदर्शकेभ्यः, सदा पाठप्रवचननिरतेभ्यः, विद्यापक्षपातिभ्यः, जनप्रियोपन्यासकेभ्यः, परमहंसपरिव्राजकेभ्यः श्रीउत्तरादिमठाधीशेभ्यः परमपूज्येभ्यः श्रीश्री सत्यात्मतीर्थश्रीपादेभ्यः अनन्तानि भक्तिपूर्वकाणि साष्टाङ्गप्रणामानि अर्पये ।

द्वैतवेदान्तप्रतिष्ठानद्वारा प्रकाशिष्यमाणोऽयं ग्रन्थः जिज्ञासूनां तथा विद्वज्जनानाम् उपयोगाय भवतीति भावयामि ।

एतद्ग्रन्थसम्पादनकार्यं प्राच्यविद्यासंशोधनालयस्य उपनिर्देशकचरेण विदुषा आर्.जि. माळगि महाभागेन तथा अस्याः संस्थायाः सकलविधकार्येषु सश्रद्धं निरतेन सदा शास्त्रसेवासक्तेन, डा. एस्.आर्. पाण्डुरङ्गि महाभागेन च सम्भूय कृतम् । तयोः शुभं भूयादिति भगवन्तं प्रार्थये ।

शास्त्रजिज्ञासवः अस्य ग्रन्थस्य अध्ययनेन श्रीहरिगुरूणां अनुग्रहभाजः भविष्यन्ति चेत् ग्रन्थस्य प्रकाशनकार्यं सार्थकं भवति । ग्रन्थस्यास्य प्रकाशकस्य द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठास्य उद्देश्यमपि सफलं भवति ।

५-४-२०१७ — **प्रो. के.टि. पाण्डुरङ्गि**

श्रीरामनवमी — अध्यक्षाः तथा गौरवनिर्देशकाः

# ಭೂಮಿಕಾ

''ಭಾರತಂ ಚಾಪಿ ಕೃತವಾನ್ ಪಂಚಮಂ ವೇದಮುತ್ತಮಮ್ ।''

ಎಂದು ಸ್ಕಾಂದಪುರಾಣ ವರ್ಣಿಸುವಂತೆ ಮಹಾಭಾರತಕ್ಕೆ ಪಂಚಮವೇದ ಎಂಬ ದೊಡ್ಡಸ್ಥಾನ.

ಯದಿಹಾಸ್ತಿ ತದನ್ಯತ್ರ ಯನ್ನೇಹಾಸ್ತಿ ನ ಕುತ್ರಚಿತ್ ।

ಬೇರೆಡೆ ಇರುವುದೆಲ್ಲ ಮಹಾಭಾರತದಲ್ಲಿ ಇದೆ. ಮಹಾಭಾರತದಲ್ಲಿ ಇಲ್ಲದ್ದು ಬೇರೆ ಎಲ್ಲಿಯೂ ಇಲ್ಲ ಎನ್ನುವುದು ಮಹಾಭಾರತದ ಹಿರಿಮೆ.

ಭಾರತಂ ಸರ್ವಶಾಸ್ತ್ರೇಷು ಭಾರತೇ ಗೀತಿಕಾ ವರಾ ।
ವಿಷ್ಣೋಃ ಸಹಸ್ರನಾಮಾಪಿ ಜ್ಞೇಯಂ ಪಾಠ್ಯಂ ಚ ತದ್‌ದ್ವಯಮ್ ॥

ಸಮಗ್ರಶಾಸ್ತ್ರಗಳಲ್ಲಿ ಭಾರತ ಶ್ರೇಷ್ಠವಾದದ್ದಾದರೆ ಭಾರತದಲ್ಲಿ ಶ್ರೇಷ್ಠವಾದದ್ದು ಭಗವದ್ಗೀತೆ ಮತ್ತು ವಿಷ್ಣುಸಹಸ್ರನಾಮ. ಅಂತೆಯೇ ನಿತ್ಯವೂ ಗೀತೆ-ಸಹಸ್ರನಾಮ-ಗಳ ಪಠನ ಸಂಪ್ರದಾಯದಿಂದ ನಡೆದುಬಂದಿದೆ.

## ನೂರು ಅರ್ಥಗಳ ಸಹಸ್ರನಾಮಗಳು

ಶ್ರೀಮದಾಚಾರ್ಯರು ಒಂದು ವೈದಿಕಸಭೆಯಲ್ಲಿ ಭಾಗವಹಿಸಿದ್ದ ಸಂದರ್ಭ-ದಲ್ಲಿ ವೇದದ ಅರ್ಥವನ್ನು ನಿರೂಪಿಸುವಾಗ ''ನೀವು ಹೇಳುವ ಅರ್ಥ ಸರಿಯೇ? ವೇದಗಳಿಗೆ ಹೀಗೆ ಅರ್ಥವಲ್ಲವೇ?'' ಎಂಬುದಾಗಿ ಶ್ರೋತೃಗಳು ಆಕ್ಷೇಪಿಸುತ್ತಾರೆ. ಆಗ ಆಚಾರ್ಯರು–

ಸ್ಯಾತ್ತಥೇತ್ಥಮಪಿ ಸಂಭವಿತಾರ್ಥಃ ತ್ರ್ಯರ್ಥತಾಂ ಶ್ರುತಿಷು ವಿತ್ತ ದಶಾರ್ಥಮ್ ।
ಭಾರತಂ ನನು ಶತಾರ್ಥಮಪಿ ಸ್ಯಾತ್ ವೈಷ್ಣವಂ ಪದಸಹಸ್ರತಯಂ ಹಿ ॥
(ಸುಮಧ್ವವಿಜಯ)

ವೇದಕ್ಕೆ ನೀವು ಹೇಳುವ ಅರ್ಥವೂ ಸರಿ. ನಾವು ಹೇಳುವ ಅರ್ಥವೂ ಸರಿ. ಯಾಕೆಂದರೆ– ವೇದಕ್ಕೆ ಮೂರು ಅರ್ಥಗಳು, ಮಹಾಭಾರತಕ್ಕೆ ಹತ್ತು ಅರ್ಥಗಳು, ವಿಷ್ಣುಸಹಸ್ರನಾಮಕ್ಕೆ ನೂರು ಅರ್ಥಗಳು ಇವೆ ಎಂದು ಉತ್ತರಿಸುತ್ತಾರೆ. ಹಾಗೆ ವಿಷ್ಣುಸಹಸ್ರನಾಮಕ್ಕೆ ನೂರು ಅರ್ಥಗಳು ಇರುವುದೇ ಆದರೆ ಹೇಳಿನೋಡೋಣ ಎಂದು ಶ್ರೋತೃಗಳು ಮರು ಆಕ್ಷೇಪಿಸಿದಾಗ, ''ಅವಶ್ಯವಾಗಿ ನೂರು ಅರ್ಥ

ಹೇಳುತ್ತೇವೆ. ಆದರೆ ನಾವು ಹೇಳುವ ನೂರು ಅರ್ಥಗಳನ್ನು ಅನಂತರ ನೀವು ನನಗೆ ಒಪ್ಪಿಸಬೇಕು'' ಎಂಬುದಾಗಿ ಕರಾರು ಹಾಕಿ ಆಚಾರ್ಯರು ನೂರು ಅರ್ಥಗಳನ್ನು ಹೇಳಲು ಆರಂಭಿಸುತ್ತಾರೆ. ಮೂವತ್ತು ನಲವತ್ತು ಅರ್ಥಗಳನ್ನು ಹೇಳುವಷ್ಟರಲ್ಲಿಯೇ ಅಷ್ಟನ್ನೂ ನೆನಪಿನಲ್ಲಿಟ್ಟುಕೊಳ್ಳಲಾಗದೇ ಶ್ರೋತೃಗಳು ಸೋತು ಶರಣಾಗತರಾಗುತ್ತಾರೆ. ನಾರಾಯಣಪಂಡಿತಾಚಾರ್ಯರು ಈ ಘಟನೆಯನ್ನು ಸುಮಧ್ವವಿಜಯದಲ್ಲಿ ಉಲ್ಲೇಖಿಸುತ್ತಾರೆ.

ಈ ರೀತಿಯಾಗಿ ಶ್ರೀಮದಾಚಾರ್ಯರೇ ವಿಷ್ಣುಸಹಸ್ರನಾಮಗಳಿಗೆ ನೂರು ಅರ್ಥಗಳುಂಟು ಎಂದು ತಿಳಿಸಿದ್ದಾರೆ. ಅಂತಹ ಅನೇಕಾರ್ಥಗರ್ಭಿತವಾದ ಬಹಳ ಉತ್ತಮಗ್ರಂಥ ವಿಷ್ಣುಸಹಸ್ರನಾಮ. ಫಲಶ್ರುತಿಯಲ್ಲಿ ಇದರ ಪಠನೆಗೆ ಅನೇಕ ಫಲಗಳನ್ನು ತಿಳಿಸುತ್ತಾರೆ.

ಈ ದೃಷ್ಟಿಯಲ್ಲಿ ವಿಷ್ಣುಸಹಸ್ರನಾಮಗಳ ಪಠನೆ ಬೆಳಗ್ಗೆ ಮಧ್ಯಾಹ್ನ ಸಾಯಂಕಾಲ ಮೂರುಹೊತ್ತು ಮಾಡುವುದು ಮೊದಲಿನಿಂದ ನಡೆದುಬಂದ ಸಂಪ್ರದಾಯ-ವಾಗಿದೆ. ಸಹಸ್ರನಾಮಗಳ ಪಠನವನ್ನು ನಿತ್ಯವೂ ಮಾಡುತ್ತೇವೆಯಾದರೂ ಅರ್ಥ-ಅನುಸಂಧಾನಪೂರ್ವಕವಾಗಿ ಮಾಡುವುದು ಹೆಚ್ಚುಫಲಕಾರಿ. ಸಹಸ್ರನಾಮಗಳಿಗೆ ಆ ವಿಧವಾದ ಅರ್ಥ-ಅನುಸಂಧಾನಗಳನ್ನು ತಿಳಿಸುವುದಕ್ಕಾಗಿ ಪ್ರಾಚೀನರು ಅನೇಕ ವ್ಯಾಖ್ಯಾನಗಳನ್ನು ಬರೆದಿದ್ದಾರೆ. ಅಂತಹ ವ್ಯಾಖ್ಯಾನಗಳ ಸಹಾಯದಿಂದ ಸಹಸ್ರನಾಮಗಳ ಅರ್ಥಗಳನ್ನು ತಿಳಿದು ಅನುಸಂಧಾನ ಮಾಡಬೇಕಾದದ್ದು ನಮ್ಮ ಕರ್ತವ್ಯ.

## ವ್ಯಾಖ್ಯಾನಗಳ ವಿಶೇಷ ಅರ್ಥಗಳು

**ಪ್ರಸಂಗ 1)** ಭಗವಂತನಿಗೆ ಲೋಹಿತಾಕ್ಷ ಎಂದು ಒಂದು ನಾಮ. ಲೋಹಿತಾಕ್ಷ ಎಂದರೆ ಅರ್ಥವೇನು? ಲೋಹಿತ ಎಂದರೆ ಕೆಂಪು, ಅಕ್ಷಿ ಎಂದರೆ ಕಣ್ಣು. ಕೆಂಪಾದ ಕಣ್ಣುಗಳುಳ್ಳವನು ಎಂಬುದಾಗಿ ಮೇಲ್ನೋಟಕ್ಕೆ ತೋರುವ ಅರ್ಥ. ಆದರೆ ಕಣ್ಣು ಕೆಂಪಾಗುವುದು ಅದೊಂದು ದೋಷ ಹಾಗಾಗಿ ಆ ಅರ್ಥ ಸರಿಯಲ್ಲ. ವ್ಯಾಖ್ಯಾನಕಾರರು ಅದರ ನಿಜವಾದ ಅರ್ಥವನ್ನು ಹೀಗೆ ತಿಳಿಸುತ್ತಾರೆ– ಲೋಕಹಿತವಾದ ಅಕ್ಷಿಗಳುಳ್ಳವನು. ಇವನ ಕಟಾಕ್ಷ ಬಿದ್ದರೆ ಲೋಕಕ್ಕೆ ಹಿತವಾಗುತ್ತದೆ. ಹಾಗಾಗಿ ಲೋಕಕ್ಕೆ ಹಿತವನ್ನುಂಟುಮಾಡುವ ಅಕ್ಷಿಗಳುಳ್ಳವನು = ಲೋಹಿತಾಕ್ಷ.

**ಪ್ರಸಂಗ 2)** ಮತ್ತೆ ಹಲವೆಡೆ ಹೇಳುವಾಗ–

''ಕ್ರೋಧಹಾ ಕ್ರೋಧಕೃತ್''

''ಕಾಮಹಾ ಕಾಮಕೃತ್''

ಎಂದು ಭಗವಂತನನ್ನು ಕರೆಯಲಾಗಿದೆ. ''ಕ್ರೋಧಕೃತ್=ಕ್ರೋಧವನ್ನುಂಟು ಮಾಡುವವನು, ಕ್ರೋಧಹಾ=ಕ್ರೋಧವನ್ನು ನಾಶ ಮಾಡುವವನು. ಕಾಮಕೃತ್= ಕಾಮವನ್ನುಂಟುಮಾಡುವವನು, ಕಾಮಹಾ=ಕಾಮವನ್ನು ನಾಶ ಮಾಡುವವನು''. ಹೀಗೆ ವಿರುದ್ಧವಾಗಿ ಹೇಳಿರುವುದು ಕಾಣಸಿಗುತ್ತದೆ. ಹಾಗಾದರೆ ಇವುಗಳಿಗೆ ಅರ್ಥವೇನು?

ವ್ಯಾಖ್ಯಾನಕಾರರು ಬಹಳ ಸುಂದರವಾಗಿ ತಿಳಿಸುತ್ತಾರೆ– ದೇವರು ನಮಗೆ ಕೊಡುವ ಕಾಮವೇ ಬೇರೆ, ಪರಿಹರಿಸಬೇಕಾದ ಕಾಮವೇ ಬೇರೆ. ದೇವರಪೂಜೆ ಮಾಡಬೇಕು, ಪಾಠ-ಪ್ರವಚನ ನಡೆಸಬೇಕು, ಅತಿಥಿಸತ್ಕಾರ ಮಾಡಬೇಕು ಇತ್ಯಾದಿಯಾಗಿ ಸತ್ಕಾಮನೆಗಳು ನಮಗೆ ಬರಬೇಕು. ಇವು ಬೇಕಾದ ಕಾಮಗಳು. ಇವುಗಳನ್ನು ಕೊಡುವವನು ಭಗವಂತ. ಅದು=ಕಾಮಕೃತ್. ಏಕಾದಶೀ ತಿನ್ನಬೇಕು, ನಿಷಿದ್ಧವಾದ ಆಹಾರಗಳನ್ನು ತಿನ್ನಬೇಕು, ಅನ್ಯಸ್ತ್ರೀ ಸಹವಾಸ ಮಾಡಬೇಕು ಇತ್ಯಾದಿಗಳು ದುಷ್ಟವಾದ ಕಾಮಗಳು. ಇವುಗಳು ನಮಗೆ ಬೇಡ. ಅಂತಹ ದುಷ್ಟವಾದ ಕಾಮನೆಗಳನ್ನು ನಾಶಪಡಿಸುವವನು ಭಗವಂತ. ಅದು=ಕಾಮಹಾ.

ಶಾಸ್ತ್ರಕ್ಕೆ ವಿರುದ್ಧವಾಗಿ ನಡೆದುಕೊಂಡಾಗ ಸಿಟ್ಟು ಮಾಡಿ ಸನ್ಮಾರ್ಗಕ್ಕೆ ತರಬೇಕಾದದ್ದು ಹಿರಿಯರ ಕರ್ತವ್ಯ. ಆ ತರಹದ ಸಿಟ್ಟು ಉತ್ತಮವಾದದ್ದೇ. ಒಳ್ಳೆಯದೇ. ಹಾಗಾಗಿ ಅಂತಹ ಒಳ್ಳೆಯ ಕ್ರೋಧವನ್ನು ಕೊಡುವವನು ಭಗವಂತ. ಅದು=ಕ್ರೋಧಕೃತ್. ಮತ್ತೊಬ್ಬರ ಸದ್ಗುಣಗಳನ್ನು ಸಹಿಸದೇ ಸಿಟ್ಟು ಮಾಡುವುದು, ದ್ವೇಷಿಸುವುದು ಸರಿಯಲ್ಲ. ಅಂತಹ ಸಿಟ್ಟು ಕೆಟ್ಟದ್ದು. ಅಂತಹ ನಿಷಿದ್ಧವಾದ ಕ್ರೋಧವನ್ನು ಪರಿಹರಿಸುವವನೂ ಭಗವಂತನೇ. ಅದು=ಕ್ರೋಧಹಾ.

ಈ ರೀತಿಯಾಗಿ ಅನೇಕ ಸ್ವಾರಸ್ಯಕರ ಅರ್ಥಗಳನ್ನು ವ್ಯಾಖ್ಯಾನಗಳಲ್ಲಿ ಕಾಣಬಹುದಾಗಿದೆ.

### ವ್ಯಾಖ್ಯಾನ ಚತುಷ್ಟಯೋಪೇತ ವಿಷ್ಣುಸಹಸ್ರನಾಮ

ವಿಷ್ಣುಸಹಸ್ರನಾಮಕ್ಕೆ ಅನೇಕ ಅಪರೂಪದ ವ್ಯಾಖ್ಯಾನಗಳಿವೆ. ಶ್ರೀಜಯತೀರ್ಥರ ಶಿಷ್ಯರಾದ ಶ್ರೀವಿದ್ಯಾಧಿರಾಜತೀರ್ಥರ ವ್ಯಾಖ್ಯಾನ, ಶ್ರೀರಘುನಾಥತೀರ್ಥರ ವ್ಯಾಖ್ಯಾನ, ಶ್ರೀಸತ್ಯಸಂಧತೀರ್ಥರ ವ್ಯಾಖ್ಯಾನ, ಶ್ರೀಪಾಂಗರಿ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರ

ವ್ಯಾಖ್ಯಾನ. ಈ ಎಲ್ಲ ವ್ಯಾಖ್ಯಾನಗಳನ್ನು ಸಂಗ್ರಹಿಸಿ ವ್ಯಾಖ್ಯಾನಚತುಷ್ಟಯಸಹಿತ ವಿಷ್ಣುಸಹಸ್ರನಾಮವನ್ನು ನಮ್ಮ ಪಂ|| ರಾಮಾಚಾರ್ಯ ಮಾಳಗಿ ಹಾಗೂ ಶ್ರೀಯುತ ಎಸ್.ಆರ್. ಪಾಂಡುರಂಗಿ ಅವರು ಸಂಪಾದನೆ ಮಾಡಿ ಹೊರತರುತ್ತಿರುವುದು ಸಂತಸದ ಸಂಗತಿ.

ಪಂ|| ಮಾಳಗಿ ರಾಮಾಚಾರ್ಯರು ಪರಮಪೂಜ್ಯ ಪೇಜಾವರ ಶ್ರೀಪಾದರಲ್ಲಿ ಅಧ್ಯಯನ ಮಾಡಿದ ಹಿರಿಯ ವಿದ್ವಾಂಸರು. ಮೂರು-ನಾಲ್ಕು ದಶಕಗಳವರೆಗೆ Mysore Oriental Research Instituteನಲ್ಲಿ ಉಪನಿರ್ದೇಶಕರಾಗಿ ಕಾರ್ಯನಿರ್ವಹಿಸಿದ ಅನುಭವಿಗಳು. ಅನೇಕ ಕೃತಿಗಳನ್ನು ಸಂಪಾದನೆ ಮಾಡಿ ಹೊರತಂದಿದ್ದಾರೆ. ಈಗಲೂ ದ್ವೈತವೇದಾಂತ ಅಧ್ಯಯನ ಮತ್ತು ಸಂಶೋಧನ, ಪ್ರತಿಷ್ಠಾನದಲ್ಲಿ ಸಂಶೋಧಕರಾಗಿ ಕಾರ್ಯನಿರ್ವಹಿಸುತ್ತಿದ್ದಾರೆ.

ಶ್ರೀಯುತ ಎಸ್.ಆರ್. ಪಾಂಡುರಂಗಿ ಅವರು ಸುಮಾರು ಎರಡು ದಶಕಗಳಿಂದ ಪ್ರೊ.ಕೆ.ಟಿ. ಪಾಂಡುರಂಗಿ ಅವರ ಒಡನಾಟದಲ್ಲಿದ್ದು ದ್ವೈತವೇದಾಂತ ಅಧ್ಯಯನ ಮತ್ತು ಸಂಶೋಧನ ಪ್ರತಿಷ್ಠಾನದ ಖಜಾಂಚಿಯಾಗಿ ಸಂಸ್ಥೆಯ ಎಲ್ಲ ಕಾರ್ಯಗಳಲ್ಲಿ ಕೆ.ಟಿ. ಪಾಂಡುರಂಗಿ ಅವರಿಗೆ ಸಹಾಯಕರಾಗಿ ಕಾರ್ಯನಿರ್ವಹಿಸಿದವರು. ಪ್ರತಿಷ್ಠಾನದ ಎಲ್ಲ ಕಾರ್ಯಗಳಲ್ಲಿ ಇಂದಿಗೂ ಸಕ್ರಿಯರಾಗಿ ಭಾಗವಹಿಸಿ ಸಂಸ್ಥೆಯ ಏಳ್ಗೆಗಾಗಿ ಶ್ರಮಿಸುತ್ತಿರುವವರು. ಸಂಗ್ರಹರಾಮಾಯಣದ ಸಂಪಾದನೆ ಮಾಡಿ ವಾರಾಣಸಿಯ ಸಂಪೂರ್ಣಾನಂದ ವಿಶ್ವವಿದ್ಯಾಲಯದಿಂದ ಡಾಕ್ಟರೇಟ್‌ಪದವಿ ಪಡೆದಿದ್ದಾರೆ. ಇವರಿಬ್ಬರಿಂದ ಇನ್ನೂ ಹೆಚ್ಚಿನ ಕೃತಿಗಳು ಹೊರಬರಲಿ ಎಂಬುದಾಗಿ ಭಗವಂತನಲ್ಲಿ ಪ್ರಾರ್ಥಿಸುತ್ತೇನೆ.

ಡಾ|| ಸತ್ಯಧ್ಯಾನಾಚಾರ್ಯ ಕಟ್ಟಿ
*ನಿರ್ದೇಶಕರು*
ವಿದ್ಯಾಧೀಶಸ್ನಾತಕೋತ್ತರಸಂಸ್ಕೃತಶೋಧಕೇಂದ್ರ

# प्रस्तावना

महदिदं प्रमोदस्थानं यत् व्याख्यानचतुष्टयोपेतं श्रीविष्णुसहस्रनामस्तोत्रं द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानद्वारा प्राकाश्यं नीयत इति ।

सन्ति हि बहूनि ईदृशानि सहस्रनामस्तोत्राणि वासुदेवसहस्रनामस्तोत्रम्, नरसिंहसहस्रनामस्तोत्रम्, शिवसहस्रनामस्तोत्रम्, ललितासहस्रनामस्तोत्रम्, गणेशसहस्रनामस्तोत्रम् इत्येवमादीनि । तथापि "सहस्रनामस्तोत्रम्" इति शब्दश्रवणे विष्णुसहस्रनामस्तोत्रमेव स्मृतिपटलमारोहति, यथा अनेकासु गीतासु, सत्स्वपि 'गीता' इति शब्दश्रवणे 'भगवद्गीता' एव स्मृतिपटल-मारोहति, यथा च अनेकेषु सूत्रेषु विद्यमानेष्वपि 'सूत्रम्' इति शब्दश्रवणे ब्रह्मसूत्रमेव स्मृतिपटलमारोहति ।

**'निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।**
**यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात्' ॥**

इति प्रमाणानुसारेण यथा 'व्यासः' इति शब्दश्रवणे वेदव्यास एव सर्वैरपि परिगृह्यते । तथा अन्येषु सूत्रेषु सम्भवत्स्वपि "सूत्रम्" इति शब्दश्रवणे ब्रह्मसूत्राण्येव सर्वैरपि स्वीक्रियन्ते । एवमेव सहस्रनामशब्दश्रवणे विष्णु-सहस्रनामान्येव स्वीक्रियन्ते । न त्वन्यानि सहस्रनामानि ।

अस्ति च तत्र कारणम् । विष्णोः सहस्रनामान्येव पुराणेषु बहुधा पठन्ति । तेषु मुख्यतः सर्वत्र सर्वाधिकतया प्रथितानि महाभारते ग्रथितानि च । विष्णुसहस्रनाम्नां आर्षपरम्परास्ति । अपौरुषेयवैदिकपरम्परा वर्तते । अत्र विद्यमानस्य एकैकस्यपि नाम्नः वेदमूलतास्ति । समस्तवेदवेदान्ताध्ययनवता श्रीभीष्माचार्येण उपदिष्टानि युधिष्ठिरं प्रति । अत एवैषां वैदिकता सिद्ध्यति । एषां नाम्नां श्रीवेदव्यास एव ऋषिः । स तु वेदविभागकरणात् वेदव्यास इति सार्थकनाम धत्ते । समग्रवेदवेत्ता च व्यासः । तादृशवेदव्यासमुखारविन्दात् निस्सृतानि विष्णुसहस्रनामानि कथं वैदिकतां न व्रजेयुः? 'महाभारतं पञ्चमो

वेदानां वेदः' इति वचनानुसारेण वेदसमानमहाभारते अन्तर्गतानि विष्णुसहस्रनामानि महाभारतसारत्वात् वेदसंवादीनीत्यत्र न संशीतिः ।

**विष्णुसहस्रनामस्तोत्रं भगवद्गीतासमानम्–**

**''शास्त्रेषु भारतं सारं तत्र नामसहस्रकम् ।**
**वैष्णवं कृष्णगीता च तज्ज्ञानात् मुच्यतेऽञ्जसा'' ॥**

श्रीमदानन्दतीर्थभगवत्पादैः भगवद्गीतातात्पर्यपीठिकायां उदाहृतः ब्रह्माण्ड-पुराणान्तर्गतोऽयं श्लोकः । अत्र च श्लोके सकलशास्त्रेषु मध्ये भारतं सारभूतम् । तत्रापि भारते विष्णोः नामसहस्रम्, भगवद्गीता च सारभूतम् इति, श्रीकृष्णमुखारविन्दात् निस्सृता श्रीभगवद्गीता, श्रीभीष्माचार्यमुखकमला-न्निस्सृतं विष्णुसहस्रनामस्तोत्रं च महाभारतसारभूतं तयोः समीचीनतया ज्ञानात् साधकः मोक्षं प्राप्नोतीति, महाभारतसारभूतयोः गीतासहस्रनाम्नोः साम्यता प्रतिपादिता ।

भगवद्गीता विष्णोः पुरुषोत्तमत्वं प्रतिपादयति । विष्णुसहस्रनामानि तु विष्णोः गुणपूर्णतां वर्णयन्ति । सहस्रनामसु मध्ये एकैकमपि नाम भगवतः शतगुणान् प्रतिपादयति ।

'यदेकमव्यक्तमनन्तरूपम्' इति उपनिषत् भगवतः विष्णोः अनन्तानि रूपाणि प्रतिपादयति । तेषु अनन्तरूपेषु मध्ये विश्वादिसहस्रनाम्नां व्यूहः विष्णुसहस्रनामभिः प्रतिपाद्यते । 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतिः परमात्मनः एकत्वं वदति । परमात्मनः एकत्वेऽपि तस्य रूपाण्यनन्तानि वर्तन्ते । अयमेव तस्य अचिन्त्यशक्तेः द्योतकः ।

एक एव नारायणः भेदप्रतिनिधिविशेषबलात् अनन्तरूपवान् निर्दोषानन्त-कल्याणगुणपरिपूर्णश्च भवति ।

**''परमात्मने सततमेकरूपिणे दशरूपिणे शतसहस्ररूपिणे ।**
**अविकारिणे स्फुटमनन्तरूपिणे सुखचित्समस्ततनवे नमो नमः ॥''**
(सुमध्वविजयः ८-४१)

अत्र श्लोके भगवतः अनेकरूपवत्वं सुष्ठु प्रतिपादितम्, श्रीनारायणपण्डिताचार्यैः । तथा च अनेकरूपेषु मध्ये सहस्ररूपाणि एभिः सहस्रनामभिः कीर्त्यन्ते ।

**''भारतं सर्वशास्त्रेषु भारते गीतिका वरा ।**
**विष्णोः सहस्रनामापि ज्ञेयं पाठ्यं च तद्वयम्'' ॥**

श्रीमन्मध्वाचार्यैः भगवद्गीताभाष्यपीठिकायाम् उदाहृतोऽयं महाकौर्मपुराणान्तर्गतो श्लोकः । भारतं सकलशास्त्रोत्तमम् । भारतेऽपि श्रीकृष्णगीता श्रीविष्णुसहस्रनाम च उत्तमे । अतः तयोः ज्ञानं तयोः पाठश्च सर्वैरपि साधकैः सम्पादनीयः इति नामसहस्रस्य प्रशंसात्र कृता ।

**विष्णुसहस्रनामोपदेष्टा श्रीकृष्णः**

सर्वैरपि साधकैः विष्णुसहस्रनाम्नः ज्ञानं सम्पादनीयमित्युक्तम् । तस्य नामसमूहस्य उपदेष्टा कः? इति इदानीं चिन्त्यते ।

विष्णुसहस्रनामप्रस्तावे ''भीष्म उवाच'' इति, अन्तेऽपि ''भीष्मयुधिष्ठिरसंवादे'' इति विद्यमानत्वात् विष्णुसहस्रनाम्नां उपदेष्टा कुरुकुलपितामहः भीष्मः इति सर्वैरपि विदितविषय एव । तथापि विष्णुसहस्रनाम्नां मुख्योपदेशकः कृष्ण एव न तु भीष्मः । यथा श्रीकृष्णः भगवद्गीतां अर्जुनं प्रति साक्षादुपदिदेश न तथात्र श्रीकृष्णः युधिष्ठिरं प्रति साक्षादुपदिदेश किन्तु भीष्मान्तर्गतस्सन्नुपदिदेश इत्येव विशेषः । तथा च 'भीष्म उवाच' इत्यस्य भीष्मस्थः कृष्णः उवाच इत्यर्थः । 'भीष्मयुधिष्ठिरसंवादे' इत्यत्रापि भीष्मस्थितकृष्णयुधिष्ठिरसंवादे इत्येवार्थः । तथाहि–

महाभारतयुद्धानन्तरं प्राप्तं हस्तिनावतिराज्यसिंहासनं धर्मसम्मतं न वा इति संशयवन्तं युधिष्ठिरं श्रीकृष्णः शरपञ्जरशायिनः भीष्मस्य समीपं नीत्वा भीष्मं प्रत्युवाच भीष्म! 'युधिष्ठिरं प्रति धर्मोपदेशं कुरु' इति । तदा भीष्मः एवमुक्तवान्–

**''का शक्तिर्मम देवेश पार्थान् बोधयितुं प्रभो''** ।

प्रभो श्रीकृष्ण! भीमादिपार्थान् प्रति उपदेष्टुं मम सामर्थ्यं कथमस्ति? इति । तदा श्रीकृष्ण आह–

**''......त्वत्कीर्त्यै त्वयि संस्थितः ।**
**प्रवक्ष्याम्यखिलान् धर्मान् सूक्ष्मं तत्वमपीति ह''** ॥ इति ।

''भीष्म! लोके तव प्रसिध्यर्थं त्वयि संस्थितः अहमेव अखिलान् धर्मान् सूक्ष्मतत्त्वानि च प्रवक्ष्यामि'' इति । एवमुक्तः श्रीकृष्णः शान्तिपर्वाणि, अनुशासनपर्वणि च विविधतत्त्वानि युधिष्ठिरं प्रति भीष्मद्वारा उपदिदेश । एतच्छ्रुत्वा युधिष्ठिरः

**''को धर्मः सर्वधर्माणां भवतः परमो मतः''** ।

भीष्म (कृष्ण!) सर्वधर्माणां मध्ये त्वदभिमतः परमः धर्मः कः? इति पृच्छति । तदुत्तरतया भीष्मान्तर्गतः श्रीकृष्णः नाम्नां सहस्रं उपदिदेश । एतेन ज्ञायते श्रीकृष्ण एव मुख्यतया तत्त्वोपदेष्टा इति । तथा च श्रीकृष्णः विष्णुसहस्रनामोपदेशसन्दर्भे त्रिविधपात्रं स्वीकृतवान् । १) तत्त्वोपदेशं श्रोतुं युधिष्ठिरादीन् भीष्मसमीपे निनाय । २) भीष्मान्तर्गतस्सन् तत्त्वानि, विष्णुसहस्रनामानि च उपदिदेश । ३) पाण्डवैः सार्धं उपविश्य उपदेशं स्वयमपि श्रुत्वा पाण्डवान् अनुगृहीतवांश्च ।

**पारायणे महत् पुण्यम् ।**

''श्रीविष्णुः सर्वोत्तमः देवः । विष्णुसहस्रनाम च सर्वशास्त्रोत्तमम् । भगवद्गीता श्रीकृष्णमुखात् निस्सृता । विष्णुसहस्रनामानि तु भीष्मान्तर्गत-श्रीकृष्णमुखात् निस्सृतानि ।

विष्णुसहस्रनामसु मध्ये एकैकमपि नाम अन्यूनतया विष्णोः शतगुणान् वक्ति । एकवारं विष्णुसहस्रनामस्तोत्रपारायणे विष्णोः लक्षगुणचिन्तनं भवति । प्रतिदिनं त्रिवारपठने, लक्षत्रयगुणचिन्तनं भवति । तथा च अविच्छिन्नतया वर्षपर्यन्तपारायणकरणे (१x३x३६०) १० कोटि ८० लक्षगुणचिन्तनं भवति । अर्थाननुसन्धानपूर्वकपारायणापेक्षया अर्थानुसन्धानपूर्वकं पारायणं अधिकपुण्य-प्रापकमित्यत्र न संशयः ॥'' इति परमपूज्याः विद्यामान्यतीर्थाः ।

## प्रतिपदं शतं अर्थाः

विष्णुसहस्रनामान्तर्गतप्रतिनाम्नः शतं अर्थाः इत्यत्र किं प्रमाणम् ? इति चेत् सुमध्वविजय एव प्रमाणम् । तथाहि–

श्रीमन्मध्वाचार्यः कासरगोडु समीपे कस्मिंश्चित् ग्रामे यदा अवसत् । तदा एका विद्वत्सभा प्राचलत् । अनेके विद्वांसः तत्र सम्मिलिताः । तत्र अनेके वेदार्थविचारे चर्चायां निमग्नाः । तदा श्रीमदाचार्याः नूतनमेकं प्रमेयं आविश्चक्रुः ।

**''त्रयोर्थाः सर्ववेदेषु दशार्थाः सर्वभारते ।**
**विष्णोः सहस्रनामापि निरन्तरशतार्थकम्''** ॥ इति ।

सर्वोऽपि वेदः त्र्यर्थः । समग्रं भारतं दशार्थम् । विष्णोः सहस्रनामानि शतार्थानि । इति । तच्छ्रुत्वा आश्चर्यचकिता आचार्याभिप्रायं असहमाना विद्वांसः– 'अप्रामाणिकोऽयं विचारः यदि एकैकस्यापि नाम्नः शतार्थाः विद्येरन् तर्हि उच्यताम् । न हि प्रतिज्ञामात्रेण वस्तुसिद्धिः'' इत्यवदन् । तद्वचनमाकर्ण्य श्रीमदाचार्याः आद्यनाम्नः 'विश्वं' इत्यस्य अर्थान् वक्तुम् आरभन्त । कतिपयानर्थान् उक्त्वा आचार्याः– ''एतावत्पर्यन्तं मया यदुक्तं तदनूद्यताम् एनकेनापि विदुषा'' इत्यब्रुवन् । न कोऽपि विद्वान् आचार्योक्त-मनूदितुं शक्तवान् । तदा आचार्यः एते अर्थाः एव भवद्भिः गृहीतुं न शक्यन्ते । किमुत शतार्थाः इत्युक्त्वा हास्यं चक्रुः । अयं च विषयः सुमध्वविचये षष्ठसर्गे चतुर्थश्लोकादारभ्य दशमश्लोकपर्यन्तं उपवर्णितः नारायणपण्डिताचार्यैः ।

## पुनरुक्तिपरिहारः

एतेषु सहस्रनामसु मध्ये, अनघः, अनन्तः, अनलः, अनिलः, इत्यादीनि अनेकानि नामानि द्विरुक्तानि । अच्युतः, अजः, प्राणः, इत्यादीनि अनेकानि नामानि त्रिरुक्तानि । प्राणदः, श्रीमान् इति नामद्वयं चतुर्वार-मागतम् । सहस्रसङ्ख्याकानि नामानि प्रत्येकतया भवितव्यानि । एकस्यैव नाम्नः पुनः पुनः पठने सहस्रनामत्वं कथम् । तथा च पुनरुक्तिः इति चेत् ।

तत्र व्याख्याकारैः एवं परिहारः सूचितः । एकस्यैव नाम्नः अनेकार्थ-सद्भावात्, अनेकार्थसद्भावे प्रमाणसद्भावाच्च नाम्नां पुनरुच्चारणं कृतम् । तथा च न पुनरुक्तिः इति ।

अस्याः पुनरुक्तिसमस्यायाः परिहारः श्रीमन्मध्वाचार्यैः एवं सूचितः । एतानि सहस्रनामानि न एकस्यैव भगवद्रूपस्य नामानि । यथा एकस्यैव कृष्णरूपस्य कृष्णाष्टोत्तरशतनामानि एवं एकस्यैव विष्णुरूपस्य एतानि सहस्रनामानि न भवन्ति । तथा सति पुनरुक्तता स्यात् किन्तु भगवतः विष्णोः विद्यमानानां सहस्ररूपाणां सहस्रनामानि । तथा च न पुनरुक्तिः । विष्णोः सहस्ररूपाणां मध्ये एकनामभाञ्जि यदि अनेकानि रूपाणि वर्तन्ते तदा तानि तेनैव नाम्ना वक्तव्यानि खलु । यथा भार्गवरामः, दशरथरामः, उभावपि रामनामानौ किन्तु रूपे अन्ये, भार्गवरामरूपमन्यत्, दशरथराम-रूपमन्यत् तथा च तयोः रूपयोः नामनिर्देशे 'रामः' 'रामः' इत्येव वक्तव्यं न तावता पुनरुक्तिः इति ।

## विष्णुसहस्रनामानि बृहतीसहस्रं च

पङ्क्तिछन्दः, उष्णिक् छन्दः, अनुष्टुप् छन्दः, गायत्रीछन्दः, बृहतीछन्दः इति सन्ति हि अनेकानि वैदिकछन्दांसि । तत्र यत्र मन्त्रे षट्त्रिंशत् स्वराक्षराणि षट्त्रिंशत् व्यञ्जनाक्षराणि, आहत्य द्वासप्ततिसङ्ख्याकानि अक्षराणि वर्तन्ते सः मन्त्रः बृहतीछन्दस्कः इति कीर्त्यते । ऋग्वेदे

विद्यमानानां तादृशबृहतीछन्दस्कानां सहस्रसङ्ख्याकानां मन्त्राणां समूहः एव बृहतीसहस्रं इत्याक्रियते । तादृशबृहतीछन्दस्कः एकः मन्त्रः विष्णुसहस्रनामसु मध्ये एकस्य नाम्नः विवरणरूपः । तथा च सहस्रनामानि बृहतीसहस्रे विद्यमानैः सहस्रसङ्ख्याकैः मन्त्रैः व्याक्रियन्ते ।

## भगवति नाम्नां समन्वयः

विष्णुसहस्रनामसु मध्ये सामान्यरूढ्या देवतावाचकानि हिरण्यगर्भः, शतानन्दः, रुद्रः, स्कन्दः इन्द्रः भीमः इत्यादीनि नामानि प्रविष्टानि । तथा इतरपदार्थवाचकानि औषधम्, भेषजम्, अन्नं, कालः, दमः, प्रणवः, अश्वत्थः इत्यादिनामानि प्रविष्टानि । क्रियावाचकानि सामान्यतः प्रसिद्धानि यज्ञः, स्तुतिः, भोजनं, कृतिः, इत्यादिनामानि सन्ति । क्रियावत्सु प्रसिद्धानि, यज्वा, वैद्यः, भिषक्, भोक्ता, स्तोता, ग्रामणीः, इत्यादिनामानि अन्तर्भूतानि । तथा च एतेषां नाम्नां अन्यत्र प्रसिद्धत्वात् भगवद्वाचकत्वं कथम्? इति चेत् ।

इत्थम् । विद्वद्रूढिः अविद्वद्रूढिः इति रूढिवृत्तिः द्विविधा । पूर्वोक्तानि सर्वाणि नामान्यपि अविद्वद्रूढ्या अन्यत्र प्रसिद्धान्यपि विद्वद्रूढ्या भगवति विष्णावेव प्रसिद्धानि ।

**एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः ।**

-ऋग्वेदः १-१६४-४६

अग्निसूक्तं, वरुणसूक्तं, वायुसूक्तं इति सामान्यतः अन्यदेवतावाचका अपि मन्त्राः निर्दुष्टं एकमेव भगवन्तं अग्निः, यमः, वरुणः, वायुः इत्यादि अन्यान्यनामभिः प्रतिपादयन्ति इति विद्वद्रूढिमाश्रित्यैव ऋग्वेदे समर्थितम् ।

## लिङ्गवचनानां समन्वयः

विष्णुसहस्रनामस्तोत्रे, विष्णुः वषट्कारः, पूतात्मा, परमात्मा इत्यादि-पुल्लिङ्गशब्दवत्, कृतिः, निष्ठा, सत्ता, लक्ष्मीः सिद्धिः, स्तुतिः इत्यादयः

स्त्रीलिङ्गशब्दाः, एवं विश्वं, अक्षरम्, भेषजम्, औषधम्, करणम्, कारणम्, किम्, तत् इत्यादिनपुंसकलिङ्गशब्दाः अपि सर्तन्ते । तथा च पुरुषस्य विष्णोः स्त्रीलिङ्गशब्दवाच्यत्वं नपुंसकलिङ्गशब्दवाच्यत्वं च कथं वा युज्यते? इति चेत् इत्थम् –

संस्कृतभाषायां शब्दानामेव प्रत्येकतया पुल्लिङ्गस्त्रीलिङ्गनपुंसकलिङ्गत्वं अङ्गीकृतम् । न तु अर्थानुगुण्येन शब्दानां लिङ्गनिर्णयः । अयं मम मित्रम् इति प्रयोगे मित्रशब्दः नित्यनपुंसकलिङ्गः न तावता मित्रशब्दार्थभूतः पुरुषः नपुंसकः । श्रीमन्मध्वाचार्याः ऐतरेयोपनिषद्भाष्ये– "न च रक्ष इति नपुंसकशब्दमात्रेण रावणादयो नपुंसका भवन्ति" । रक्षश्शब्दः नित्यनपुंसकलिङ्गः न तावता तच्छब्दवाच्या रावणादयो राक्षसाः नपुंसका भवन्ति । इति समर्थितवन्तः । तथा च भगवतः विष्णोः परमपुरुषत्वेऽपि स्त्रीलिङ्गनपुंसकलिङ्गनामप्रतिपाद्यत्वं युज्यते एव ।

अपि च– **स्त्रीगुणाः पुङ्गुणाश्चैव नपुंसकगुणा अपि ।**
**यदधीना व्यत्ययः स्यात् लिङ्गानां तत्र सर्वशः ।**
**कः किं कं तत् सर्वमात्माऽदितिर्देवादयस्ततः ॥**

बृहदारण्यकोपनिषद्भाष्यम् ७-३-३

स्त्रीगुणाः पुरुषगुणाः नपुंसकपदार्थगुणाश्च भगवदधीनाः इति हेतोः भगवद्वाचकशब्देषु लिङ्गव्यत्यसाः भवन्ति । अत एव कः, किं तत्, सर्वं, आत्मा, अदितिः इत्यादयः विविधलिङ्गशब्दा अपि भगवद्वाचका भवन्ति इति बृहदारण्यकोपनिषद्भाष्ये श्रीमदाचार्यैः प्रतिपादितम् ।

अपि च "भगवान् परमपुरुषः तथापि तस्य पुरुषाकार इव स्त्रीरूपमपि वर्तते अत एव सः पुल्लिङ्गशब्दैः स्त्रीलिङ्गशब्दैश्च वाच्यो भवति ।" इत्यर्थप्रतिपादकगरुडपुराणवाक्योदाहरणपूर्वकं श्रीमदाचार्याः ऐतरेयोपनिषद्भाष्ये भगवतः उभयलिङ्गशब्दवाच्यत्वं समर्थितवन्तः ।

**"स्त्रीरूपश्चैव पुंरूपः यस्मान्नारायणः स्थितः ।**
**पुमान् स्त्री चेति वाच्योऽसौ वैलक्षण्यान्न चोच्यते" ॥**
(गरुडपुराणम्) ऐतरेयोपनिषद्भाष्यम् २-२-७-४

अपि च– **"विष्णोर्नपुंसकाकारो नैवास्ति क्वचन प्रभो ।**
**तथाप्यरागाकृष्टत्वात् तच्छब्दैरपि कथ्यते ॥"** -गरुडपुराणम्

भगवतः नारायणस्य नपुंसकरूपं नास्ति, तथापि स्त्रीषु विद्यमाना या पुरुषाकर्षणशक्तिः तथा पुरुषेषु विद्यमाना या स्त्र्याकर्षणशक्तिः, तौ एव स्त्रीपुरुषेषु विद्यमानौ दोषौ, तौ दोषौ भगवति न स्तः । तथा च स्त्रीपुरुष-विलक्षणत्वात् सः नपुंसकशब्दैरपि वाच्यो भवतीति गरुडपुराणे उक्तम् ।

तथा च नारायणः पूर्वोक्तैः प्रमाणैः न केवलं पुल्लिङ्गनामवाच्यः किन्तु स्त्रीलिङ्गनपुंसकलिङ्गनामभिरपि वाच्यः इति सिद्ध्यति ।

अपि च एकस्मिन्नेव भगवति बहुवचनशब्दप्रयोगोऽपि युज्यते । यथा "सर्वाणि" "भूतानि" इत्यादि । तत्कथमिति चेत् इत्थम्– श्रीमदाचार्यैः ऐतरेयोपनिषद्भाष्ये ब्रह्माण्डपुराणवाक्यमुदाहृत्य–

**"सर्वाणि बहुरूपत्वात् सर्वरूपेषु पूर्तितः ।**
**प्रभूतत्वात् भूतनामा सर्वरूपप्रभुत्वतः ।**
**बहुरूपः स भूतानीत्युक्तो विष्णुः सनातनः" ॥**
(ब्रह्माण्डपुराणम्)

विष्णोः बहुरूपवत्वात् सर्वेषामपि रूपाणां गुणपूर्णत्वात् 'सर्वाणि' सर्वेषां रूपाणां प्रभुत्वात्, गुणसमृद्धत्वाच्च स एवं "भूतानि" इति बहुवचननाम-वाच्यः इति प्रतिपादितम् ।

**ग्रन्थसम्पादनम्**

अत्र चत्वारि विष्णुसहस्रनामव्याख्यानानि संयोजितानि ।

१) आद्या श्रीश्रीजयतीर्थपूज्यपादशिष्येण श्रीश्रीविद्याधिराजश्रीपादैः रचिता विष्णुसहस्रनामनिरुक्तिः ।

२) द्वितीया श्रीश्रीरघुनाथतीर्थपूज्यपादेन विरचितबृहतीसहस्रव्याख्यानात् तत्त्वसारात् उद्धृता विष्णुसहस्रनामस्तोत्रव्याख्या ।

३) तृतीया श्रीश्रीसत्यसन्धतीर्थपूज्यपादविरचितं विष्णुसहस्रनामभाष्यम् ।

४) चतुर्थम् श्रीपाङ्गरि श्रीनिवासाचार्येण विरचितम् विष्णुसहस्रनाम-व्याख्यानम् ।

## सङ्केताक्षराणि

सकलविष्णुसहस्रनामव्याख्यानारम्भे सङ्केताक्षराणि प्रदत्तानि । तेषामक्षराणां विवरणमत्र लिख्यते ।

१. श्रीमज्जयतीर्थशिष्यश्रीविद्याधिराजतीर्थकृतायाः व्याख्यायाः **'वि'** इति सङ्केताक्षरं प्रदत्तम् ।

२. श्रीरघुनाथतीर्थविरचितायाः व्याख्यायाः **'र'** इति सङ्केताक्षरं प्रदत्तम् ।

३. श्रीसत्यसन्धतीर्थकृतायाः व्याख्यायाः **'स'** इति सङ्केताक्षरं प्रदत्तम् ।

४. श्रीपाङ्गरि श्रीनिवासाचार्यविरचितस्य व्याख्यानस्य **'श्री'** इति सङ्केताक्षरं प्रदत्तम् ।

एतेषां व्याख्यानानां प्राचीनानि शिथिलानि जीर्णानि मुद्रितपुस्तकानि सङ्गृह्य तानि प्रत्येकं विलिख्य तत्रत्यमुद्रणदोषान् विमृश्य, आधुनिकग्रन्थ-सम्पादननियमानुसारेण संशोध्य मुद्रणप्रतिं सम्पाद्य मुद्रणालयं प्रति प्रेषितम् ।

व्याख्याकाराणां कालानुसारेण तेषां व्याख्यानानि अत्र संयोजितानि । नाम्नां पदच्छेदविषये व्याख्याकर्तॄणां अभिप्रायभेदः वर्तते । सः विषयः तत्र तत्र प्रदर्शितः । नाम्नां सङ्ख्याविषयेऽपि व्याख्याकर्तॄणामभिप्रायभेदः वर्तते । सोऽपि तत्र तत्र उट्टङ्कितः ।

श्रीविद्याधिराजतीर्थाः (१३८८-१३९२) श्रीमज्जयतीर्थानां शिष्याः । श्रीरघुनाथतीर्थाः (१७००-१७५५) श्रीव्यासराजमठपरम्परायां प्रथिताः शेषचन्द्रिकाकारा इति च प्रख्याताः । श्रीसत्यसन्धतीर्थाः (१७८३-१७९४) श्रीमदुत्तरादिमठपरम्परायां प्रसिद्धाः अधुना महिषीक्षेत्रे बृन्दावने विराजन्ते । श्री पाङ्गरीश्रीनिवासाचार्याः अष्टादश शततमवकालीनाः ।

श्रीविद्याधिराजतीर्थाः विष्णुसहस्रनामपीठिकारूपस्य ''श्रीवैशम्पायन उवाच'' इत्यादिभागस्य तथा अन्तिमफलश्रुतिरूपस्य ''इतीदं कीर्तनीयस्य'' इत्यादिभागस्य च व्याख्यानं कृतवन्तः ।

श्रीसत्यसन्धतीर्थास्तु फलश्रुतिं व्याख्यातवन्तः । चत्वारः अपि विष्णुसहस्रनाम्नां प्रतिनाम पाण्डित्यपूर्णतया हृदयङ्गमतया च व्याख्यातवन्तः ।

व्याख्यानविशेषं सहृदयाः ग्रन्थाध्ययनेनैव जानन्तीति अत्र न लिख्यते ।

## कृतज्ञतासमर्पणम्

श्रीविष्णुसहस्रनामप्रतिपाद्याय अनन्तरूपाय भगवते नारायणाय तथा महाभारतकर्त्रे वेदव्यासाय अनन्तानि नमांसि समर्पयामि ।

विष्णुसहस्रनाममाहात्म्यकथनपूर्वकं प्रतिनाम्नः शतं अर्थान् वक्तृभ्यः श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यः भूयांसि नमांसि समर्पयामि ।

विष्णुसहस्रनामव्याख्यातृभ्यः सर्वेभ्य अनन्तानि नमांसि अर्पये ।

अस्मान् शुभाशीर्वचनैः तथा अनुग्रहसन्देशदानेन च अनुगृहीतवद्भ्यः **द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानस्य संरक्षकेभ्यः, तथा मार्गदर्शकेभ्यः श्रीमदुत्तरादिमठाधीशेभ्यः श्रीसत्यात्मतीर्थश्रीपादेभ्यः** साष्टाङ्गं भूयासिं नमांसि समर्पयामि ।

ग्रन्थमिमं सम्पादितुं सदवकाशं दत्तवद्भ्यः **प्रतिष्ठानस्य गौरवाध्यक्षेभ्यः** तथा **गौरवनिर्देशकेभ्यः, प्रो. के.टि. पाण्डुरङ्गि** महाभागेभ्यः ''महामहोपाध्यायः'' इति प्रशस्तिभाग्भ्यः, शताधिकग्रन्थसम्पादकेभ्यः,

प्रथितविद्वद्भ्यः, अनेकपीठाधिपतिभिः सम्मानितेभ्यः, राष्ट्रपतिप्रशस्ति-भाग्भ्यः । भूयांसि नमांसि अर्पये ।

द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानस्य इदानीन्तन-अध्यक्षेभ्यः तथा गौरव-निर्देशकेभ्यः सदा पाठप्रवचनशीलेभ्यः श्रीजयतीर्थविद्यापीठस्य प्राचार्येभ्यः जनानुरागिभ्यः डा. सत्यध्यानाचार्य कट्टी महाभागेभ्यः हार्दानि वन्दनानि अर्पये ।

ग्रन्थस्यास्य सम्पादनकर्मणि अत्युत्साहप्रदर्शनपूर्वकं सश्रद्धं सहकृतवन्तं सदा कार्यशीलं परोपकारिणं डा. एस्.आर्. पाण्डुरङ्गि महाभागं श्रीहरिवायु-गुरवः विशेषतया अनुगृह्णन्तु इति आशासे ।

ग्रन्थमिममधीत्य सहृदयाः सन्तोषं प्राप्नुयुश्चेत् सफलोऽयं परिश्रम इत्युक्त्वा विरमामि ।

इति सुधीविधेयः

**रामाचार्य माळगी**

# ಮೊದಲಮಾತು

## ಶ್ರೀವಿಷ್ಣುಸಹಸ್ರನಾಮಸ್ತೋತ್ರ

ವಿಷ್ಣುಸಹಸ್ರನಾಮಸ್ತೋತ್ರವು ''ಮಂತ್ರರಾಜ''ವೆಂದು ಪ್ರಸಿದ್ಧವಾಗಿದೆ. ಸಕಲ-ಶಾಸ್ತ್ರಗಳ ಸಾರಸರ್ವಸ್ವ ಇದರಲ್ಲಿ ತುಂಬಿತುಳುಕಿದೆ. ''ವಿಷ್ಣುಸಹಸ್ರನಾಮ-ಸ್ತೋತ್ರ''ವನ್ನು ಅಖಂಡವಾಗಿ ಅಧ್ಯಯನ ಮಾಡಿದರೆ ಭಗವಂತನ ಸಾವಿರ ರೂಪಗಳ ಅಪೂರ್ವ ಚಿಂತನೆ ಮಾಡಿದಂತೆ ಆಗುತ್ತದೆ.

**ಶಾಸ್ತ್ರೇಷು ಭಾರತಂ ಸಾರಂ ತತ್ರ ನಾಮಸಹಸ್ರಕಮ್ ।**
**ವೈಷ್ಣವಂ ಕೃಷ್ಣಗೀತಾ ಚ ತಜ್ಜ್ಞಾನಾತ್ ಮುಚ್ಯತೇಽಂಜಸಾ ॥**

''ಸಕಲಶಾಸ್ತ್ರಗಳಲ್ಲಿ ಮಹಾಭಾರತವು ಶ್ರೇಷ್ಠವಾದುದು. ಅದರಲ್ಲೂ ವಿಷ್ಣುಸಹಸ್ರನಾಮ ಮತ್ತು ಶ್ರೀಕೃಷ್ಣನು ಉಪದೇಶಿಸಿದ ಗೀತೆಯು ಸಾರಭೂತ-ವಾದುವುಗಳು. ಅವುಗಳನ್ನು ಚೆನ್ನಾಗಿ ತಿಳಿಯುವುದರಿಂದ ನಿಶ್ಚಿತವಾಗಿ ಮೋಕ್ಷ-ವಾಗುವುದು'' ಎಂಬುದಾಗಿ ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರು **ಗೀತಾತಾತ್ಪರ್ಯದಲ್ಲಿ** **ಬ್ರಹ್ಮಾಂಡಪುರಾಣದ** ವಾಕ್ಯವನ್ನು ಉದಾಹರಿಸಿ ವಿಷ್ಣುಸಹಸ್ರನಾಮ ಮತ್ತು ಭಗವದ್ಗೀತೆಯ ಮಹತ್ವವನ್ನು ತಿಳಿಸಿಕೊಟ್ಟಿದ್ದಾರೆ.

ವಿಷ್ಣುಸಹಸ್ರನಾಮದಲ್ಲಿ ಬರುವ ಒಂದೊಂದು ನಾಮವು ವಿಷ್ಣುವಿನ ಕನಿಷ್ಠ ನೂರು ಅರ್ಥಗಳನ್ನು (ಭಗವಂತನ ಗುಣಗಳನ್ನು) ಹೇಳುತ್ತದೆ ಎಂಬುದಾಗಿ ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರು **ಋಗ್‌ಭಾಷ್ಯದಲ್ಲಿ ಸ್ಕಂದಪುರಾಣದ** ವಚನವನ್ನು ಉಲ್ಲೇಖಿಸಿ ವಿಷ್ಣುಸಹಸ್ರನಾಮದ ಹಿರಿಮೆಯನ್ನು ಸಾರಿದ್ದಾರೆ.

**''ವಿಷ್ಣೋಃ ಸಹಸ್ರನಾಮಾಪಿ ನಿರಂತರಶತಾರ್ಥಕಮ್'' ।**

ಸಕಲಧರ್ಮಗಳನ್ನು ಭೀಷ್ಮರಿಂದ ಕೇಳಿದ ಧರ್ಮರಾಜನು ಕೊನೆಯಲ್ಲಿ–

**''ಕಿಂ ಜಪನ್ ಮುಚ್ಯತೇ ಜಂತುಃ ಜನ್ಮಸಂಸಾರಬಂಧನಾತ್'' ।**

ಯಾವುದನ್ನು ಜಪಿಸಿದರೆ ಮನುಷ್ಯನು ಸಂಸಾರಬಂಧನದಿಂದ ಬಿಡುಗಡೆ ಹೊಂದುವನು ಎಂಬ ಪ್ರಶ್ನೆಗೆ, ಭೀಷ್ಮರು–

**''ವಿಷ್ಣೋರ್ನಾಮಸಹಸ್ರಂ ಮೇ ಶೃಣು ಪಾಪಭಯಾಪಹಮ್'' ।**

ಸರ್ವೋತ್ತಮನಾದ ವಿಷ್ಣುವಿನ ಸಹಸ್ರನಾಮಗಳನ್ನು ಕೇಳು. ಅವನ ಅನುಗ್ರಹದಿಂದ

ಎಲ್ಲ ಪಾಪಗಳು ನಾಶವಾಗುತ್ತವೆ ಮತ್ತು ಭಯಗಳು ದೂರವಾಗುತ್ತವೆ ಎಂಬುದಾಗಿ ಉತ್ತರಿಸಿದ್ದಾರೆ.

"ವಿಷ್ಣುಂ ಸಹಸ್ರಮೂರ್ಧಾನಂ ಚರಾಚರಪತಿಂ ಪ್ರಭುಮ್ ।
ಸ್ತುವನ್ನಾಮಸಹಸ್ರೇಣ ಜ್ವರಾನ್ ಸರ್ವಾನ್ ವ್ಯಪೋಹತಿ ॥"

(ಚರಕಸಂಹಿತಾ)

ಎಂಬ ವಚನದಂತೆ ವಿಷ್ಣುಸಹಸ್ರನಾಮಸ್ತೋತ್ರಕ್ಕೆ ಎಲ್ಲ ವಿಧವಾದ ಜ್ವರಗಳನ್ನು ನಾಶಮಾಡುವ ಶಕ್ತಿ ಇದೆ ಎಂದು ಅರ್ಥವಾಗುವುದು. "ಜ್ವರ ರೋಗೇ" ಎಂಬ ಧಾತುವಿನಿಂದ ನಿಷ್ಪನ್ನ- ವಾಗಿರುವ ಇಲ್ಲಿಯ "ಜ್ವರ" ಎಂಬ ಶಬ್ದಕ್ಕೆ ಎಲ್ಲ ಬಗೆಯ ರೋಗಗಳು ಎಂದು ಅರ್ಥವಿರುವುದರಿಂದ ವಿಷ್ಣುಸಹಸ್ರನಾಮಸ್ತೋತ್ರಕ್ಕೆ ಸರ್ವರೋಗಗಳನ್ನು ನಾಶಮಾಡುವ ಶಕ್ತಿ ಇದೆ ಎಂದು ಸಿದ್ಧವಾಗುವುದು.

ಬೃಹತೀಸಹಸ್ರದ ಋಕ್‌ಗಳು ಶ್ರೀವಿಷ್ಣುಸಹಸ್ರನಾಮದಿಂದ ಪ್ರತಿಪಾದ್ಯಗಳಾದ ಭಗವಂತನ ಸಾವಿರ ರೂಪಗಳನ್ನು ಪ್ರತ್ಯೇಕವಾಗಿ ಪ್ರತಿಪಾದಿಸುತ್ತವೆ. ಬೃಹತೀ-ಸಹಸ್ರದ ಪ್ರತಿಯೊಂದು ಋಕ್ ವಿಷ್ಣುಸಹಸ್ರನಾಮದ ಒಂದೊಂದು ನಾಮವನ್ನು ಬಹಳ ಸುಂದರವಾಗಿ ವರ್ಣಿಸುತ್ತದೆ. ಈ ಚಿಂತನೆಯಿಂದ ಪಾರಾಯಣ ಮಾಡಿದಲ್ಲಿ ಬೃಹತೀಸಹಸ್ರದ ಪಾರಾಯಣ ಮಾಡಿದ ಫಲವೂ ದೊರೆಯುವುದು.

**ವಿಷ್ಣುಸಹಸ್ರನಾಮಸ್ತೋತ್ರದ ಶ್ರವಣ ಮತ್ತು ಪಠನದ ಫಲ–**

ವಿಷ್ಣುಸಹಸ್ರನಾಮದ ಅರ್ಥಗಳನ್ನು ತಿಳಿದು, ಶ್ರದ್ಧಾ-ಭಕ್ತಿಪೂರ್ವಕ ನಿತ್ಯದಲ್ಲಿಯೂ ಪಠನ ಮಾಡುವುದರಿಂದ ಅನೇಕ ಫಲಗಳು ಪ್ರಾಪ್ತವಾಗುವುವು ಎಂಬುದಾಗಿ ಸಹಸ್ರನಾಮದ ಕೊನೆಗೆ ಫಲಸ್ತುತಿಯಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ.

i) ಇಹಲೋಕದಲ್ಲಿ ಮತ್ತು ಪರಲೋಕದಲ್ಲಿ ಸ್ವಲ್ಪವೂ ಅಶುಭವು (ಅನಿಷ್ಟಗಳು) ಉಂಟಾಗುವುದಿಲ್ಲ.

ಯ ಇದಂ ಶೃಣುಯಾನ್ನಿತ್ಯಂ ಯಶ್ಚಾಪಿ ಪರಿಕೀರ್ತಯೇತ್ ।
ನಾಶುಭಂ ಪ್ರಾಪ್ನುಯಾತ್ ಕಿಂಚಿತ್ ಸೋಽಮುತ್ರೇಹ ಚ ಮಾನವಃ ॥

ii) ಚತುರ್ವಿಧ ಪುರುಷಾರ್ಥಗಳು ಪ್ರಾಪ್ತವಾಗುವುವು.

ಧರ್ಮಾರ್ಥೀ ಪ್ರಾಪ್ನುಯಾತ್ ಧರ್ಮಂ.....
......... ಪ್ರಜಾರ್ಥೀ ಪ್ರಾಪ್ನುಯಾತ್ ಪ್ರಜಾಮ್ ॥

iii) ಅಚಲವಾದ ಸಂಪತ್ತು ಮತ್ತು ಉತ್ತಮವಾದ ಶ್ರೇಯಸ್ಸು ಪ್ರಾಪ್ತವಾಗುವುವು.

**ಅಚಲಾಂ ಶ್ರಿಯಮಾಪ್ನೋತಿ ಶ್ರೇಯಃ ಪ್ರಾಪ್ನೋತಿ ಅನುತ್ತಮಮ್ ॥**

iv) ಭಯಗಳಿಂದ ಮುಕ್ತನಾಗುವನು.

**ನ ಭಯಂ ಕ್ವಚಿದಾಪ್ನೋತಿ .....**

v) ಸಕಲವಿಧವಾದ ರೋಗಗಳು ನಿವಾರಣೆಯಾಗುವುವು.

**ರೋಗಾರ್ತೋ ಮುಚ್ಯತೇ ರೋಗಾತ್.... ।**

ಎಲ್ಲಕ್ಕೂ ಮಿಗಿಲಾಗಿ ಕೊನೆಗೆ ಸಂಸಾರ ಬಂಧನದಿಂದ ಬಿಡುಗಡೆ ಹೊಂದುವನು.

**.......ಬದ್ಧೋ ಮುಚ್ಯೇತ ಬಂಧನಾತ್ ।**

ಆದ್ದರಿಂದ ಸಕಲಶಾಸ್ತ್ರಗಳ ಸಾರವಾದ ಈ ವಿಷ್ಣುಸಹಸ್ರನಾಮಸ್ತೋತ್ರದ (ಅರ್ಥಾನುಸಂಧಾನಪೂರ್ವಕ ಮಾಡುವ) ಪಾರಾಯಣವು ಭಗವಂತನ ಅನುಗ್ರಹಕ್ಕೆ ಮುಖ್ಯಸಾಧನವಾಗಿದೆ.

## ಶ್ರೀವಿಷ್ಣುಸಹಸ್ರನಾಮಸ್ತೋತ್ರದ ವ್ಯಾಖ್ಯಾನಗಳು

ಸಕಲಶಾಸ್ತ್ರಗಳ ಸಾರಸರ್ವಸ್ವವಾದ ವಿಷ್ಣುಸಹಸ್ರನಾಮಸ್ತೋತ್ರಕ್ಕೆ ಅನೇಕ ವಿಶಿಷ್ಟ-ವ್ಯಾಖ್ಯಾನಗಳಿದ್ದು ಪ್ರಕೃತ ದ್ವೈತ ವೇದಾಂತ ಅಧ್ಯಯನ ಮತ್ತು ಸಂಶೋಧನ ಪ್ರತಿಷ್ಠಾನವು ಸಂಸ್ಥೆಯ ಮುಖ್ಯ ಸಂರಕ್ಷಕರಾದ **ಶ್ರೀಶ್ರೀಸತ್ಯಾತ್ಮತೀರ್ಥ ಶ್ರೀಪಾದಂಗಳ**-ವರ ಮಾರ್ಗದರ್ಶನದಲ್ಲಿ ಜಿಜ್ಞಾಸುಗಳ ಅನುಕೂಲಕ್ಕಾಗಿ ಈ ಕೆಳಗಿನ ನಾಲ್ಕು ವ್ಯಾಖ್ಯಾನಗಳ ಸಮೇತ ಪ್ರಕಾಶನ ಮಾಡುತ್ತಿರುವುದು ಅತ್ಯಂತ ಸಂತೋಷದ ವಿಷಯವಾಗಿದೆ. ಈ ಗ್ರಂಥಸಂಪಾದನೆಯ ಕಾರ್ಯವು ಪ್ರೊ. ಕೆ.ಟಿ. ಪಾಂಡುರಂಗಿಯವರು ಸಂಸ್ಥೆಯ ಗೌರವ ಅಧ್ಯಕ್ಷರಾಗಿದ್ದಾಗಲೇ ಅವರ ನಿರ್ದೇಶನ-ದಲ್ಲಿ ಸಂಪೂರ್ಣಗೊಂಡಿದ್ದು ಜಿಜ್ಞಾಸುಗಳ ಅನುಕೂಲಕ್ಕಾಗಿ ಈಗ ಪ್ರಕಾಶನವಾಗುತ್ತಿದೆ. ಈ ಗ್ರಂಥಸಂಪಾದನೆಯ ಕಾರ್ಯದಲ್ಲಿ ಪ್ರೊ. ಕೆ.ಟಿ. ಪಾಂಡುರಂಗಿ-ಯವರು ಪ್ರಧಾನಸಂಪಾದಕರಾಗಿ ನಮಗೆ ಎಲ್ಲ ರೀತಿಯಾಗಿ ಪ್ರೋತ್ಸಾಹ ಹಾಗೂ ಮಾರ್ಗದರ್ಶನ ನೀಡಿದ್ದಾರೆ.

**ವ್ಯಾಖ್ಯಾನಚತುಷ್ಟಯಗಳು :**

1) ಶ್ರೀಜಯತೀರ್ಥರ ಶಿಷ್ಯರಾದ ಶ್ರೀವಿದ್ಯಾಧಿರಾಜತೀರ್ಥರಿಂದ ರಚಿತವಾದ ವಿಷ್ಣುಸಹಸ್ರನಾಮವ್ಯಾಖ್ಯಾನ (ನಿರುಕ್ತಿ) (वि.)

2) ಶ್ರೀರಘುನಾಥತೀರ್ಥರಿಂದ (ಶ್ರೀಶೇಷಚಂದ್ರಿಕಾಚಾರ್ಯರಿಂದ) ರಚಿತ-ವಾದ ಬೃಹತೀಸಹಸ್ರವ್ಯಾಖ್ಯಾನವಾದ ತತ್ವಸಾರದಿಂದ ಉದ್ಧೃತವಾದ ವಿಷ್ಣುಸಹಸ್ರನಾಮವ್ಯಾಖ್ಯಾನ. (र.)

3) ಶ್ರೀಸತ್ಯಸಂಧತೀರ್ಥರಿಂದ ರಚಿತವಾದ ವಿಷ್ಣುಸಹಸ್ರನಾಮಭಾಷ್ಯ. (स.)

4) ಶ್ರೀಪಾಂಗರಿ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರಿಂದ ರಚಿತವಾದ ವಿಷ್ಣುಸಹಸ್ರನಾಮ ವ್ಯಾಖ್ಯಾನ. (ಬೃಹತೀಸಹಸ್ರಾನುಸಾರಿ–ತಾತ್ಪರ್ಯಾರ್ಥಸಮೇತ) (श्री.)

## ಶ್ರೀವಿದ್ಯಾಧಿರಾಜತೀರ್ಥರು (1388–1392)

**ಮಾಧ್ವದದ್ವೈತ್ಯಂಧಕಾರಪ್ರದ್ಯೋತನಮಹರ್ನಿಶಮ್ ।**
**ವಿದ್ಯಾಧಿರಾಜಂ ಸುಗುರುಂ ಧ್ಯಾಯಾಮಿ ಕರುಣಾಕರಮ್ ॥**

ಶ್ರೀವಿದ್ಯಾಧಿರಾಜತೀರ್ಥರು ಅದ್ವಿತೀಯ ಟೀಕಾಕಾರರೆಂದು ಪ್ರಸಿದ್ಧರಾದ ಶ್ರೀಜಯತೀರ್ಥರ ಸಾಕ್ಷಾತ್ ಶಿಷ್ಯರು. ಇವರ ಪೂರ್ವಾಶ್ರಮದ ಹೆಸರು ಶ್ರೀಕೃಷ್ಣಭಟ್ಟರು. ಶ್ರೀಟೀಕಾಚಾರ್ಯರಲ್ಲಿ ವಿಶೇಷ ಶಾಸ್ತ್ರಾಧ್ಯಯನವನ್ನು ಮಾಡಿದ ಅಧ್ಯಾತ್ಮಕೋವಿದರು ಹಾಗೂ ಉದ್ದಾಮಪಂಡಿತರು. ಇವರ ಅಪ್ರತಿಮ ಪ್ರತಿಭೆ, ಸಿದ್ಧಾಂತನಿಷ್ಠೆ ವಾದಕೌಶಲವನ್ನು ಗಮನಿಸಿದ ಶ್ರೀಜಯತೀರ್ಥರು ಇವರಿಗೆ ಪವಿತ್ರ-ವಾದ ಪ್ರಯಾಗಕ್ಷೇತ್ರದಲ್ಲಿ (ಕ್ರಿ.ಪೂ. 1388ರಲ್ಲಿ) ಸಂನ್ಯಾಸದೀಕ್ಷೆಯನ್ನು ನೀಡಿ "ಶ್ರೀವಿದ್ಯಾಧಿರಾಜತೀರ್ಥ"ರೆಂದು ನಾಮಕರಣ ಮಾಡಿ ತಮ್ಮ ಉತ್ತರಾಧಿಕಾರಿ-ಗಳನ್ನಾಗಿ ಸ್ವೀಕರಿಸಿದರು.

ಶ್ರೀವಿದ್ಯಾಧಿರಾಜತೀರ್ಥರು ಆಶ್ರಮಗುರುಗಳಾದ ಶ್ರೀಜಯತೀರ್ಥರಿಂದ ವಿಶೇಷ ಉಪದೇಶವನ್ನು ಪಡೆದು, ಅವರ ಆದೇಶದಂತೆ ದಿಗ್ವಿಜಯವನ್ನು ಮಾಡಿ, ಪರವಾದಿಗಳನ್ನು ಸೋಲಿಸಿ, ಜಯಪತ್ರಗಳನ್ನು ಗುರುಗಳಿಗೆ ಸಮರ್ಪಿಸಿದ ಮಹಾತಪಸ್ವಿಗಳು.

ಶ್ರೀವಿದ್ಯಾಧಿರಾಜತೀರ್ಥರು ಒಮ್ಮೆ ಗಂಗಾಸ್ನಾನಕ್ಕೆಂದು ಪ್ರಯಾಣ ಕೈಗೊಂಡು ಭೀಮರಥೀ ತೀರದ ಹತ್ತಿರ ಬೀಡುಬಿಟ್ಟಾಗ, ಶ್ರೀಭಾಗೀರಥೀದೇವಿ ಮೂರ್ತಿ-ಮತ್ತಾಗಿ ದರ್ಶನ ನೀಡಿ ಗಂಗಾಸ್ನಾನಕ್ಕೆ ತಾವು ತೆರಳಬೇಕಿಲ್ಲವೆಂದು ಸೂಚಿಸಿ, ತಾವು ಭೀಮರಥಿಯಲ್ಲಿಯೇ ಸನ್ನಿಹಿತರಾಗಿರುವುದಾಗಿ ತಿಳಿಸಿದರು. ಕೂಡಲೇ ಪರಿವಾರ ಸಮೇತರಾಗಿ ಭೀಮರಥಿಯಲ್ಲಿ ಮಿಂದು ಮರದಬಾಗಿಣ, ಆಭರಣ, ವಸ್ತ್ರ ಮುಂತಾದ ಕಾಣಿಕೆಗಳನ್ನು ಗಂಗಾದೇವಿಗೆ ಭಕ್ತಿಯಿಂದ ಸಮರ್ಪಿಸಿದ ಮಹಾನುಭಾವರು.

ಆಗ ಗಂಗಾದೇವಿಯು ಸಾಕ್ಷಾತ್ ಕೈಚಾಚಿ ಶ್ರೀವಿದ್ಯಾಧಿರಾಜತೀರ್ಥರಿಂದ ಅವುಗಳನ್ನು ಸ್ವೀಕರಿಸಿ ಮತ್ತೆ ಅದೃಶ್ಯಳಾದಳು. (ಪೂರ್ಣಬೋಧಗುರುವಂಶ-ಕಥಾಕಲ್ಪತರು ಎಂಬ ಗ್ರಂಥದಲ್ಲಿ ಇದು ನಿರೂಪಿತವಾಗಿದೆ.)

ಅಥ ವಿದ್ಯಾಧಿರಾಜಾಸ್ತೇ ಸಮಂತಾದವನೀತಲೇ ।
ಸಂಚರಂತೋ ವಾದಿವೃಂದಜಯಂ ಚಕ್ರುರನೇಕಶಃ ॥
ಏಕದಾ ಶ್ರೀಮದಾನಂದತೀರ್ಥಸಂಸ್ಥಾನಸಂಯುತಾಃ ।
ಯಯುರ್ಭಾಗೀರಥೀಯಾತ್ರಾಂ ಕರ್ತುಂ ಭೀಮರಥೀತಟಮ್ ॥
ತತ್ರ ಸ್ನಾತ್ವಾ ನದೀತೀರೇ ಸೂಪವಿಷ್ಟಾ ಗುರೂತ್ತಮಾಃ ।
ಯದೃಚ್ಛಯಾ ಭೀಮರಥೀಜಲಾದ್ಗಂಗಾ ಸಮುತ್ಥಿತಾ ॥
ಸರ್ವಲಕ್ಷಣಸಂಯುಕ್ತಾ ಸರ್ವಾಭರಣಭೂಷಿತಾ ।
ಸ್ವೀಯಯಾತ್ರಾರ್ಥಮುದ್ಯುಕ್ತಶ್ರೀಪಾದಾನ್ ಸನ್ನ್ಯವಾರಯತ್ ॥
ತಾಂ ದೃಷ್ಟ್ವಾ ವಿಸ್ಮಿತಾಃ ಸರ್ವೇ ಶ್ರೀಪಾದಾಸ್ತ್ವರಯಾಽನ್ವಿತಾಃ ।
ಸಾಕ್ಷಾದ್ಭಾಗೀರಥೀಂ ಭೀಮಾಜಲೇ ಸ್ವಾರಾತ್ ಸಮುತ್ಥಿತಾಮ್ ॥
ಪುಣ್ಯೈರಗಣ್ಯೈರಾತ್ಮೀಯೈರ್ದೈವಾದ್ದೃಷ್ಟಿಪಥಂಗತಾಮ್ ।
ಜ್ಞಾತ್ವಾ ಮಹಾರ್ಹೋಪಚಾರೈರ್ದಿವ್ಯೈಸ್ತಾಂ ಸಮಪೂಜಯನ್ ॥
ಸಾ ತೈಃ ಸಮರ್ಪಿತಾಶೇಷವಸ್ತ್ರಾಭರಣಪೂರ್ವಕಮ್ ।
ಹಸ್ತೇನಾದಾಯ ಪುರತೋ ಜಲೇಽದೃಶ್ಯಾ ಬಭೂವ ಹ ॥
ಸರ್ವೇ ಶ್ರೀಪಾದಮಾಹಾತ್ಮ್ಯಾದ್ಗಂಗಾಂ ದೃಷ್ಟಿಪಥಂಗತಾಮ್ ।
ಅದೃಶ್ಯತಾಂ ಪುನಃ ಪ್ರಾಪ್ತಾಂ ದೃಷ್ಟ್ವಾಽಽಶ್ಚರ್ಯಯುತಾಸ್ತದಾ ॥

## ಶ್ರೀವಿದ್ಯಾಧಿರಾಜತೀರ್ಥರ ಕೃತಿಗಳು :

### 1) ಶ್ರೀವಿಷ್ಣುಸಹಸ್ರನಾಮಸ್ತೋತ್ರವ್ಯಾಖ್ಯಾನ (ನಿರುಕ್ತಿ)

ವಿಷ್ಣುಸಹಸ್ರನಾಮಗಳಿಗೆ ಬರೆದ ಅಪೂರ್ವವ್ಯಾಖ್ಯಾನ. 'ಶ್ರೀವಿದ್ಯಾಧಿರಾಜ'ರ ಈ ವ್ಯಾಖ್ಯಾನವು (1985ರಲ್ಲಿ) ಶ್ರೀ ಪಲಿಮಾರುಮಠದಿಂದ ಪ್ರಕಾಶಿತವಾಗಿದೆ.

### 2) ಗೀತಾವಿವೃತಿ

ಶ್ರೀಮದಾಚಾರ್ಯರ ಗೀತಾಭಾಷ್ಯ, ಗೀತಾತಾತ್ಪರ್ಯಗಳಲ್ಲಿ ಪ್ರತಿಪಾದಿತವಾದ ಭಗವದ್ಗೀತೆಯ ಭಾವವನ್ನು ಹಾಗೂ ಶ್ರೀಟೀಕಾರಾಯರ ಟೀಕೆಗಳಾದ ಪ್ರಮೇಯದೀಪಿಕಾ, ನ್ಯಾಯದೀಪಿಕಾ ಗ್ರಂಥಗಳಲ್ಲಿ ನಿರೂಪಿಸಿದ ವಿವರಣೆಗಳನ್ನು ಸಂಗ್ರಹಿಸಿ ರಚಿಸಿರುವುದು ಗೀತಾವಿವೃತಿಯ ವೈಶಿಷ್ಟ್ಯ. ಈ ಗ್ರಂಥವು ಈ ಹಿಂದೆ 1916ರಲ್ಲಿ ಗೋಕರ್ಣಮಠದ ಶ್ರೀಇಂದಿರಾಕಾಂತತೀರ್ಥರಿಂದ ಮರಾಠಿ-ವ್ಯಾಖ್ಯಾನ ಸಮೇತ ಪ್ರಕಟವಾಗಿತ್ತು. ಅದರ ಪುನರ್ಮುದ್ರಣವನ್ನು ಅದೇ ಸಂಸ್ಥೆ 1925ರಲ್ಲಿ ಪ್ರಕಾಶನ ಮಾಡಿತ್ತು. ಈ ಕೃತಿಯು 2006ರಲ್ಲಿ ಶ್ರೀವ್ಯಾಸಮಧ್ವ-ಸಂಶೋಧನ ಪ್ರತಿಷ್ಠಾನದಿಂದ ಪ್ರಕಾಶಿತವಾಗಿದೆ.

#### ಗೀತಾವಿವೃತಿಯ ಆದ್ಯಂತಶ್ಲೋಕಗಳು

ಆದಿ : ರಮಾಪತಿಂ ಪೂರ್ಣಗುಣಂ ಮುಕುಂದಂ
ವ್ಯಾಸಂ ಚ ವಿಜ್ಞಾನಸಹಸ್ರಭಾನುಮ್ ।
ಪೂರ್ಣಪ್ರಬೋಧಂ ಚ ಸುತತ್ತ್ವದೀಪಂ
ಕ್ರಮಾದ್ಗುರೂಂಶ್ಚ ಪ್ರಣಮಾಮಿ ಮೂರ್ಧ್ನಾ ॥

ಶ್ರೀಮದಾನಂದತೀರ್ಥಾರ್ಯಮತಮಾಶ್ರಿತ್ಯ ಯತ್ನತಃ ।
ಕ್ರಿಯತೇ ವಿಷ್ಣುಗೀತಾಯಾ ವಿವೃತಿಃ ಸಾಧುಸಂವಿದೇ ॥

ಅಂತ್ಯ : ಯತೋ ವಿಶ್ವಸ್ಯ ಜನ್ಮಾದಿ ಪೂರ್ಣಶಕ್ತೇರ್ಮಹಾತ್ಮನಃ ।
ಸೋಽಪರಾಧಂ ಮಮ ಕ್ಷಂತುಂ ಕೃಷ್ಣೋ ಭಕ್ತಪ್ರಿಯೋಽರ್ಹತಿ ॥

### ಶಿಷ್ಯಸ್ವೀಕಾರ

ಶ್ರೀರಾಜೇಂದ್ರತೀರ್ಥರು ಮತ್ತು ಶ್ರೀಕವೀಂದ್ರತೀರ್ಥರು ಎಂಬ ಇಬ್ಬರು ಇವರ ಆಶ್ರಮಶಿಷ್ಯರು. ಶ್ರೀರಾಜೇಂದ್ರತೀರ್ಥರ ಪರಂಪರೆಯೇ ಮುಂದೆ ಶ್ರೀವ್ಯಾಸರಾಜಮಠವೆಂದು ಪ್ರಸಿದ್ಧವಾಯಿತು. ಶ್ರೀಕವೀಂದ್ರತೀರ್ಥರಿಂದ ಮುಂದುವರೆದ ಪರಂಪರೆ ಅನಂತರ ಶ್ರೀ ಉತ್ತರಾದಿಮಠ, ಶ್ರೀರಾಯರಮಠ ಎಂಬುದಾಗಿ ಪ್ರಸಿದ್ಧವಾಯಿತು.

ಇವರು ಅಕ್ಷಯತೃತೀಯಾ(ವೈಶಾಖ ಶುದ್ಧ ತೃತೀಯಾ)ದಿನದಂದು ಹರಿಪದವನ್ನೈದರು. ಇವರ ಮೂಲಬೃಂದಾವನಸ್ಥಳ ಜಗನ್ನಾಥಪುರಿ ಎಂಬುದಾಗಿ ಪ್ರತೀತಿ. ಇನ್ನೂ ಬೃಂದಾವನವಿರುವ ಸ್ಥಳ ದೊರಕಿಲ್ಲ.

## ಶ್ರೀರಘುನಾಥತೀರ್ಥರು (ಕ್ರಿ.ಶ. 1700–1755)
## (ಶ್ರೀಶೇಷಚಂದ್ರಿಕಾಚಾರ್ಯರು)

**ಸರ್ವಸರ್ವಂ ಸಹೇಶಾನಸಭಾಸು ಜಿತವಾದಿರಾಟ್ ।**
**ಸರ್ವದಾ ಸರ್ವದೋ ಭೂಯಾದ್ರಘುನಾಥಮುನೀಶ್ವರಃ ॥**

ಶ್ರೀರಘುನಾಥತೀರ್ಥರು ಶ್ರೀವ್ಯಾಸರಾಜಮಠದ ಪರಂಪರೆಯಲ್ಲಿ ವಿಶಿಷ್ಟ-ಸ್ಥಾನವನ್ನು ಪಡೆದ ಮಹಾಜ್ಞಾನಿಗಳು ಹಾಗೂ ತಪಸ್ವಿಗಳು. ಇವರ ಕಾಲ ಕ್ರಿ.ಶ. 1700–1755 ಎಂದು ತಿಳಿದುಬರುತ್ತದೆ. ಇವರು ಶ್ರೀಲಕ್ಷ್ಮೀನಾರಾಯಣ-ತೀರ್ಥರ ಕರಕಮಲಸಂಜಾತರು. ಆಚಾರ್ಯ ಮಧ್ವರ ಪರಂಪರೆಯಲ್ಲಿ 33ನೆಯವರು ಮತ್ತು ಶ್ರೀಚಂದ್ರಿಕಾಚಾರ್ಯರೇ ಅಪ್ಪಣೆ ಕೊಡಿಸಿದಂತೆ, ''ದಶಮೋ ಮತ್ಸಮಃ'' ಎಂಬ ವಚನಾನುಸಾರ ಶ್ರೀವ್ಯಾಸರಾಜರ ಶಿಷ್ಯಪರಂಪರೆ-ಯಲ್ಲಿ ಹತ್ತನೆಯವರಾಗಿ ಪೀಠವನ್ನು ಅಲಂಕರಿಸಿದವರು.

ಶ್ರೀವ್ಯಾಸರಾಜರು ರಚಿಸಿದ ''**ವ್ಯಾಸತ್ರಯ**''ಗಳೆಂದು ಪ್ರಸಿದ್ಧವಾದ **ತರ್ಕತಾಂಡವ, ನ್ಯಾಯಾಮೃತ** ಮತ್ತು **ತಾತ್ಪರ್ಯಚಂದ್ರಿಕಾ** ಗ್ರಂಥಗಳಲ್ಲಿ ''ತಾತ್ಪರ್ಯಚಂದ್ರಿಕಾ'' ಗ್ರಂಥವು ಅವರ ಮೇರುಕೃತಿ. (Master Piece) ಆದ್ದರಿಂದಲೇ ಶ್ರೀವ್ಯಾಸರಾಜ-ರಿಗೆ ''ಚಂದ್ರಿಕಾಚಾರ್ಯ''ರೆಂದು ಹೆಸರು ಬಂದಿತು. ಇದು ಸ್ವತಂತ್ರಕೃತಿಯಲ್ಲ. ಶ್ರೀಜಯತೀರ್ಥರು ರಚಿಸಿದ ತತ್ತ್ವಪ್ರಕಾಶಿಕಾ ಗ್ರಂಥದ (ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರು ರಚಿಸಿದ ಬ್ರಹ್ಮಸೂತ್ರಭಾಷ್ಯದ ಟೀಕಾಗ್ರಂಥದ) ಮೊದಲನೆಯ ಮತ್ತು ಎರಡನೆಯ ಅಧ್ಯಾಯಗಳ ವ್ಯಾಖ್ಯಾನ.

ಅನೇಕ ವರ್ಷಗಳ ಕಾಲ ತತ್ತ್ವಪ್ರಕಾಶಿಕಾಗ್ರಂಥದ ಮೂರು ಮತ್ತು ನಾಲ್ಕನೆಯ ಅಧ್ಯಾಯಗಳಿಗೆ ವ್ಯಾಖ್ಯಾನವಿಲ್ಲದೇ (ಚಂದ್ರಿಕೆಯ ಬೆಳಕಿಲ್ಲದೇ) ಇರುವ ಪ್ರಸಂಗ ಬಂದಾಗ, ಶಿಷ್ಯರು ಶ್ರೀವ್ಯಾಸರಾಜರಲ್ಲಿ ಉಳಿದ ಎರಡು ಅಧ್ಯಾಯಗಳಿಗೆ ವ್ಯಾಖ್ಯಾನವು ಯಾವಾಗ ರಚಿಸೋಣವಾಗುತ್ತದೆ ಎಂದು ಪ್ರಾರ್ಥಿಸಿದಾಗ, ಅವರು ''**ದಶಮೋ ಮತ್ಸಮಃ,**'' ''ನಮ್ಮ ಶಿಷ್ಯ ಪರಂಪರೆಯಲ್ಲಿ ಹತ್ತನೆಯವರು ಉಳಿದ ಎರಡು ಅಧ್ಯಾಯಗಳಿಗೆ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಾರೆ'' ಎಂದರಂತೆ. ಅವರ

ಮಾತಿನಂತೆ ಶ್ರೀವ್ಯಾಸರಾಜರಿಂದ ಹತ್ತನೆಯವರಾದ ಶ್ರೀರಘುನಾಥತೀರ್ಥರು ತತ್ವಪ್ರಕಾಶಿಕಾ ಗ್ರಂಥದ ಉಳಿದ ಮೂರು ಮತ್ತು ನಾಲ್ಕನೇ ಅಧ್ಯಾಯಗಳಿಗೆ ವ್ಯಾಖ್ಯಾನ ಮಾಡಿದ್ದರಿಂದ ಆ ವ್ಯಾಖ್ಯಾನವು "**ಶೇಷತಾತ್ಪರ್ಯಚಂದ್ರಿಕಾ**" ಎಂದು ಪ್ರಸಿದ್ಧಿಯನ್ನು ಪಡೆಯಿತು. ಆ ವ್ಯಾಖ್ಯಾನವನ್ನು ರಚಿಸಿದ ಶ್ರೀರಘುನಾಥ-ತೀರ್ಥರು "**ಶೇಷಚಂದ್ರಿಕಾಚಾರ್ಯರೆಂದು**" ಮನ್ನಣೆಯನ್ನು ಪಡೆದರು.

ತಾತ್ಪರ್ಯಚಂದ್ರಿಕಾ ಮತ್ತು ಶೇಷತಾತ್ಪರ್ಯಚಂದ್ರಿಕಾ ಗ್ರಂಥಗಳ ಪದಪಂಕ್ತಿ, ರಚನಾಕೌಶಲ್ಯ, ತತ್ವನಿರೂಪಣಾ ವೈಖರಿ, ಮೂಲಗ್ರಂಥಗಳ ಭಾವಸಂಗ್ರಹ, ಪ್ರತಿಪಕ್ಷಖಂಡನಾಚಾತುರ್ಯ, ಸಿದ್ಧಾಂತಮಂಡನೆ ಮುಂತಾದವುಗಳನ್ನು ಗಮನಿಸಿ-ದರೆ, ಶ್ರೀಚಂದ್ರಿಕಾಚಾರ್ಯರೇ ಶ್ರೀರಘುನಾಥತೀರ್ಥರ ವಾಙ್ಮಯ ತಪಸ್ಸಿಗೆ ಮೆಚ್ಚಿ ಅವರಲ್ಲಿ ಒಂದು ರೂಪದಿಂದ ಸನ್ನಿಹಿತರಾಗಿ, ಈ ಅನನ್ಯ ಸಾಧ್ಯವಾದ ಚಂದ್ರಿಕಾ ಪೂರಣ ರೂಪವಾದ ಮಹಾಕಾರ್ಯವನ್ನು ಮಾಡಿಸಿದರು ಎಂದು ಹೇಳಬಹುದು.

**ಶ್ರೀಶೇಷಚಂದ್ರಿಕಾಚಾರ್ಯರ ಕೃತಿಗಳು :**

1. ಶೇಷತಾತ್ಪರ್ಯಚಂದ್ರಿಕಾ – (ಶ್ರೀಜಯತೀರ್ಥರ ತತ್ವಪ್ರಕಾಶಿಕಾ ಗ್ರಂಥದ ಮೂರು ಮತ್ತು ನಾಲ್ಕನೇ ಅಧ್ಯಾಯಗಳ ವ್ಯಾಖ್ಯಾನ.)
2. ತತ್ವಕಣಿಕಾ – ತಂತ್ರಸಾರಸಂಗ್ರಹದ ವ್ಯಾಖ್ಯಾನ
3. ಗಂಗಾಸ್ತುತಿ
4. ತತ್ವಸಾರ – ಬೃಹತೀಸಹಸ್ರದ ವ್ಯಾಖ್ಯಾನ.

ಶ್ರೀರಘುನಾಥತೀರ್ಥರ ಶಿಷ್ಯರೇ "ಭಾಷ್ಯದೀಪಿಕಾಚಾರ್ಯ"ರೆಂದು ಪ್ರಸಿದ್ಧ-ರಾದ ಶ್ರೀಜಗನ್ನಾಥಯತಿಗಳು. ಈ ಇಬ್ಬರು ಗುರುಶಿಷ್ಯರು ಸುಮಾರು 30 ವರ್ಷಗಳ ಕಾಲ ಸರ್ವಜ್ಞಪೀಠದಲ್ಲಿ ವಿರಾಜಮಾನರಾಗಿ ಅಪೂರ್ವ ಗ್ರಂಥಗಳನ್ನು ರಚಿಸಿದ್ದು ಶ್ರೀವ್ಯಾಸರಾಜಮಠದ ಇತಿಹಾಸದಲ್ಲಿ ಸುವರ್ಣಾಕ್ಷರಗಳಿಂದ ಬರೆದಿಡತಕ್ಕ ಸಂಗತಿಯಾಗಿದೆ.

ಇವರು ಆಷಾಢ ಶುದ್ಧ ಚತುರ್ಥಿಯಂದು ಕಾವೇರಿ, ಕಪಿಲಾ ಮತ್ತು ಸ್ಫಟಿಕ ಸರೋವರಗಳ ತ್ರಿವೇಣಿಸಂಗಮವಾದ "**ತಿರುಮಕೂಡಲು**" ಕ್ಷೇತ್ರದಲ್ಲಿ ವೃಂದಾವನಸ್ಥರಾದರು.

## ಶ್ರೀಸತ್ಯಸಂಧತೀರ್ಥರು (ಕ್ರಿ.ಶ. 1783-1794)

**ವಿಷ್ಣೋಃ ಪದಶ್ರಿತ್ ಗೋವ್ರಾತೈಃ ಸ್ವಾಂತಧ್ವಾಂತನಿವಾರಕಃ ।**
**ಶ್ರೀಸತ್ಯಸಂಧಸೂರ್ಯೋಽಯಂ ಭಾಸತಾಂ ನೋ ಹೃದಂಬರೇ ॥**

ಅಧ್ಯಾತ್ಮಪರಂಪರೆಗೆ ವಿಶಿಷ್ಟ ಕಾಣಿಕೆ ನೀಡಿದ, ಅನೇಕ ರಾಜರುಗಳಿಗೆ ರಾಜಗುರುಗಳಾಗಿದ್ದ ಮಹಾತಪಸ್ವಿಗಳಾಗಿದ್ದ ಶ್ರೀಸತ್ಯಬೋಧತೀರ್ಥರಲ್ಲಿ ಸಮಗ್ರ ಶಾಸ್ತ್ರಾಧ್ಯಯನವನ್ನು ಮಾಡಿ ಅವರಿಂದಲೇ ಸಂನ್ಯಾಸದೀಕ್ಷೆಯನ್ನು ಪಡೆದು, ಅವರಿಂದಲೇ ಆಯುಷ್ಯವನ್ನು ಪಡೆದು, ಅವರ ಉತ್ತರಾಧಿಕಾರಿಗಳಾಗಿ ಉತ್ತರಾದಿಮಠದ ಪೀಠವನ್ನಲಂಕರಿಸಿದ ಮಹಾನುಭಾವರೇ ಶ್ರೀಸತ್ಯಸಂಧ-ತೀರ್ಥರು. ಶ್ರೀಮನ್ಮಧ್ವಾಚಾರ್ಯರಿಂದ ಇವರು 26ನೇ ಪೀಠಾಧೀಶರು.

ಇವರ ಪೂರ್ವಾಶ್ರಮದ ಹೆಸರು ಶ್ರೀಹಾವೇರಿ ರಾಮಚಂದ್ರಾಚಾರ್ಯರು. ಇವರ ತಂದೆ ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರು. ತಾಯಿ ಶ್ರೀಮತಿ ಭಾರತೀದೇವಿ. ಸ್ವಪ್ನಸೂಚಿತ ನೃಸಿಂಹದೇವರ ಆದೇಶದಂತೆ ಬಿದರಹಳ್ಳಿಯ 'ತುಂಗಾತೀರದ ಅಶ್ವತ್ಥವೃಕ್ಷದಲ್ಲಿರುವ ನರಸಿಂಹದೇವರನ್ನು ವಿಶೇಷವಾಗಿ ಸೇವೆ ಮಾಡಿ ಶ್ರೀನೃಸಿಂಹ ದೇವರ ಹಾಗೂ ಶ್ರೀರಾಘವೇಂದ್ರಸ್ವಾಮಿಗಳ ಅನುಗ್ರಹದಿಂದ ಪಡೆದ ಮಗುವಿಗೆ ರಾಮಚಂದ್ರ (ರಾಘವೇಂದ್ರ) ಎಂದು ನಾಮಕರಣ ಮಾಡಿದರು. ಮುಂದೆ ರಾಮಚಂದ್ರ ಎಂಬ ಹೆಸರಿನಿಂದ ಪ್ರಸಿದ್ಧರಾದರು. ಮಧ್ವಾಚಾರ್ಯರು ಮಗನಿಗೆ ಸಕಾಲದಲ್ಲಿ ಉಪನಯನವನ್ನು ಮಾಡಿ, ಕಾವ್ಯ, ವ್ಯಾಕರಣ, ನ್ಯಾಯ ಮುಂತಾದ ಶಾಸ್ತ್ರಗಳ ಪಾಠವನ್ನು ಹೇಳಿದರು. ನಂತರ ಅತ್ಯಂತ ಮೇಧಾವಿಯಾದ ಮಗನನ್ನು ವಿಶೇಷ ಶಾಸ್ತ್ರಾಧ್ಯಯನಕ್ಕಾಗಿ ಶ್ರೀಸತ್ಯಬೋಧತೀರ್ಥರಿಗೆ ಒಪ್ಪಿಸಿದರು. ಅವರು ಸಮಗ್ರ ನ್ಯಾಯ-ವೇದಾಂತ ಪಾಠವನ್ನು ಹೇಳಿ ಶ್ರೇಷ್ಠ ಪಂಡಿತರನ್ನಾಗಿ ಮಾಡಿದರು. ನಂತರ ''ಸುಕನ್ಯಾ'' ಎಂಬ ಶ್ರೇಷ್ಠ ಕನ್ಯೆಯ ಜೊತೆಗೆ ವಿವಾಹವಾಗಿ ಸ್ವಾಮಿರಾಯ ಎಂಬ ಮಗನನ್ನು ಮತ್ತು ಸೀತಾ ಎಂಬ ಮಗಳನ್ನು ಪಡೆದು ಧನ್ಯತೆಯನ್ನು ಹೊಂದಿದರು.

ಶ್ರೀರಾಮಚಂದ್ರಾಚಾರ್ಯರ ಪ್ರತಿಭೆ, ಪಾಂಡಿತ್ಯ, ಆಚಾರ-ವಿಚಾರ, ವಿದ್ಯೆ ಇವುಗಳನ್ನು ಗಮನಿಸಿದ ಶ್ರೀಸತ್ಯಬೋಧತೀರ್ಥರು, ಇವರನ್ನು ತಮ್ಮ ಉತ್ತರಾಧಿ-ಕಾರಿಯಾಗಿ ನೇಮಿಸಲು ಯೋಚಿಸಿದರು. ಶ್ರೀಗಳವರು ತಮ್ಮ ದಿವ್ಯದೃಷ್ಟಿಯಿಂದ ಶ್ರೀರಾಮಚಂದ್ರಾಚಾರ್ಯರ ಅಲ್ಪಾಯುಷ್ಯವನ್ನು ಗಮನಿಸಿ, 10 ವರ್ಷ

ಆಯುರ್ದಾನ ಮಾಡಿ, ಫಾಲ್ಗುಣ ಶುದ್ಧ ತೃತೀಯಾ ದಿನ ಶ್ರೀರಾಮಚಂದ್ರಾ-ಚಾರ್ಯರಿಗೆ ವೇದಾಂತ ಸಾಮ್ರಾಜ್ಯದಲ್ಲಿ ಪಟ್ಟಾಭಿಷೇಕ ಮಾಡಿ ''ಶ್ರೀಸತ್ಯಸಂಧ-ತೀರ್ಥ''ರೆಂದು ನಾಮಕರಣಮಾಡಿ ತಮ್ಮ ಉತ್ತರಾಧಿಕಾರಿಗಳನ್ನಾಗಿ ಸ್ವೀಕರಸಿದರು.

ಸಂಸ್ಥಾನವನ್ನು ಶ್ರೀಸತ್ಯಸಂಧತೀರ್ಥರಿಗೆ ವಹಿಸಿಕೊಟ್ಟು ಧನ್ಯತೆಯನ್ನು ಅನುಭವಿಸಿ, ಶ್ರೀಸತ್ಯಬೋಧತೀರ್ಥರು ಫಾಲ್ಗುಣ ಕೃಷ್ಣಪಕ್ಷದ ಪ್ರತಿಪತ್ ದಿನ ಸವಣೂರಿನಲ್ಲಿ ಯೋಗಮಾರ್ಗದಿಂದ ದೇಹತ್ಯಾಗ ಮಾಡಿ ಪರಂಧಾಮಕ್ಕೆ ಪ್ರಯಾಣ ಮಾಡಿದರು. ಶ್ರೀಸತ್ಯಸಂಧತೀರ್ಥರು ಗುರುಗಳ ಆರಾಧನೆಯನ್ನು ಅತ್ಯಂತ ವೈಭವದಿಂದ ನೆರವೇರಿಸಿ ದಿಗ್ವಿಜಯವನ್ನು ಕೈಗೊಂಡರು.

ಶ್ರೀಸತ್ಯಸಂಧತೀರ್ಥರು ನಿರಂತರ ಪಾಠ-ಪ್ರವಚನ, ಗ್ರಂಥಲೇಖನ, 'ಮೂಲರಾಮದೇವರ ಪೂಜೆ, ಉಪದೇಶ, ದೇಶ ದಿಗ್ವಿಜಯ, ವಾದಿನಿಗ್ರಹ, ವಾಕ್ಯಾರ್ಥ, ವೈಷ್ಣವಸಿದ್ಧಾಂತ ಪ್ರಚಾರ ಮುಂತಾದವುಗಳಿಂದ ಶಿಷ್ಯರನ್ನು ಮುದಗೊಳಿಸಿದರು.

**ಶ್ರೀಸತ್ಯಸಂಧತೀರ್ಥರ ಮಹಿಮೆಗಳು :**

1) ಶ್ರೀಸತ್ಯಸಂಧತೀರ್ಥರ ಮಹಿಮೆಯನ್ನು ಕಂಡ ದಕ್ಷಿಣಭಾರತದ ಅನೇಕ ರಾಜರುಗಳು ಇವರಿಗೆ ವಂದಿಸಿ ಗೌರವವನ್ನು ಸಮರ್ಪಿಸಿದರು.

2) ಒಮ್ಮೆ ಗಂಗಾಸಮಾರಾಧನಾ ಸಂದರ್ಭದಲ್ಲಿ ಕಾಶಿಯಲ್ಲಿ ಗಂಗೆಯನ್ನು ಪೂಜಿಸಿ ಗಂಗಾನದಿಗೆ ಬಂಗಾರದ ಮರದಲ್ಲಿ ಮಂಗಳದ್ರವ್ಯಗಳನ್ನು, ಆಭರಣಗಳನ್ನಿಟ್ಟು ಬಾಗಿಣಕೊಡಲು ಉದ್ಯುಕ್ತರಾದಾಗ, ಗಂಗಾ-ದೇವಿಯು ಪ್ರತ್ಯಕ್ಷಳಾಗಿ ತನ್ನ ಎರಡೂ ಕೈಗಳನ್ನು ಮೇಲಕ್ಕೆತ್ತಿ ಬಾಗಿಣವನ್ನು ಸ್ವೀಕರಿಸಿದಳು.

3) ಗಯಾವಾಡರು ವಿಷ್ಣುಪಾದ ಮಂದಿರದ ಬಾಗಿಲಿಗೆ ಬೀಗವನ್ನು ಹಾಕಿ ದರ್ಶನಕ್ಕೆ ಅಡಚಣೆ (ತೊಂದರೆ) ಮಾಡಿದಾಗ, ಮಂದಿರದ ಬೀಗವನ್ನು ಕೇವಲ ದೃಷ್ಟಿಯಿಂದ ಮುರಿದರು.

4) ಪಂಢರಪುರದ ಪಾಂಡುರಂಗವಿಠ್ಠಲ ವೃದ್ಧಬ್ರಾಹ್ಮಣನಾಗಿ ಬಂದು ಇವರಿಂದ ಮುದ್ರಾಧಾರಣೆ ಮಾಡಿಸಿಕೊಂಡ.

5) ಉಡುಪಿ ಶ್ರೀಕೃಷ್ಣನಿಗೆ ಕೋಟಿ ತುಳಸಿ ಅರ್ಚನೆ ಮಾಡಿದರು.

ಹೀಗೆ ಅಷ್ಟಸಿದ್ಧಿಯನ್ನು ಪಡೆದ ಶ್ರೀಸತ್ಯಸಂಧತೀರ್ಥರ ಮಹಿಮೆಗಳು ಅಪಾರ.

ಶ್ರೀಸತ್ಯಸಂಧತೀರ್ಥರ ಕೃತಿಗಳು :

1) ಶ್ರೀವಿಷ್ಣುಸಹಸ್ರನಾಮಭಾಷ್ಯಮ್ (ವ್ಯಾಖ್ಯಾನ)
2) ಪುರುಷಸೂಕ್ತವ್ಯಾಖ್ಯಾನಮ್
3) ಸರಸ್ವತೀಸೂಕ್ತ ವ್ಯಾಖ್ಯಾನಮ್
4) ವಿಷ್ಣುಸ್ತುತಿಃ
5) ಅಷ್ಟಾವಿಂಶತಿಮೂರ್ತಿಸ್ತುತಿಃ (ಪೂರ್ವಾಶ್ರಮದಲ್ಲಿ ರಚಿತವಾದುದು)
6) ರಾಮಕೃಷ್ಣಾಷ್ಟಕಮ್

ಮಹಾಜ್ಞಾನಿಗಳು, ತಪಸ್ವಿಗಳು ಆದ ಶ್ರೀಸತ್ಯಸಂಧತೀರ್ಥರು 10 ವರ್ಷಗಳ ಕಾಲ ಪೀಠವನ್ನಲಂಕರಿಸಿ, ಶ್ರೀಸತ್ಯವರ ತೀರ್ಥರನ್ನು ತಮ್ಮ ಉತ್ತರಾಧಿಕಾರಿಯನ್ನಾಗಿ ನೇಮಿಸಿ ತುಂಗಾತೀರದ ಪವಿತ್ರ- ಕ್ಷೇತ್ರವಾದ ಮಹಿಷಿಯಲ್ಲಿ ಜೇಷ್ಠ ಶುಕ್ಲ ದ್ವಿತೀಯಾದಿವಸ ವೃಂದಾವನಸ್ಥರಾದರು.

## ನಾರದಾನುಗೃಹೀತ ಪಾಂಗರಿ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರು

ಶ್ರೀನಾರದಾನುಗೃಹೀತರೆಂದೇ ಪ್ರಸಿದ್ಧರಾದ ಪಾಂಗರಿ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರು 18ನೇ ಶತಮಾನದ ಅಪೂರ್ವ ಗ್ರಂಥಕಾರರಲ್ಲಿ ಒಬ್ಬರು. ಇವರು ನಾಂದೇಡ ಪ್ರಾಂತದವರು. ಇವರ ತಂದೆ ಜಮದಗ್ನಿ ಗೋತ್ರದ ಭೀಮಾಚಾರ್ಯರು. ಇವರಿಗೆ ಮೂವರು ಪುತ್ರರು ಹಾಗೂ ಒಬ್ಬಳು ಪುತ್ರಿ.

ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರು ಚಿಕ್ಕ ವಯಸ್ಸಿನಲ್ಲಿಯೇ ದೀರ್ಘ ತಪಸ್ಸನ್ನಾಚರಿಸಿ ನಾರದಮಹರ್ಷಿಗಳ ದರ್ಶನ ಪಡೆದ ಮಹಾಜ್ಞಾನಿಗಳು. ನಂತರ ಗೋದಾವರೀ ತೀರದ ಮುದ್ಗಲ ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರಲ್ಲಿ ಸುಧಾದಿ ಗ್ರಂಥಗಳ ವಿಶೇಷ ಅಧ್ಯಯನ ಮಾಡಿ ನೂರಾರು ಶಿಷ್ಯರಿಗೆ ಪಾಠ-ಪ್ರವಚನವನ್ನು ಹೇಳಿದ ತಪಸ್ವಿಗಳು.

ಪಾಠ-ಪ್ರವಚನದ ಜೊತೆಗೆ ಕಾಶೀ, ಗಯಾ, ಪ್ರಯಾಗ, ಬದರಿ ಮುಂತಾದ ತೀರ್ಥಕ್ಷೇತ್ರಗಳನ್ನು ಸಂದರ್ಶಿಸುತ್ತಾ ಅನೇಕ ಭಕ್ತರ ದುಃಖಗಳನ್ನು ಪರಿಹರಿಸುತ್ತಾ 30ಕ್ಕೂ ಹೆಚ್ಚು ಕೃತಿಗಳನ್ನು ರಚಿಸಿರುವರು.

ರಚಿಸಿದ ಗ್ರಂಥಗಳು :

1. ವಿಷ್ಣುಸಹಸ್ರನಾಮ ವ್ಯಾಖ್ಯಾನ 2. ಸಂಧ್ಯಾಭಾಷ್ಯ 3. ಸದಾಚಾರಸ್ಮೃತಿ ವ್ಯಾಖ್ಯಾನ 4. ತಂತ್ರಸಾರ ವ್ಯಾಖ್ಯಾನ 5. ಶಿಕ್ಷಾರಾಮಾಯಣ 6. ಗೀತಾ-

ತ್ರಿವಿಧಾರ್ಥ ವಿವೃತಿ 7. ಭಾಗವತ ವಿರೋಧೋದ್ಧಾರ 8. ಸೂತ್ರಭಾಷ್ಯಾರ್ಥ 9. ದ್ವಾದಶಸ್ತೋತ್ರ ಟೀಕಾ 10. ಸಂಧ್ಯಾಭಾಷ್ಯ 11. ಆಹ್ನಿಕ ಪದ್ಧತಿ 12. ಮಾನಸಪೂಜಾಪದ್ಧತಿ 13. ಪದ್ಯಮಾಲಾವ್ಯಾಖ್ಯಾನ 14. ನಾರದಸ್ತೋತ್ರ 15. ತತ್ತ್ವಬೋಧ ಮುಂತಾದವುಗಳು.

ಇವರು ಅನೇಕ ವರ್ಷಗಳ ಕಾಲ ಪಾಂಗರಿ ಗ್ರಾಮದಲ್ಲಿ ವಾಸವಾಗಿದ್ದು ಮಳೆಯಿಲ್ಲದೇ ಗ್ರಾಮಸ್ಥರು ಸಂಕಟಕ್ಕೆ ಒಳಗಾದಾಗ ರುದ್ರದೇವರಿಗೆ ರುದ್ರಾಭಿಷೇಕ ಮಾಡಿ ಅಕಾಲದಲ್ಲಿ ಮಳೆ ತರಿಸಿದ ತಪಸ್ವಿಗಳು. ಭೋಗಾಪುರದ ಪ್ರಾಣದೇವರ ನಿಗ್ರಹವನ್ನು ಕಳ್ಳರು ಭಗ್ನ ಮಾಡಿದಾಗ, ತಮ್ಮ ತಪಃಶಕ್ತಿಯಿಂದ ಹೋಮಾದಿಗಳ ಮೂಲಕ ಪುನರ್‌ಪ್ರತಿಷ್ಠೆ ಮಾಡಿದ್ದು ಇವರ ಇನ್ನೊಂದು ಮಹಿಮೆ.

ಇವರ ಅಗಾಧ ಮಹಿಮೆಯನ್ನು ಕೇಳಿದ ಆಗಿನ ಕಾಲದ ಉತ್ತರಾದಿ ಮಠಾಧೀಶರಾಗಿದ್ದ ಶ್ರೀಸತ್ಯಸಂಕಲ್ಪತೀರ್ಥರು ಇವರಿಗೆ ಶಾಲು, ಹಗಲು ದೀಪ, ಛತ್ರ, ಚಾಮರ ಮುಂತಾದುವುಗಳನ್ನು ನೀಡಿ ಗೌರವಿಸಿದರು.

ವಿಶೇಷವಾಗಿ ನಾರದ ಮಹರ್ಷಿಗಳ ಅನುಗ್ರಹಕ್ಕೆ ಪಾತ್ರರಾದ ಶ್ರೀನಿವಾಸಾ-ಚಾರ್ಯರು 1861ರ ದುರ್ಮತಿ ಸಂವತ್ಸರದ ಜೇಷ್ಠ ಶುದ್ಧ ಪಂಚಮೀ ದಿವಸ ನಿರ್ಯಾಣ ಮಾಡಿದರು.

## ಕೃತಜ್ಞತೆಗಳು

ಶ್ರೀ ವಿಷ್ಣುಸಹಸ್ರನಾಮಸ್ತೋತ್ರವನ್ನು ಅಪೂರ್ವ ನಾಲ್ಕು ವ್ಯಾಖ್ಯಾನಗಳ ಸಮೇತ ಗ್ರಂಥಸಂಪಾದನೆಯ ಕಾರ್ಯದಲ್ಲಿ ಪ್ರೇರಣೆಮಾಡಿದ ಶ್ರೀಹರಿವಾಯು ಗುರು-ಗಳಲ್ಲಿ ಹಾಗೂ ಸಕಲ ತತ್ತ್ವಾಭಿಮಾನಿದೇವತೆಗಳಲ್ಲಿ ಭಕ್ತಿಪೂರ್ವಕ ಅನಂತ ಸಾಷ್ಟಾಂಗ ಪ್ರಣಾಮಗಳನ್ನು ಸಮರ್ಪಿಸುವೆ.

ಈ ಕೃತಿಗೆ ಆಶೀರ್ವಚನವನ್ನು ನೀಡಿ ಪರಮಾನುಗ್ರಹವನ್ನು ಮಾಡಿದ ದ್ವೈತವೇದಾಂತ ಅಧ್ಯಯನ ಮತ್ತು ಸಂಶೋಧನಾ ಸಂಸ್ಥೆಯ ಮುಖ್ಯ ಸಂರಕ್ಷಕರೂ, ಮಾರ್ಗದರ್ಶಕರೂ, ಉತ್ತರಾದಿಮಠಾಧೀಶರೂ ಆದ ಪರಮಪೂಜ್ಯ ಶ್ರೀಶ್ರೀಸತ್ಯಾತ್ಮತೀರ್ಥ ಶ್ರೀಪಾದಂಗಳವರ ಪಾದಕಮಲಗಳಲ್ಲಿ ಭಕ್ತಿಪೂರ್ವಕ ಅನಂತ ಪ್ರಣಾಮಗಳನ್ನು ಸಮರ್ಪಿಸುತ್ತೇನೆ.

ಸಂಸ್ಥೆಯ ಅಧ್ಯಕ್ಷರೂ ಹಾಗೂ ಗೌರವ ನಿರ್ದೇಶಕರೂ ಆಗಿದ್ದ ಮತ್ತು ನನ್ನನ್ನು ಗ್ರಂಥಸಂಪಾದನೆ ಕಾರ್ಯದಲ್ಲಿ ಅಭಿರುಚಿ ಹುಟ್ಟಿಸಿ, ಎಲ್ಲ ರೀತಿಯ ಪ್ರೋತ್ಸಾಹ ನೀಡಿದ ದಿ. ಪ್ರೊ. ಕೆ.ಟಿ. ಪಾಂಡುರಂಗಿಯವರನ್ನು ಶ್ರದ್ಧಾ-ಭಕ್ತಿಪೂರ್ವಕ ಸ್ಮರಿಸುತ್ತೇನೆ.

ಪ್ರಸ್ತುತ ಸಂಸ್ಥೆಯ ಅಧ್ಯಕ್ಷರೂ ಹಾಗೂ ಗೌರವ ನಿರ್ದೇಶಕರೂ, ಅತ್ಯಂತ ದಕ್ಷರೂ, ಸದಾ ಪಾಠಪ್ರವಚನದಲ್ಲಿ ಆಸಕ್ತರೂ ಮತ್ತು ನನಗೆ ಎಲ್ಲ ರೀತಿಯಿಂದ ಪ್ರೋತ್ಸಾಹವನ್ನು ನೀಡುತ್ತಿರುವ ಪಂಡಿತರಾದ ಡಾ. ಸತ್ಯಧ್ಯಾನಾಚಾರ್ಯ ಕಟ್ಟಿ ಇವರಿಗೆ ಪ್ರಣಾಮಪೂರ್ವಕ ಕೃತಜ್ಞತೆಗಳು.

ಗ್ರಂಥಸಂಪಾದನೆಯ ಕಾರ್ಯದಲ್ಲಿ ಎಲ್ಲ ರೀತಿಯ ಮಾರ್ಗದರ್ಶನವನ್ನು ಮಾಡುತ್ತಿರುವ, ಸದಾ ಪಾಠಪ್ರವಚನಗಳಲ್ಲಿ ನಿರತರಾದ, ಮೈಸೂರಿನ ಪ್ರಾಚ್ಯ ವಿದ್ಯಾಸಂಶೋಧನಾಲಯದ ನಿವೃತ್ತ ಉಪನಿರ್ದೇಶಕರಾದ ಡಾ. ಆರ್.ಜಿ. ಮಾಳಗಿ ಅವರಿಗೆ ಪ್ರಣಾಮಪೂರ್ವಕ ಕೃತಜ್ಞತೆಗಳು.

ಅಂದವಾದ ಮುಖಪುಟವನ್ನು ರಚಿಸಿಕೊಟ್ಟ ಸ್ನೇಹಿತರಾದ ಶ್ರೀ ಕೆ.ಎಮ್. ಶೇಷಗಿರಿ ಇವರಿಗೆ ಮತ್ತು ಸಕಾಲದಲ್ಲಿ ಅಂದವಾಗಿ ಮುದ್ರಣ ಮಾಡಿದ ವಾಗರ್ಥ ಮುದ್ರಣಾಲಯದವರಿಗೆ ಕೃತಜ್ಞತಾಪೂರ್ವಕ ಅಭಿವಂದನೆಗಳು.

ಸದಾಚಾರ-ಸದ್ವಿಚಾರಗಳ ಬೀಜವನ್ನು ಬಿತ್ತಿದ ತೀರ್ಥರೂಪರಾದ ದಿ. ರಾಘವೇಂದ್ರಾಚಾರ್ಯ ಪಾಂಡುರಂಗಿ ಮತ್ತು ಮಾತೃಶ್ರೀ ದಿ. ಜಾನಕೀಬಾಯಿ ಪಾಂಡುರಂಗಿ ಇವರ ಉಪಕಾರವನ್ನು ಶ್ರದ್ಧಾ-ಭಕ್ತಿಪೂರ್ವಕ ಸ್ಮರಿಸುತ್ತೇನೆ.

''ಪ್ರೀತೋಽಸ್ತು ಕೃಷ್ಣಪ್ರಭುಃ''

ಬೆಂಗಳೂರು. ಸಜ್ಜನವಿಧೇಯ

8-5-2017, ಶ್ರೀವೇದವ್ಯಾಸಜಯಂತೀ **ಎಸ್.ಆರ್. ಪಾಂಡುರಂಗಿ**

# विषयानुक्रमणिका





# श्रीविष्णुसहस्रनामस्तोत्रम्

## वैशम्पायन उवाच

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ १ ॥

## युधिष्ठिर उवाच

किमेकं दैवतं लोके किं वाऽप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ २ ॥

को धर्मः सर्वधर्माणां भवतः परमो मतः ।
किं जपन् मुच्यते जन्तुर्जन्मसंसारवन्धनात् ॥ ३ ॥

## भीष्म उवाच

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन् नामसहस्रेण पुरुषः सततोत्थितः ॥ ४ ॥

तमेव चार्चयन् नित्यं भक्त्या पुरुपमव्ययम् ।
ध्यायन् स्तुवन् नमस्यंश्च यजमानस्तमेव च ॥ ५ ॥

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन् नित्यं सर्वदुःखातिगो भवेत् ॥ ६ ॥

ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७ ॥

एप मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद् भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ ८ ॥

परमं यो महत् तेजः परमं यो महत् तपः ।
परमं यो महद् ब्रह्म परमं यः परायणम् ॥ ९ ॥

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १० ॥

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११ ॥

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १२ ॥

यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १३ ॥

ऋषिर्नाम्नां सहस्रस्य वेदव्यासो महामुनिः ।
छन्दोऽनुष्टुप् तथा देवो भगवान् देवकीसुतः ॥ १४ ॥

अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः ।
त्रिसामा हृदयं तस्य शान्त्यर्थे विनियुज्यते ॥ १५ ॥

**ॐ नमो भगवते वासुदेवाय ॐ**

ओं विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद् भूतभृद् भावो भूतात्मा भूतभावनः ॥ १ ॥

पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ २ ॥

योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥ ३ ॥

सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ ४ ॥

स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ ५ ॥

अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ ६ ॥

अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥ ७ ॥

ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ ८ ॥

ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ ९ ॥

सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥ १० ॥

अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥ ११ ॥

वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ १२ ॥

रुद्रो वहुशिरा वभ्रुर्विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतस्थाणुर्वरारोहो महातपाः ॥ १३ ॥

सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः ॥ १४ ॥

लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ १५ ॥

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥ १६ ॥

उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।
अतीन्द्रः सङ्ग्रहः सर्गो धृतात्मा नियमो यमः ॥ १७ ॥

वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ १८ ॥

महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥ १९ ॥

महेष्वासो महीभर्ता श्रीनिवासः सताङ्गतिः ।
अनिरुद्धः सदा(सुरा)नन्दो गोविन्दो गोविदाम्पतिः॥ २०॥

मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ २१ ॥

अमृत्युः सर्वदृक् सिंहः सन्धाता सन्धिमान् स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ २२ ॥

गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ २३ ॥

अग्रणीर्ग्रामणीः श्रीमान् न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ २४ ॥

आवर्तनो निवृत्तात्मा संवृतः सम्प्रमर्दनः ।
अहःसंवर्तको वह्निरनिलो धरणीधरः ॥ २५ ॥

सुप्रसादः प्रसन्नात्मा विश्वधृग् विश्वभुग् विभुः ।
सत्कर्ता सत्कृतिः साधुर्जह्नुर्नारायणो नरः ॥ २६ ॥

असङ्ख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः ॥ २७ ॥

वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥ २८ ॥

सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥ २९ ॥

ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ ३० ॥

अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥ ३१ ॥

भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत् कान्तः कामः कामप्रदः प्रभुः ॥ ३२ ॥

युगादिकृद् युगावर्तो नैकमायो महाशनः ।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ३३ ॥

इष्टो विशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत् कर्ता विश्वबाहुर्महीधरः ॥ ३४ ॥

अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ३५ ॥

स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥ ३६ ॥

अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ३७ ॥

पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ३८ ॥

अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः ॥ ३९ ॥

विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥ ४० ॥

उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ४१ ॥

व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥ ४२ ॥

रामो विरामो विरजो मार्गो नेयो नयोऽनयः ।
वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ४३ ॥

वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ४४ ॥

ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ४५ ॥

विस्तारः स्थावरस्थाणु प्रमाणं वीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥ ४६ ॥

अनिर्विण्णः स्थविष्ठो(ऽ)भूर्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥ ४७ ॥

यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः ।
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ४८ ॥

सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ४९ ॥

स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ५० ॥

धर्मकृद् धर्मगुब् धर्मी सदसत् क्षरमक्षरम् ।
अविज्ञाता सदस्रांशुर्विधाता कृतलक्षणः ॥ ५१ ॥

गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ५२ ॥

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरभूतभृद् भोक्ता कपीन्द्रो भूरिदक्षिणः ॥ ५३ ॥

सोमपोऽमृतपः सोमः पुरुजित् पुरुसत्तमः ।
विनयो जयः सत्यसन्धो दाशार्हः सात्वतां पतिः ॥ ५४ ॥

जीवो विनयितासाक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥ ५५ ॥

अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥ ५६ ॥

महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ५७ ॥

महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ५८ ॥

वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ५९ ॥

भगवान् भगहाऽऽनन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ ६० ॥

सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।
दिवःस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ६१ ॥

त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।
सन्यासकृच्छमः शान्तो निष्ठा शान्ति परायणम्(ः) ॥६२॥

शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ६३ ॥

अनिवर्ती निवृत्तात्मा सङ्क्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥ ६४ ॥

श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।
श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः ॥ ६५ ॥

स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा(ऽ)विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ ६६ ॥

उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः ।
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥ ६७ ॥

अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ६८ ॥

कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ ६९ ॥

कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥ ७० ॥

ब्रह्मण्यो ब्रह्मकृद् ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद् ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ७१ ॥

महाक्रमो महाकर्मा महातेजा महोरगः ।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥ ७२ ॥

स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ ७३ ॥

मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ७४ ॥

सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ ७५ ॥

भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ७६ ॥

विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ ७७ ॥

एको नैकः सवः कः किं यत् तत् पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ७८ ॥

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥ ७९ ॥

अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥ ८० ॥

तेजोवृषो द्युतिधरः सर्वशस्त्रभृतांवरः ।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥ ८१ ॥

चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ८२ ॥

समावर्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ ८३ ॥

शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥ ८४ ॥

उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ॥ ८५ ॥

सुवर्णविन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ॥ ८६ ॥

कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः ।
अमृतांशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥ ८७ ॥

सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः ॥ ८८ ॥

सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद् भयनाशनः ॥ ८९ ॥

अणुर्बृहत् कृशः स्थूलो गुणभृन्निर्गुणो महान् ।
अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः ॥ ९० ॥

भारभृत् कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥ ९१ ॥

धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितः सर्वसहो नियन्ता नियमो यमः ॥ ९२ ॥

सत्त्ववान् सात्त्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत् प्रीतिवर्धनः ॥ ९३ ॥

विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग् विभुः ।
रविर्विरोचनः सूर्यः सविता रविलोचनः ॥ ९४ ॥

अनन्तो हुतभुग् भोक्ता सुखदो(ऽने)नैक(जो)दोऽग्रजः ।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥ ९५ ॥

सनात् सनातनतमः कपिलः कपिरव्य(प्य)यः ।
स्वस्तिदः स्वस्तिकृत् स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः ॥

अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥ ९७ ॥

अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणांवरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ ९८ ॥

उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥ ९९ ॥

अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥ १०० ॥

अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ १०१ ॥

आधारनिलयो धाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ १०२ ॥

प्रमाणं प्राणनिलयः प्राणभृत् प्राणजीवनः ।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥ १०३ ॥

भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ १०४ ॥

यज्ञभृद् यज्ञकृद् यज्ञी यज्ञभुग् यज्ञसाधनः ।
यज्ञान्तकृद् यज्ञगुह्यमन्नमन्नाद एव च ॥ १०५ ॥

आत्मयोनिः स्वयंजातो वैखानः सामगायनः ।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥ १०६ ॥

शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥ १०७ ॥

॥ सर्वप्रहरणायुध ॐ नम इति ॥

## फलस्तुतिः

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ १ ॥

य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात्किञ्चित् सोऽमुत्रेह च मानवः ॥ २ ॥

वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्यात् शूद्रः सुखमवाप्नुयात् ॥ ३ ॥

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात् कामी प्रजार्थी चाप्नुयात् प्रजाः ॥ ४ ॥

भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत् प्रकीर्तयेत् ॥ ५ ॥

यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥ ६ ॥

न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो मतिमान् बलरूपगुणान्वितः ॥ ७ ॥

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ ८ ॥

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ ९ ॥

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ १० ॥

न वासुदेवभक्तानां न भयं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं वाऽप्युपजायते ॥ ११ ॥

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ १२ ॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३ ॥

द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १४ ॥

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥ १५ ॥

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजोवलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १६ ॥

सर्वागमानामाचारः प्रथमं परिकल्पते ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ १७ ॥

ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चैवं जगन्नारायणोद्भवम् ॥ १८ ॥

योगो ज्ञानं तथा साङ्ख्यं विद्याः शिल्पादि कर्म च ।
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ १९ ॥

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रीन्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥ २० ॥

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।
पठेद्य इच्छेत् पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ २१ ॥

विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम्
न ते यान्ति पराभव ॐ नमः इति ॥ २२ ॥

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि
श्रीविष्णुसहस्रनामस्तोत्रं सम्पूर्णम् ॥



॥ श्रीगुरुभ्यो नमः ॥

श्रीमज्जयतीर्थयतिशिष्यश्रीविद्याधिराजतीर्थयतिविरचिता

# विष्णुसहस्रनामनिरुक्तिः

ज्ञानानन्दघनानन्ततनवेऽनन्तशक्तये ।
नमोऽनन्ताभिधानाय रमानाथाय विष्णवे ॥

सुधां बोधमयीं पीत्वा यन्मुखाम्बुरुहोदिताम् ।
प्रापन्नमृततां सन्तो वेदव्यासं नमामि तम् ॥

चित्ते मे पूर्णबोधोऽस्तु वाचि मे भातु भारती ।
क्रियासुर्गुरवः सर्वे दयां मयि दयालवः ॥

तत्प्रसादाद्यथाशक्ति शतार्थस्य निरन्तरम् ।
**विष्णुनामसहस्रस्य निरुक्तिः सम्प्रकाश्यते ॥**

"शास्त्रेषु भारतं सारं तत्र नामसहस्रकम् ।
वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा ।
न भारतसमं शास्त्रं कुत एवानयोः समम् ।
भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ।
देवैर्ब्रह्मादिभिः सर्वैर्ऋषिभिश्च समन्वितैः ।
व्यासस्यैवाऽऽज्ञया तत्र त्वत्यरिच्यत भारतम् ।
महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ।
स्वयं नारायणो देवैः ब्रह्मरुद्रेन्द्रपूर्वकैः ।
अर्थितो व्यासतां प्राप्य केवलं तत्त्वनिर्णयम् ।
चकार पञ्चमं वेदं महाभारतसञ्ज्ञितम्" ॥ इति ब्रह्माण्डे ।

## वैशम्पायन उवाच

**श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।**
**युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ १ ॥**

**'श्रुत्वा धर्मान्'** इत्यादिकं सहस्रनामकथनप्रस्तावार्थम् । तस्यार्थः– वेदविहितान् धर्मबुद्ध्या शिष्टैरनुष्ठेयान् धर्मान् अभ्युदयादिहेतुभूतान् तत्रापि विशेषतः पावनानि कात्स्न्र्येन सर्वप्रकारैः श्रुत्वा तत्राऽत्यन्तिक-पुरुषार्थाभावेनापरितोषात् पुनरेव शन्तनुसुतं भीष्मं युधिष्ठिर उवाच **'किमेकम्'**– इति द्वाभ्याम्–

## युधिष्ठिर उवाच

**किमेकं दैवतं लोके किं वाऽप्येकं परायणम् ।**
**स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ २ ॥**

सर्वोत्तमवस्तुद्वयाभावात् यदेकं लोके लोकनहेतुभूते समस्तशास्त्रे प्रतिपाद्यं दैवतं तत् किम्? यच्चैकं परायणं प्राप्तव्यं प्रपन्नानामशेष-क्लेशापनयनक्षमं वस्तु तद्वा किम्? कं देवं गुणविशिष्टतया कीर्तयन्तः कं वा पूजयन्तो मनुष्याः सर्वपुरुषार्थान् प्राप्नुयुः? स्तवनग्रहणं ध्यानप्रणामयजनानामुपलक्षणार्थम् ।

**को धर्मः सर्वधर्माणां भवतः परमो मतः ।**
**किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ ३ ॥**

सर्वधर्माणां मध्ये परमः भवतः को धर्मो मतः? किं जप्यं जपन् जन्तुर्जन्मादिरूपसंसारबन्धनान्मुच्यत इति ॥ ३ ॥

बुद्धिसन्निधानक्रमेण प्रश्नान् परिहरन् श्रीभीष्म उवाच **''जगत् प्रभुम्''** इत्यादिभिः पञ्चभिः–

### भीष्म उवाच

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन् नामसहस्रेण पुरुषः सततोत्थितः ॥ ४ ॥

तमेव चार्चयन् नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन् स्तुवन् नमस्यंश्च यजमानस्तमेव च ॥ ५ ॥

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन् नित्यं सर्वदुःखातिगो भवेत् ॥ ६ ॥

ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७ ॥

एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद् भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ ८ ॥

**'सर्वदुःखातिगो भवेत्'** इति पूर्वाभ्यां श्लोकाभ्यामुत्तरेण च सम्बध्यते। **'ब्रह्मण्यम्'** इत्यत्र **'स्तुवन्'** इति च । **'जगत्प्रभुम्'**– इत्यादिविशेषणैर्भगवतो देवदेवस्य सर्वाश्रयत्वाद्युक्तेराद्यप्रश्नद्वयस्य परिहारः । **'नामसहस्रेण स्तुवन्'** इति **'किं जपन्'** इत्यस्य परिहारः ।

**'तमेव च'**– इत्यादिना **'स्तुवन्तः कं कम्–'** इत्यादेः परिहारः ।

पुण्डरीकाक्षं स्तवैरर्चेदिति यत् स एष धर्मः सर्वधर्माणामधिकतमो मत इति **'को धर्मः–'** इत्यस्य परिहारः ।

सततोत्थित इत्यनेन, नित्यशब्दाभ्याम्, सदापदेन च आदर-नैरन्तर्यादतिदीर्घकालसेवितमेव स्तवनादिकं सर्वदुःखनिवृत्तिसाधनं नान्यथेति दर्शयति । अर्चनाद्यपेक्षया गुणसङ्कीर्तनलक्षणस्तुतेर्भगव-

त्प्रीत्यतिशयसाधनत्वद्योतनाय पुनः पुनः स्तुत्युक्तिः । तथा च सौपर्णश्रुतिः–

''न तादृशी प्रीतिरीड्यस्य विष्णो-
र्गुणोत्कर्षज्ञातरि यादृशी स्यात् ।
तत्प्रीणनान्मोक्षमाप्नोति सर्व-
स्ततो वेदास्तत्पराः सर्व एव'' ॥ इति ।

**'भक्त्या'** इत्यनेन भक्तिपूर्वकमेवार्चनादिकं सफलं नान्यथेति कथयति ।

''ध्यानं च गुरुशुश्रूषा नित्यनैमित्तिकाः क्रियाः ।
तीर्थदानजपाद्याश्च स्वाध्यायो हरिकीर्तनम् ॥
द्वादश्यादिव्रतं चैव तुलस्याद्यैरथार्चनम् ।
सर्वं भक्त्यर्थमुद्दिष्टं निष्फलं तु तया विना'' ॥ इति हरिवंशे ॥

''सर्वस्मादुत्तम इति सम्यक् स्नेहयुता मतिः ।
सुस्थिरा भक्तिरुद्दिष्टा तया मोक्षो न चान्यतः ॥
तया मोक्षो भवत्येव सा चेत् पूर्णा स्वयोग्यतः ।
अपरोक्षदृशा युक्ता सा पूर्णेत्यभिधीयते ॥

द्वेषोज्झिता च या भक्तिः सा मोक्षं नियमान्नयेत् ।
निर्दुःखं तु सुखं नित्यं मोक्ष इत्यभिधीयते'' ॥

द्वेषस्वरूपमुक्तमन्यत्र–

''जीवाभेदो निर्गुणत्वमपूर्णगुणता तथा'' इत्यादि ॥ ४-८ ॥

किं तन्नामसहस्रं यज्जपात् सर्वदुःखनिवृत्तिरित्यपेक्षायां तत्कथनाय भगवन्माहात्म्याभिधानपूर्वकं श्रोतारमभिमुखीकरोति **'परमम्–'** इत्यादि चतुर्भिः–

परमं यो महत् तेजः परमं यो महत् तपः ।
परमं यो महद् ब्रह्म परमं यः परायणम् ॥ ९ ॥

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १० ॥

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११ ॥

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १२ ॥

सर्वत्राल्पार्थताव्यावृत्त्यर्थं परममित्यादिविशेषणम् ।

'येनाऽदित्यस्तपति तेजसा भ्राजसा च' ।

'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' ।

'यस्य ज्ञानमयं तपः' ।

'तदेव ब्रह्म परमं कवीनाम्' ।

'नारायणः परं ब्रह्म' ।

'नारायणं महाज्ञेयं विश्वात्मानं परायणम्' ।

'अस्य जानन्तो नाम चिद् विविक्तन'

'भद्रं कर्णेभिः शृणुयाम देवाः' ।

''मातृहा पितृहा गोघ्नो गुरुहाऽऽचार्यहाऽथवा ।
श्वादः पुल्कसको वाऽपि शुद्ध्येरन् यस्य कीर्तनात्'' ॥

''यस्य संस्मरणादेव वासुदेवस्य चक्रिणः ।
कोटिजन्मार्जितं पापं तत्क्षणादेव नश्यति'' ॥

"किं तस्य बहुभिस्तीर्थैः किं तस्य बहुभिर्व्रतैः ।
यो नित्यं ध्यायते देवं नारायणमनन्यधीः" ॥

"यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः" ॥

"स्मृते सकलकल्याणभाजनं यत्र जायते ।
पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम्" ॥

"सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः" ॥

"यो देवेष्वधिदेव एक आसीत् स नो बन्धुः" ।

"यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा"।

"पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावः"॥

इत्यादिषु यः परममहातेजस्त्वादिरूपेण प्रसिद्धः । यस्माच्चाऽदिकल्पे सर्वाणि भूतानि जायन्ते । यस्मिंश्च कल्पान्ते प्रळीयन्ते–

"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति ।
यत् प्रयन्त्यभिसंविशन्ति" इति श्रुतेः । तस्य सर्वेश्वरस्य विष्णोः, पापस्य भयस्य चोपघातकं नामसहस्रम्, हे महीपाल, मत्तः शृण्विति ॥ ९-१२ ॥

ननु नाम्नां कथं विष्णौ प्रवृत्तिः? न तावद् रूढ्या सा । रुद्रादिशब्दानां तदभावात् । ततो गुणसङ्कीर्तनानुपपत्तेश्च । नापि योगेन । अन्यत्र प्रसिद्धिविरोधात्, इत्याशङ्कां परिहरन् नामसहस्रकथनं प्रतिजानीते–

**यानि नामानि गौणानि विख्यातानि महात्मनः ।**
**ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १३ ॥**

**यानीति ।** यानि नामानि गौणानि, गुणोऽवयवार्थः प्रवृत्तिनिमित्तम्, तेन प्रवृत्तानि यौगिकानीति यावत् । नचान्यत्र प्रसिद्धिविरोधः । यतो विख्यातानि । रूढानीत्यर्थः । नचानुपलम्भबाधः । यतः ऋषिभिः ज्ञानिभिः परिगीतानि । अज्ञरूढ्यभावेऽपि विद्वत् प्रसिद्धानीत्यर्थः । यद्वा विशेषतः ख्यातानीति विद्वद्रूढत्वमुच्यते । ऋषिभिः परितः पठिता-नीत्यधिकारिविशेषापेक्षया नामान्तरेभ्यो विश्वादीनां विशेष उच्यते । तानि महात्मनो विष्णोः नामानि भूतये सर्वपुरुषार्थसिद्ध्यर्थं वक्ष्यामीति ॥ १३ ॥

ननु सर्वशब्दानां भगवदेकनिष्ठत्वे कथमन्यत्र व्यवहारः? समाकर्षा-दिति ब्रूमः । तदुक्तं गारुडे–

**''एवमेव हि शब्दानां प्रसिद्धिरपि लौकिकी ।**
**वाचकत्वं प्रधानस्य त्वितरस्य तदन्वयात्''** ॥ इति ।

पाद्मे च–

**''परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि ।**
**व्यवह्रियन्ते सततं लोकवेदानुसारतः''** ॥ इति ।

अनुव्याख्याने च–

**''तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः ।**
**प्रयोजनवहुत्वेन तस्य तस्याविरोधतः ॥**
**इतो हि रूढताऽन्येषामुपजीव्यत्वमत्र हि ।**
**तत्सिद्धिस्तदपेक्षा च साऽपेक्षा च हरीच्छया''** ॥ इत्यादि ।

न च तादात्म्येनान्यत्रप्रसिद्धशब्दवाच्यत्वम्–

"सर्वशब्दाभिधेयत्वं सर्वान्तर्यामिकत्वतः ।
न तु सर्वस्वरूपत्वात् सर्वभिन्नो यतो हरिः ॥
अन्तर्यामिस्वरूपेण ब्रह्मरुद्राद्यभिन्नता ।
न तु जीवस्वरूपेण जीवाद्भिन्नो यतो हरिः ॥
विशेपाभेदवचनं सन्निधानविशेषतः ।
सन्निधानं तु तत् प्रोक्तं सामर्थ्यव्यञ्जनं हरेः ॥" इति भविष्यत्पुराणे ।

"यदधीना यस्य सत्ता तत् तदित्येव भण्यते ।
विद्यमाने विभेदेऽपि मिथो नित्यं स्वरूपतः" ॥
इति भविष्यत्पर्वणि ।

"कर्मकर्तृक्रियादीनां सत्ता वृत्तिस्तथैव च ।
तदधीनं यतः सर्वं सर्वरूपस्तदुच्यते" ॥ इति ब्रह्मतर्के ।

ब्रह्मणिस्थोऽसृजद् विष्णुः स्थित्वा रुद्रे त्वभक्षयत् ।
पृथक् स्थित्वा जगत् पाति तद्ब्रह्माद्याह्वयो हरिः ॥" इति ब्राह्मे ।

"स्त्रीरूपश्चैव पुंरूपो यस्मान्नारायणः स्थितः ।
पुमान् स्त्री चेति वाच्योऽसौ वैलक्षण्येन चोच्यते ॥
विष्णोर्नपुंसकाकारो नैवास्ति क्वचन प्रभोः ।
तथाऽप्यरागाकृष्टत्वात् तच्छब्दैरपि गीयते ॥" इति गारुडे ।

"मत्स्यकूर्मवराहाश्च नृसिंहवटुभार्गवाः ।
राघवः कृष्णबुद्धौ च कल्किव्यासैतरेयकाः ॥

दत्तो धन्वन्तरिर्यज्ञः कपिलो हंसतापसौ ।
शिंशुमारो हयास्यश्च हरिः कृष्णश्च धर्मजः ।
नारायणस्तथेत्याद्याः साक्षान्नारायणः स्वयम् ।
ब्रह्मरुद्रौ शेषविपौ शक्राद्या नारदस्तथा ।
सनत्कुमारः कामभावोऽप्यनिरुद्धो विनायकः ।
सुदर्शनाद्यायुधानि पृथ्वाद्याश्चक्रवर्तिनः ।
इत्याद्या विष्णुनाऽऽविष्टा भिन्नाः संसारिणो हरेः'' ॥

इत्यादि महावराहे

''क्षितिपा मनुष्यगन्धर्वा दैवाश्च पितरश्चिराः ।
आजानजाः कर्मजाश्च तात्त्विकाश्च शचीपतिः ॥

रुद्रो ब्रह्मेति क्रमशस्तेषु चैवोत्तरोत्तरम् ।
नित्यानन्दे च भोगे च ज्ञानैश्वर्यसुखादिषु ॥

सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरम् ।
पूज्यन्ते चावरैस्ते तु सर्वपूज्यश्चतुर्मुखः'' ॥ इत्यादि गारुडे ।

''असुरा आसुरेणैव स्वभावेन च कर्मणा ।
ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात् ॥

देवा दैवस्वभावेन कर्मणा चाप्यसंशयम् ।
सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्णवीम् ॥

नानयोरन्यथाभावः कदाचित् क्वापि विद्यते ।
मानुषा मिश्रमतयो विमिश्रगतयोऽपि च'' ॥ इति स्कान्दे ।

यथाच सर्ववेदानां इष्टसाधने सर्ववैलक्षण्यसर्वोत्तमत्वादिलक्षणे विष्णौ तात्पर्यं तथोपपादितमाचार्यैरेवेति तत्रैव द्रष्टव्यम् ।

अत्र क्वचिच्छब्दाभेदेऽपि प्रवृत्तिनिमित्तभेदात्, प्रवृत्तिनिमित्तैक्येऽपि शब्दभेदात्, सर्वथा तत्तच्छब्दवाच्यमूर्तिभेदाच्च, बह्वर्थत्वाच्च न वैयर्थ्यादीति न सहस्रनामत्वविरोधः ॥ १३ ॥

## ऋषिछन्दोदेवताः

**ऋषिर्नाम्नां सहस्रस्य वेदव्यासो महामुनिः ।**
**छन्दोऽनुष्टुप् तथा देवो भगवान् देवकीसुतः ॥ १४ ॥**

**अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः ।**
**त्रिसामा हृदयं तस्य शान्त्यर्थे विनियुज्यते ॥ १५ ॥**

अस्य श्री विष्णोः दिव्यसहस्रनामस्तोत्रमहामन्त्रस्य भगवान् वेदव्यास ऋषिः अनुष्टुप् छन्दः, श्रीमहाविष्णुः देवता, श्रीमहाविष्णुप्रसादसिद्ध्यर्थे पारायणे विनियोगः ।

## ॐ नमो भगवते वासुदेवाय ॐ

**ॐ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।**
**भूतकृद् भूतभृद् भावो भूतात्मा भूतभावनः ॥ १ ॥**

**'ओमित्येतदक्षरमुद्गीथमुपासीत'** इत्यादि **'ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम्'** इत्युक्तरीत्या व्याप्त्यादिज्ञानादिसर्वगुणपूर्णत्वं जगद्व्याप्तत्वं चाभिदधदोङ्कार आदिमः श्रुतितो माङ्गलिकश्च ।

## १. विश्वम्

वि.– सर्वगुणेषु भूमगुणस्य ज्यायस्त्वात् स एवाऽदावुच्यते– **विश्वमिति ।**

**★विश्वं पूर्णम् ।**

"सर्वं समस्तं विश्वं च अनन्तं पूर्णमेव च" इत्यभिधानात् ।
"विश्वनामा स भगवान् यतः पूर्णगुणः प्रभुः" इति च ।

**★विश्वकारणत्वाद्वा विश्वम् ।**

"कार्यकारणयोरेकशब्दव्यवहृतिर्भवेत्" इति शब्दनिर्णये ।

**★ जीवनियामकत्वाद् वा विश्वम् ।**

"शरीरेषु प्रविष्टत्वाद् विश्वो जीव उदीर्यते ।
जीवस्य तदधीनत्वाद् विष्णुर्विश्वमिति स्मृतः" ॥
इति माहात्म्ये ।

**★ नियामकतया भूतानि विशतीति विश्वम् ।**

"यदोषधीभिः पुरुषान् पशूंश्च विवेश भूतानि चराचराणि"
इति श्रुतेः ।

*** प्रळये च मोक्षे च भूतान्यत्र विशन्तीति वा विश्वम् ।**

"यत् प्रयन्त्यभिसंविशन्ति" इति श्रुतेः ।

*** विशिष्टसुखज्ञानरूपत्वाद् वा विश्वम् ।**

"विज्ञानमानन्दं ब्रह्म" इत्यादिश्रुतेः ।
शकारवकारावानन्दज्ञानवाचिनौ ।

*** विशिष्टानन्दपूर्णत्वाद् वा विश्वम् ।**

"वेति पूर्णत्ववाची स्यात्" इति वचनात् ।

*** विशिष्टसु(ख)बलरूपत्वाद् वा विश्वम् ।**

**"सुवः सुबलरूपत्वात्"** इति लिङ्गाद् वशब्दस्य बलवाचित्वावगमादिति ।

एवं यथासम्भवं बहूनि निर्वचनान्यूहनीयानि । विस्तरभयान्न लिख्यते । एवं निर्वचनमात्रमत्र क्रियते । प्रकृतिप्रत्ययविशेषास्तु व्याकरणेभ्योऽवगन्तव्याः । एवमुत्तरत्रापि ।

## श्रीरघुनाथतीर्थविरचितबृहतीसहस्रव्याख्यानादुद्धृतभागोपेता

## ॥ श्रीविष्णुसहस्रनामव्याख्या ॥

### १. विश्वम्

**र.–** ***विश्वं वायुं अभीष्टदानादिना वाति गन्धयति इति विश्वम् ।**

## श्रीसत्यसन्धयतिराजकृतं श्रीविष्णुसहस्रनामभाष्यम्

**स.–** इह हि नानाविधव्यसनराशिभवावभुग्नशिरसां कलिमलावकुण्ठितमनसां निःश्रेयससाधनसंविद्विधुराणां वेदानधिकारिणां स्त्रीशूद्रादीनां संसारार्णवतारणाय परमकारुणिककमला-

कमलासनमुखसुरवरनिकरप्रार्थितेन निर्व्याजकरुणश्रीरमणेन स्वीकृतव्यासरूपेण निर्मितसहस्रनामानि पूर्वतनैर्व्याख्याता-न्यपि बुद्धिशुद्धये यथामति व्याख्यास्यन्ते ।

## १. विश्वम्

**★ विश्वं जगत्प्रविष्टम् ।**

'विश् प्रवेशने' इति धातुः ।

'तदेव अनुप्राविशत्' इति श्रुतेः ।

**★ 'सर्वत्र प्रविष्टत्वात् ज्ञानरूपत्वात् वा विश्वम् ।**

'वा गतिगन्धनयोः' इति धातुः । विश् च तत् वं च इति विग्रहः ।

**★ विः पक्षी गरुडः तेन श्वयति गच्छति इति वा ।**

**★ विशेषेण श्वयति व्याप्नोति इति वा ।**

**★ विशेषेण वर्धत इति वा ।**

'टुओश्वि गतिवृद्ध्योः' इति धातुः ।

**★ 'वायुमन्तर्यामितया वर्तयति इति विश्वशब्दोपपदात्**

'वृतु वर्तने' इत्यतो डः । 'लोपः समानः' इति वलोपः ।
'गुहाशयां निहिताः सप्तसप्त' इतिवत् ।

**★ विश्वं जगद्वर्तयति इति वा ।**

**★ विश्वस्य कारणत्वात् वा । विश्वम् ।**

'कार्यकारणयोः एकशब्दव्यवहृतिः भवेत्' इति शब्दनिर्णये ।

**★ जीवनियामकत्वाद्वा । (विश्वम्)**

'शरीरेषु प्रविष्टत्वात् विश्वो जीव उदीर्यते ।
जीवस्य तदधीनत्वात् विष्णुः विश्व इति स्मृतः' ॥ इत्युक्तेः ।

**★ विशिष्टसुखज्ञानरूपत्वाद्वा । विशिष्टसुखबलरूपत्वाद्वा ।**

'विश्वं सुबलरूपत्वात्' इत्युक्तेः । अत्र प्रमाणे सुशब्दः सुखवाची ।

'स्वित्यानन्दः समुद्दिष्टः' इत्युक्तेः ।

## श्रीनिवासाचार्यविरचितबृहतीसहस्रानुसारितात्पर्यार्थसमेतम्

## ॥ श्रीविष्णुसहस्रनामस्तोत्रम् ॥

### १. विश्वम्

**श्री.– ★विश्वं – वाय्वन्तर्यामि ।**



### २. विष्णुः

**वि.–** विष्णुरिति–

**★ व्यापकत्वाद् विष्णुः ।**

''अथ कस्मादुच्यते महाविष्णुरिति यस्मात् स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वान् आत्मनः सर्वाणि भूतानि व्याप्नोति व्यापयति'' इत्यादितापनीयश्रुतेः ।

**★अथवा पकारणकारौ चेष्टाबलवाचिनौ ।**

''णकारो बलम् । षकारः प्राण आत्मा'' इति श्रुतेः । तथाच **विशिष्टचेष्टाबलशीलत्वाद् विष्णुः ।** उक्तं च–

''विशिष्टबलचेष्टात्वाद् विष्णुरित्यभिधा हरेः ।
प्राणं बलं षकारं च णकारं चाऽह हि श्रुतिः ।
उपसर्गत्वतो वेस्तु ताच्छील्यार्थादुनस्तथा ।
णकारश्च षकारश्च नामरूपतया मतौ'' ॥ इति ।

र.– ***विशेषेण प्राणिचेष्टकत्वाद्यैश्वर्यबलादिषड्गुणयोगात् विष्णुः ।**

स.– ***सर्वव्यापित्वाद् विष्णुः ।**

'विषॢ व्याप्तौ' इति धातुः ।

**★ सर्वप्रवेशित्वाद्वा ।**

'विश् प्रवेशने' ।

**★ त्रिविक्रमरूपेण पादक्रमणाद् विष्णुः ।**

गत्यर्थाद्वयतेः कर्त्रर्थकष्णुप्रत्ययः ।

श्री.–***विष्णुः – विशेषेण चेष्टकरूपो बलादिरूपश्च ।**



## ३. वषट्कारः

वि.– ***यज्ञभूम्यां वषडिति क्रियते आक्रियत इति वषट्कारः ।**

''यज्ञो यज्ञपुमान् नाम यज्ञेशो यज्ञभावनः ।
यज्ञभुक् चेति पञ्चात्मा यज्ञेष्विज्यो हरिः स्वयम् ।
आश्रावयास्तु श्रौषड्यजाथो येयजामहे ।
वषट्कारान्तिकैर्नित्यं यजुर्भिः पञ्चभिर्विभुः'' ॥

इति तन्त्रसारे ।

''चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु'' ॥ इति च भारते ।

*बलषड्गुणरूपः कर्ता चेति वषट्कारः ।

*भक्तानां बलषड्गुणान् करोतीति वा वषट्कारः ।

र.– *वः बलं तत्प्रभृतिषड्गुणान् करोति इति वषट्कारः ।

स.– *वर्तन्ते इति वाः 'वृतु वर्तने' । षट् ऐश्वर्य–वीर्य–यशः–श्री–ज्ञान–वैराग्याणि यस्मिन् सः वषट् । षड्गुणत्वेन वर्तते इति वा । वषडित्याक्रियते इति वषट्कारः ।

श्री.– *वषट्कारः = बलादिषड्गुणकारी ।



## ४. भूतभव्यभवत्प्रभुः

वि.– *भूतभव्यभवन्ति अतीतानागतवर्तमानानि जगन्ति तेषां प्रभुरीश्वरः ।

कालत्रयेऽपि विद्यमानत्वाद् भूतादिरूपः प्रभुश्चेति वा भूतभव्यभवत्प्रभुः ॥

र.– *भूतभव्यभवतां समस्तानां प्रजानां प्रकर्षेण भूतिः यस्मात् सः भूतभव्यभवत्प्रभुः ।

स.– *भूतभव्यभवतां अतीतागामिवर्तमानानां प्रभुः ।

*भूतं प्रभूतं मङ्गलं यस्मात् सः भूतभव्यः, स चासौ भवत्प्रभुश्चेति ।

श्री.– *भूतभव्यभवत्प्रभुः = त्रैकालिकजनप्रकृष्टभूतिदः ।



## ५. भूतकृत्

वि.– ★ भूतानि करोति सृजति, कृणोति हिनस्तीति वा भूतकृत् ।

र.– ★ भूतः भूतनाथः तं करोति इति भूतकृत् ।

स.– ★ भूतानि कृन्तति इति भूतकृत् ।

'कृती छेदने' भूताद्युपद्रवपरिहर्ता इत्यर्थः ।

श्री.– ★ भूतकृत् = रुद्रोत्पादकः ।



## ६. भूतभृत्

वि.– ★ भूतानि बिभर्ति धारयति पोषयतीति वा भूतभृत् ।

र.– ★ भूतानि हरति इति भूत(हृत्)भृत् ।

★ भूतानि विभर्ति इति वा भूतभृत् ।

स.– ★ भूतानि प्राणिनः करोति इति वा भूतस्रष्टा इत्यर्थः ।

★ भूतानि बिभर्ति इति भूतभृत् ।

श्री.– ★ भूतभृत् – सर्वप्राणिपोषकः ।



## ७. भावः

वि.– ★ भावयतीति भावः ।

"सृष्टिः स्थितिश्च संहारो भावनं समुदाहृतम् ।
तद् यः करोति पुरुषः स भाव इति कीर्तितः" ।। इति विवेके ।

★ जगतो भां प्रकाशं वर्तयतीति वा भावः ।

"तस्य भासा सर्वमिदं विभाति" इति श्रुतेः ।

र.– ★ **पुरस्तात् अधस्तात् च शत्रून् अन्धे तमसि भावयति करोति इति भावः ।**

★ **दासान् परमानन्दभागिनः भावयति करोति इति भावः ।**

★ **भारूपो बलरूपश्चेति वा ।**

★ **भात्मकान् मुक्तानवतीति (वा) भावः ।**

"अमृतस्यैष सेतुः" इति श्रुतेः ।

★ **भवति विद्यत एव, नतूत्पद्यत इति वा भावः ।**

असाधारण्येन व्यपदेशात् ।

स.– ★ **भावयति जगदुत्पादयति इति भावः ।**

★ **भाः कान्तीः अवति ददाति चन्द्रादिभ्यः इति वा ।**

★ **भानि नक्षत्राणि अवति प्रविशति इति वा ।**

'अव रक्षण–गति–कान्ति–प्रीति–तृप्ति–अवगति–प्रवेश–श्रवण–स्वाम्यर्थ–याचन–क्रियेच्छा–दीप्ति–अवाप्ति–आलिङ्गन–हिंसादान–भाग–वृद्धिषु' इति धातुः ।

**श्री.–★ भावः = स्वदासानन्दकारी ।**



## ८. भूतात्मा

वि.– ★ **भूतानाम् आत्मा आदानादिकर्ता ।**

"यच्चाऽप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते"।। इति भारते ।

र.– ★ **चेतनाचेतनात्मकजगत्स्वामी । भूतानाम् आत्मा स्वामी इति भूतात्मा ।**

स.– ★भूतात्मा भूतनियामकः । भूतस्वरूप इति व्याख्यानं तु पूर्वोत्तरनामविरुद्धम् ।

★भुवि तः व्याप्तः स चासौ आत्मा चेति वा ।

श्री.– ★भूतात्मा – जगत्स्वामी ।



## ९. भूतभावनः

वि.– ★भूतानि भावयति, उत्पादयति, वर्धयति, प्रापयतीति वा भूतभावनः ।

र.– ★भूतानि द्विवारं त्रिवारं भावयति इति भूतभावनः ।

स.– ★भूतानां भावान् मनांसि नयति इति भूतभावनः ।

★भूतानि भावयति इति वा ।

★भुवि ऊता भा यस्य स भूतभः, स चासौ अवति इति अवनश्चेति वा ।

श्री.– ★भूतभावनः = भूतोत्पादकः ।



पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ २ ॥

## १०. पूतात्मा

वि.– ★पूतो निर्दोष आत्मा स्वरूपं देहो यस्य सः पूतात्मा ।

"निरनिष्टो निरवद्यः," ।

"सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।
ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः ॥"

''यदात्मको भगवान् तदात्मिका व्यक्तिः'' इत्यादि श्रुतिभ्यः ।

**★पूतश्चासौ आत्मा चेति वा ।**

''आततत्वाच्च मातृत्वादात्मेति परमो हरिः ।
आत्माभासास्तदन्ये ये नह्येतेषां तता गुणाः'' ॥

इति महोपनिषदि ।

र.– **★पूतं पवित्रं आत्मा स्वरूपं यस्य सः पूतात्मा ।**

स.– **★पूता आत्मानो जीवाः यस्मात् ।**

**★पूतानाम् आत्मा मनो यस्मिन् इति वा ।**

**★पूतश्चासौ आत्मा च ।**

श्री.– **★पूतात्मा – पवित्रस्वरूपः ।**



## ११. परमात्मा

वि.– **★परमश्चासौ आत्मा चेति परमात्मा ।**

''अथ कस्मादुच्यते परम इति । परमे ह्येते नामरूपे व्याक्रियेते । तस्मादेनमाहुः परम इति ।'' इत्याग्नेयश्रुतिः ।

''आनन्दानुभवत्वाच्च निर्दोषत्वाच्च भण्यते ।
नित्यत्वाच्च तथाऽऽत्मेति वेदवादिभिरीश्वरः'' ॥

इति बृहत्तन्त्रे ।

र.– **★परमेषु भक्तेषु, आत्मा मनःप्रीतिः यस्य सः परमात्मा ।**

स.– **★परमः उत्तमः, परः शत्रुः मीयते हिंस्यते येन इति वा, स चासौ आत्मेति ।**

**★ परा च सा मा च परमा, यद्वा पाति इति पा, पा च सा रमा च परमा, तस्या आत्मा पतिः ।**

'आदानार्थत्वतश्चायम् आत्मशब्दः पतिं वदेत्' इति अनुव्याख्यानोक्तेः ।

**★ यद्वा स्वीयतया भृत्यानादत्त इति आत्मा ।**

तदुक्तं भागवते–

'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावः तस्मात् आत्मेति भण्यते' ॥ इति ।

**★ यद्वा 'तनु विस्तारे' 'मा निर्माणे' इति धातुभ्याम् आत्त-निर्माणाद्वा, आङ्पूर्वाभ्यां 'तनु विस्तारे' 'माङ् माने' इति धातुभ्याम् आत्तज्ञानाद्वा आत्मा ।**

तदुक्तं बृहद्भाष्ये–

'आततत्वात् तथा अत्तृत्वात् आत्माऽसौ ब्रह्मणः स्मृतः ।
आदानादात्तनिर्माणादात्तज्ञानात् तथैव च' ॥ इति ।

सूत्रभाष्ये तु–

'यो गुणैः सर्वतो हीनः यश्च दोषविवर्जितः ।
हेयोपादेयरहितः स आत्मा इ(आत्मे)त्यभिधीयते' ॥

तत्रैवान्यत्र–

'सर्वान् गुणान् आत्मशब्दो ब्रवीति ब्रह्मादीनाम् इतरेषां न चैव' । इति ।

**श्री.– ★परमात्मा = भक्ते प्रीतिमान्, भक्तप्रीतिपात्रश्चेति चार्थः ।**



## १२. मुक्तानां परमा गतिः

**वि.– ★मुक्तैरतिशयेन प्राप्यत्वात् मुक्तानां परमा गतिः ।**

गम्यते मुमुक्षुभिरिति गतिः ।

तथाहि सामवेदे वासिष्ठसंहितायाम्– "ब्रह्मैव गतिः । तद्धि गम्यते पापविमुक्तैः इति ।

मुक्तानामित्यादि स्पष्टीकरणार्थम् ।

तत एव चोक्तार्थत्वादसमासेन निर्देशः ।

परमा चासौ गतिश्चेति विग्रहे षष्ठ्याश्चालुगिति द्रष्टव्यम् ।

एवमुत्तरत्रापि ।

**र.– ★प्रारब्धकर्मादिभ्यः मुक्तानां, परमप्राप्यत्वात् मुक्तानां परमागतिः ।**

**स.– ★मुक्तानां परमागतिः । षष्ठ्या अलुक् । प्रियादिगणपाठमभिप्रेत्य पुंवद्भावाभावः । आगतिरिति वा । उत्तमगम्य इत्यर्थः ।**

**श्री.–★मुक्तानां परमा गतिः = मुक्तानां परमप्राप्यः ।**



## १३. अव्ययः

**वि.– ★ न व्येति देहतोऽपि न विनश्यति न विकुरुते चेत्यव्ययः ।**

"नाऽयुर्मानं भगवतः कस्मिन् रूपेऽपि विद्यते ।
अनादित्वादमध्यत्वादनन्तत्वेन सोऽव्ययः" ॥

इति हरिवंशेषु ॥

र.– ★ अविनश्वरगुणजातात्मकत्वात् अव्ययानि गुणजातानि अस्य इति अव्ययः ।

स.– ★ अवेः सूर्यस्य अयः गमनं यस्मात् इति अव्ययः ।

★ अविः मेपः तद्वत् शत्रून् प्रति गमनं यस्य इति वा ।

श्री.– ★ अव्ययः – अनश्वरगुणरूपः ।



## १४. पुरुषः

वि.– ★ पुरि शयात्, पूर्णत्वात्, पूर्वमवस्थानात्, सर्वपापदाहकत्वाच्च पुरुषः ।

"स वा अयं पुरुषः सर्वासु पूर्षु शेते नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतमिति । स यत् पूर्वोऽस्मात् सर्वस्मात् सर्वपापान्यौषत् तस्मात् पुरुषः" इति श्रुतेः ।

★ सदा स्वस्वरूपावगमाद् वा पुरुषः ।

"पुरु ब्रह्म गुणाधिक्यात् तज्ज्ञानात् पुरुषः स्मृतः"

इति प्रवृत्ते ।

★ पूरणात् सदनाद् वा पुरुपः ।

"पूरणात् सदनाच्चैव ततोऽसि पुरुषोत्तमः" इति च ।

र.– ★ पुरूणि अभीष्टानि सनोति ददाति इति पुरुपः ।

स.– ★ 'पुर् अग्रगमने' इत्यतः पुरुषः सृष्टेः प्राग्विद्यमानः ।

★ पुरुः बहुलः पः चेष्टा यस्य इति वा ।

'पकारः प्राण आत्मा' इति श्रुतेः ।

* 'पुरु बहुदैत्यनाशकत्वाद्वा, 'षोऽन्तकर्मणि' इति धातोः ।

* 'पुरु पूर्णं मोक्षाख्यं फलं स्वात्मानमेव सनोति ददाति इति पुरुषः' इति भागवतटीका ।

**श्री.– * पुरुषः = बह्वभीष्टदः ।**



## १५. साक्षी

**वि.– * साक्षात् ईक्षत इति साक्षी ।**

तथाच वाधूलशाखायाम्– ''स साक्षादिदमद्राक्षीत् । यदद्राक्षीत् तत् साक्षिणः साक्षित्वम्'' इति ।

**र.– * साक्षात् ईक्षते इति साक्षी ।**

**स.– * साक्षाद् ईक्षते इति साक्षी ।**

'साक्षाद् द्रष्टरि सञ्ज्ञायाम्' इति स्मृतेः ।

**श्री.– * साक्षी = प्रत्यक्षदर्शी ।**



## १६. क्षेत्रज्ञः

**वि.– * क्षेत्रं प्रकृत्यादिकं निर्दोषज्ञानेनापरोक्षतो जानातीति क्षेत्रज्ञः ।**

''चेतनाचेतनं चैतत् सर्वं क्षेत्रमितीरितम् ।
क्षितिरेतद्भगवतो यतस्तत् क्षेत्रमीर्यते'' ॥

* क्षिणोति त्राति चैवैतत् सोऽतो वा क्षेत्रमुच्यते ।

* क्षितिं कृत्वा त्राति चैतदतो वा क्षेत्रमीरितम् ।

*** एतस्मात् क्षीणमेतेन त्रातमित्यथवा पुनः ।**

एतत् सर्वं सर्वदैव निर्दोषेणैव चक्षुषा ।

'पश्यन्नेव च जानाति यत् क्षेत्रज्ञो हरिस्ततः' ॥ इति नारायणश्रुतिः ।

र.– *** जीवाख्यसर्वक्षेत्रेषु स्थित्वा जीवादिस्वरूपं जानाति इति क्षेत्रज्ञः ।**

स.– *** क्षीयते स्थीयते भगवता अत्र इति क्षेत्रम् इत्युच्यते, 'क्षि निवासगत्योः' क्षेत्रं जानाति इति क्षेत्रज्ञः ।**

*** क्षेत्रस्य प्रमाणप्रसिद्धाव्यक्तादिशरीरस्य ज्ञः तथा ।**

श्री.– *** क्षेत्रज्ञः – जीवशरीरज्ञः ।**



## १७. अक्षरः

वि.– *** न क्षरति न विनश्यतीत्यक्षरः । अश्नुते व्याप्नोतीति वा ।**

''अक्षरं न क्षरं विद्यादश्नोतेर्वा सरोऽक्षरम्''

इति कात्यायनवचनात् ।

र.– * न क्षरति इति अक्षरः ।

स.– * न क्षरति इति अक्षरः अविनाशी ।

* अक्षेषु अक्ष्यादीन्द्रियेषु रमत इति वा ।

'क्षि क्षये' इति धातोः क्षं नाशः, न विद्यते क्षं यस्य तदक्षं वैकुण्ठादि तद् राति ददाति इति वा, तत्र रमते इति वा ।

श्री.– *अक्षरः = अविनाशी ।

* 'पुरु बहुदैत्यनाशकत्वाद्वा, 'षोऽन्तकर्मणि' इति धातोः ।

* 'पुरु पूर्णं मोक्षाख्यं फलं स्वात्मानमेव सनोति ददाति इति पुरुषः' इति भागवतटीका ।

श्री.– * पुरुषः = बह्वभीष्टदः ।



## १५. साक्षी

वि.– * साक्षात् ईक्षत इति साक्षी ।

तथाच वाधूलशाखायाम्– ''स साक्षादिदमद्राक्षीत् । यदद्राक्षीत् तत् साक्षिणः साक्षित्वम्'' इति ।

र.– * साक्षात् ईक्षते इति साक्षी ।

स.– * साक्षाद् ईक्षते इति साक्षी ।

'साक्षाद् द्रष्टरि सञ्ज्ञायाम्' इति स्मृतेः ।

श्री.– * साक्षी = प्रत्यक्षदर्शी ।



## १६. क्षेत्रज्ञः

वि.– * क्षेत्रं प्रकृत्यादिकं निर्दोषज्ञानेनापरोक्षतो जानातीति क्षेत्रज्ञः ।

''चेतनाचेतनं चैतत् सर्वं क्षेत्रमितीरितम् ।
क्षितिरेतद्भगवतो यतस्तत् क्षेत्रमीर्यते'' ॥

* क्षिणोति त्राति चैवैतत् सोऽतो वा क्षेत्रमुच्यते ।

* क्षितिं कृत्वा त्राति चैतदतो वा क्षेत्रमीरितम् ।

**★ एतस्मात् क्षीणमेतेन त्रातमित्यथवा पुनः ।**

एतत् सर्वं सर्वदैव निर्दोषेणैव चक्षुषा ।

'पश्यन्नेव च जानाति यत् क्षेत्रज्ञो हरिस्ततः' ।। इति नारायणश्रुतिः ।

र.– **★ जीवाख्यसर्वक्षेत्रेषु स्थित्वा जीवादिस्वरूपं जानाति इति क्षेत्रज्ञः ।**

स.– **★ क्षीयते स्थीयते भगवता अत्र इति क्षेत्रम् इत्युच्यते, 'क्षि निवासगत्योः' क्षेत्रं जानाति इति क्षेत्रज्ञः ।**

**★ क्षेत्रस्य प्रमाणप्रसिद्धाव्यक्तादिशरीरस्य ज्ञः तथा ।**

श्री.– **★ क्षेत्रज्ञः – जीवशरीरज्ञः ।**



## १७. अक्षरः

वि.– **★ न क्षरति न विनश्यतीत्यक्षरः । अश्नुते व्याप्नोतीति वा ।**

''अक्षरं न क्षरं विद्यादश्नोतेर्वा सरोऽक्षरम्''

इति कात्यायनवचनात् ।

र.– ★ न क्षरति इति अक्षरः ।

स.– ★ न क्षरति इति अक्षरः अविनाशी ।

★ अक्षेषु अक्ष्यादीन्द्रियेषु रमत इति वा ।

'क्षि क्षये' इति धातोः क्षं नाशः, न विद्यते क्षं यस्य तदक्षं वैकुण्ठादि तद् राति ददाति इति वा, तत्र रमते इति वा ।

श्री.– ★अक्षरः = अविनाशी ।

एवशब्दः 'कूटस्थोऽक्षर उच्यते' इत्यनेन प्रतीतरमाव्यावर्तकः, चशब्दः 'अक्षरं परमं पदम्' इति श्रुतेः हरेश्च मुख्यतया अक्षरशब्द-वाच्यत्वं सूचयति ।



योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥ ३ ॥

## १८. योगः

वि.– ★ सर्वकामानां नित्ययोजनाद् योगः ।

★ युज्यते योगिभिर्हृदि निरुद्ध्यते इति वा योगः ।

र.– ★योजयति इति योगः ।

स.– ★युज्यते हृदि योगिभिः ध्यायते इति योगः ।

★युनक्ति गुणान् स्वस्मिन् इति वा ।

★भक्तानां भवतरणोपाय इति वा ।

श्री.–★योगः = यज्ञादिकर्मयोजकः ।



## १९. योगविदां नेता

वि.– ★ योगं विदन्तीति योगविदः ।

"साम्यमीश्वररूपेषु सर्वस्य तदधीनताम् ।
पश्यति ज्ञानसम्पत्त्या विनिद्रो यः स योगवित्" ॥

इत्यादिगदितलक्षणाः ।

तेषां योगक्षेमवहनादिना नेता योगविदां नेता ॥

र.– ★भगवति सर्वेषां वेदानां योगवृत्तिं जानतां सुखस्य नेता योगविदांनेता ।

स.– ★योगं समाधिं विदन्ति (जानन्ति) इति योगविदः भक्ताः, तेषां नेता मोक्षफलं प्रापयिता इति योगविदां नेता ।

श्री.–★योगविदां नेता = हरौ सर्ववेदयोगवृत्तिज्ञानां सुखप्रापकः ।



## २०. प्रधानपुरुषेश्वरः

वि.– ★प्रधानं त्रिगुणात्मिका प्रकृतिः । पुरुषो ब्रह्मादिजीवसमूहः । तयोरीश्वरः प्रधानपुरुषेश्वरः ।

★यद्वा प्रधानमुत्तमम् ।

"मणिर्मुख्यं प्रधानं चेत्युत्तमस्य वचो भवेत्" इत्यभिधानात् ।

प्रधानं चासौ पुरुषश्चासावीश्वरश्च प्रधानपुरुषेश्वरः ।

★प्रधानं चासौ पुरुषाणामीश्वरश्चेति वा ।

★प्रधानपुरुषस्य विधेरीश्वर इति वा ।

★प्रधानस्य प्रकृतेः पुरुषः पतिरीश्वरश्चेति वा ।

★पुरुषेश्वरयोर्विधिरुद्रयोः प्रधानमिति वा ।

र.– ★दैत्यानां प्रधानपुरुषस्य बलस्य तदीयपर्वतपिधानादिव्यापार-निरसनेन इष्टः इति प्रकृतिपुरुषयोः तत्कार्याविद्यानिरसनेन इष्टः इति वा प्रधानपुरुषेश्वरः ।

स.– ★प्रधानं प्रकृतिः, पुरुषाः जीवाः, तेषां ईश्वरत्वात् प्रधान-पुरुषेश्वरः ।

*प्रकृष्टे धाने धारणपोषणे यस्मात् सः प्रधानः । पुरुषेति तादर्थ्ये सप्तमी । चतुर्मुखार्थमश्वः सन् ऋगादिविद्यां राति इति पुरुषेश्वरः । सप्तम्या अलुक् ।

*प्रधानश्चासौ पुरुषेश्वरश्च इति वा ।

श्री.– *प्रधानपुरुषेश्वरः = प्रकृतिपुरुषस्वामी ।



## २१. नारसिंहवपुः

वि.– *नरसिंहयोः सम्बन्धि नारसिंहम् । नरसिंहात्मकमिति यावत् । तादृशं वपुर्यस्य स नारसिंहवपुः ।

*यद्वा नरसिंहः पुरुषोत्तमः । "अथ कस्मादुच्यते नरसिंह इति । यस्मात् सर्वेषां भूतानां वीर्यतमः श्रेष्ठतमश्च सिंहो वीर्यतमः श्रेष्ठतमश्च तस्मान्नरसिंह आसीत् परमेश्वरः" इति तापनीयश्रुतेः । तस्य भक्ताः नारसिंहाः । त एव वपूंषि प्रतिमा यस्य स नारसिंहवपुः ।

र.– *नरसिंहवत् वपुः आकृतिः यस्य सः नारसिंहवपुः ।

स.– *नरसिंहयोः इदं नारसिंहं वपुः यस्य सः तथा ।

श्री.– *नारसिंहवपुः = नरसिंहाकृतिः ।



## २२. श्रीमान्

वि.– *श्रियः चक्षुराद्यभिमानिन्यो देवताः । "ता वा एताः शीर्षन् श्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः" इति श्रुतेः । नियम्यत्वेन ता अस्य सन्तीति श्रीमान् ।

*अनपायिनी लक्ष्मीरस्यास्तीति वा श्रीमान् ।

**र.– *श्रीः अस्य अस्ति इति श्रीमान् ।**

**स.– *शंरूपे वायौ रतत्वात् श्रीः भारती लक्ष्मीः कान्तिः वा, श्रीः स्वामित्वेन वा भर्तृत्वेन वा आधारत्वेन तद्वान् ।**

**श्री.– *श्रीमान् = सम्पद्वान् ।**



## २३. केशवः

**वि.– *कं ब्रह्माणम्, ईशं शिवं च वर्तयतीति केशवः ।**

तथाहि निरुक्तिः कृता हरिवंशेषु रुद्रेण कैलासयात्रायाम्–

''को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गसम्भूतावतः केशवनामवान्'' ।। इति ।

''हिरण्यगर्भः कः प्रोक्त ईशः शङ्कर एव च ।
सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान्'' ।।
इति वचनान्तराच्च ।

***केशिवधाद्वा केशवः ।**

''यस्मात् त्वयैव दुष्टात्मा हतः केशी जनार्दन ।
अतः केशवनाम्ना त्वं लोके ख्यातो भविष्यसि'' ।।
इति ब्राह्मे ।

**र.– *कश्च ईश्च के तयोः शवः यशः यस्मात् सः केशवः ।**

**स.– *कं ब्रह्माणं ईशं रुद्रं च वर्तयति इति केशवः ।**

''को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गसम्भूतौ ततः केशवनामवान्'' ।।

इति हरिवंशे रुद्रेण कैलासयात्रयां निरुक्तत्वात् ।

'हिरण्यगर्भः कः प्रोक्तः ईशः शङ्कर एव च ।
सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान्' ॥

इति वचनान्तराच्च ।

**★प्रशस्ताः केशा अस्य सन्ति इत्यर्थे 'केशाद्वोऽन्यतरस्याम्' इति 'व' प्रत्ययः ।**

**★केशिनं हन्ति इति वा ।**

विष्णुपुराणे–

'यस्मात् त्वयैव दुष्टात्मा हतः केशी जनार्दन ।
तस्मात् केशवनाम्ना त्वं लोके ज्ञेयो भविष्यसि' ॥

–इति कृष्णं प्रति नारदोक्तेः ।

अथवा–

'सूर्यस्य तपतो लोकान् अग्नेः सोमस्य वाऽप्युत ।
अंशवो यत्प्रकाशन्ते मम ते केशसंज्ञिताः ।
सर्वज्ञाः केशवं तस्मात् मामाहुः द्विजसत्तमाः' । इति मोक्षधर्मोक्तेः ।

**★केशोंऽशुमान् इति वा ।**

श्री.– **★केशवः = ब्रह्मरमाकीर्तिकारी ।**



## २४. पुरुषोत्तमः

वि.– **★पुरुषाभ्यां क्षराक्षराभ्यामुत्तमः पुरुषोत्तमः ।**

''द्वाविमौ पुरुषौ–'' इत्यादिना गीतासु भगवता तथा निरुक्तत्वात् ।

**★परनिपातेन उत्तमः पुरुष इति वा ।**

''कालाज्जीवात् तथाऽव्यक्तान्महतश्चोत्तमो यतः ।
उत्तमः पुरुषस्तस्माद् भगवान् विष्णुरव्ययः ॥''

इति वचनात् ।

र.– ★**पुरूणि अवष्टम्भशक्त्यादीनि पुरुपार्थजातानि पुरुभ्यः उत्कृष्टेभ्यो देवादिभ्यः सनोति इति पुरुषः स च असौ उत्तमश्च पुरुषोत्तमः ।**

स.– ★**पुरुषाणां उत्तमः पुरुषोत्तमः ।**

'न निर्धारणा' इति षष्ठीसमासनिषेधो न भवति ।

★**अथवा पुरुषोत्तमः इति सप्तमीति योगविभागात् 'सुप्सुपि' इति वा समासः ।**

★**पुरुषाभ्याम् उत्तम इति वा पञ्चमी भवति ।**

अत्र योगविभागात् समासः ।

'अक्षरादपि चोत्तमः' इति गीतोक्तेः ।

श्री.– ★**पुरुषोत्तमः = बहुदाता उत्कृष्टश्च ।**



**सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।**
**सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ ४ ॥**

## २५. सर्वः

वि.– ★**पूर्णगुणत्वात् सर्वः ।**

''विश्वः पूर्णस्तथा सर्वः समस्तश्चाभिधीयते'' इत्यभिधानात् ।

★**सर्वव्यापकत्वाद् वा सर्वः ।**

★"सर्वं समाप्नोषि ततोऽसि सर्वः" इति गीतावचनात्" ।

"असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् ।
सर्वस्य सर्वदा ज्ञानात् सर्वमेनं प्रचक्षते" ॥
इति व्यासवचनाद् वा सर्वः ।

र.– ★सर्वस्वामित्वात् सर्वः ।

स.– ★वाच्यतया वेदाख्यरवसहितत्वात् सर्वः । निर्वचनत्वात् रेफोत्तराकारलोपः ।

★सर्वव्यापित्वात् वा ।

"सर्वं समाप्नोपि ततोऽसि सर्वः" इति गीतोक्तेः ।

★अथवा सर्वस्रष्टृत्वादिनिमित्तेन सर्वशव्दवाच्यः ।

'स्रष्टा पाता च संहर्ता नियन्ता च प्रकाशिता ।
यतः सर्वस्य तेनाहं सर्वोऽसीत्यृषिभिः स्तुतः' ॥
इति गीताभाष्योक्तेः ॥

श्री.– ★सर्वः = सर्वस्वामी ।



## २६. शर्वः

वि.– ★प्रळये सर्वं शृणाति हिनस्तीति शर्वः ।

★प्राणिनां शं सुखं रुणद्धि प्रतिवध्नातीति वा शर्वः ।

"शर्वः शं रोधनाद्धरिः" इति वचनात्" ।

र.– ★हिरण्याक्षादेः जगतः शं सुखशव्दितं क्रीडादिचेष्टादिजातं वर्तयति इति शर्वः ।

स.– *शृणाति इति शर्वः ।

*'शृ हिंसायाम्' । अयोग्यानां शं रोधनात् वा शर्वः ।

'शर्वः शं रोधनात् हरिः' । इति भाष्योक्तेः ।

श्री.– *शर्वः = जगतः सुखक्रीडाप्रवर्तकः ।



## २७. शिवः

वि.– *सुखात्मकत्वात् शिवः ।

''शिवः सुखात्मकत्वेन'' इत्युक्तेः ।

''शाश्वतं शिवमच्युतम्'' इति श्रुतिः ।

*यस्मात् स्वयं भद्रे भूत्वा सर्वं भद्रं ददाति तस्माद्वा शिवः ।

''रोचनो रोचमानः शोमनः शोभमानः कल्याणः'' इति श्रुतेः ।

र.– *शिं पूर्णानन्दं वाति गच्छति अनुभवति इति शिवः ।

स.– *शिवं मङ्गलं अस्य अस्ति इति शिवः । 'अर्श आद्यच्' ।

*शिवयति इति वा । तत्करोति इति ण्यन्तात् पचाद्यच् ।

*शं सुखं एषाम् अस्ति इति शिवाः मुक्ताः, तान् वर्तयति इति वा ।

श्री.– *शिवः = अतिशयितसुखानुभवी ।



## २८. स्थाणुः

वि.– *निर्विकारतया नित्यं तिष्ठतीति स्थाणुः ।

*भूतान्यस्मिन् तिष्ठन्तीति वा ।

र.– *सर्वदा अपि एकप्रकारेण एव अविकारेण अवतिष्ठति इति स्थः । अणुरूपेण अन्तर्यामितया सर्वजगत् प्रविष्टत्वात् अणुः । स्थश्चासौ अणुश्च इति स्थाणुः ।

स.– *तिष्ठति सर्वत्र इति स्थः । स्थश्चासौ अणुश्च इति स्थाणुः ।

*यद्वा स्थाणुः इति सूत्रात् स्था धातोः णु प्रत्यये स्थिरत्वात् स्थाणुः ।

*शिवे अन्तर्यामितया तिष्ठति इति एकं पदं वा ।

श्री.– *स्थाणुः = अविकारस्थायी अणुरूपश्च ।



## २९. भूतादिः

वि.– *भूतानाम् आदिः कारणम् ।

*भूतान्यादत्त इति वा भूतादिः ।

र.– *वाय्वादिभूतानां प्राणिनां आदिः कारणम् भूतादिः ।

स.– *भूतानाम् आदिः कारणं भूतादिः ।

*भूतैः आदीयते उपादीयते इति वा ।

*भूतानाम् आदिः भक्षकः इति वा । 'अद भक्षणे' ।

श्री.– *भूतादिः = प्राणिकारणम् ।



## ३०. निधिरव्ययः

वि.– ★निधीयतेऽस्मिन् सर्वमिति निधिः । ब्रह्मादीनामपि तथात्वादव्यय इति निधिर्विशेष्यते । भक्तानामक्षयं धनमिति वा ।

''नमोऽकिञ्चनवित्ताय'' इति हि भागवते ।

### निधिः

र.– ★वाय्वादिभूतानि प्राणिजातानि धीयन्ते अत्र इति निधिः ।

स.– ★निधीयते हृदि सज्जनैः इति निधिः ।

श्री.–★निधिः = सर्वप्राणिस्थानरूपः ।

### अव्ययः

र.– ★न विद्यते व्ययः यस्य इति अव्ययः ।

स.– ★अवौ सूर्ये अयति गच्छति इति अव्ययः ।

'ध्येयः सदा सवितृमण्डलमध्यवर्ती' इत्युक्तेः ।

★प्रीत्यर्थात् अवतेः विच् । अवा प्रीत्या यान् ज्ञानिनः प्रति याति इति वा ।

श्री.–★अव्ययः = व्ययरहितः ।



## ३१. सम्भवः

वि.– ★स्वेच्छया समीचीनो भवो यस्य स सम्भवः ।

★सर्वमस्मात् सम्भवतीति वा सम्भवः ।

र.– ★सम्भवन्ति कामाः अस्मात् इति सम्भवः ।

स.– *सम्यक् भानि नक्षत्राणि वर्तयति इति सम्भवः ।

श्री.– *सम्भवः = अभीप्सितोत्पत्तिस्थानरूपः ।



## ३२. भावनः

वि.– *सर्वं भावयतीति भावनः ।

*भारूपोऽविता चेष्टकश्चेति वा भावनः ।

र.– *भावना ज्ञानं अस्य अस्ति इति भावनः ।

स.– *भावम् अभिप्रायं नयति इति भावनः ।

*भया सूर्यादिगतस्वभासा आवयति ज्ञापयति पदार्थान् इति वा ।

*भानां कान्तीनां अवनं प्राप्तिः यस्य इति वा ।

*न विद्यते भावनम् उत्पादनं यस्य इति वा ।

श्री.– *भावनः = ज्ञाननेता ।



## ३३. भर्ता

वि.– *धारणपोषणकर्तृत्वाद् भर्ता ।

"भर्ता सन् भ्रियमाणो विभर्ति" इति श्रुतेः ।

र.– *भक्तकृतस्तोत्राणां भर्ता ।

स.– *पोषकत्वात् भर्ता ।

श्री.– *भर्ता = भक्तकृतस्तोत्राणां धर्ता ।



## ३४. प्रभवः

वि.– *सर्वं प्रकर्षेण भवत्यस्मादिति प्रभवः ।

*सर्वकार्येषु प्रभवतीति वा ।

र.– *प्रकर्षेण भवः सत्ता वृद्धिः वा यस्य सः प्रभवः ।

स.– *प्रकृष्टा भाः ययोस्तौ प्रभौ सूर्यचन्द्रौ तौ वर्तयति इति प्रभवः ।

*प्रकृष्टः भावः येन इति वा ।

श्री.– *प्रभवः = प्रकृष्टवृद्धिमान् ।



## ३५. प्रभुः

वि.– *प्रकर्षेण भवनात् प्रभुः ।

तथाहि वारुणशाखायाम्–

''विभु प्रभु प्रथमं मेहनावत इति ।

स ह्येव प्राभवद् विविधोऽभवत्'' इति ।

र.– *प्रकृष्टः भुवः दिवश्च अतिरिच्यते इति प्रभुः ।

स.– *प्रकर्षेण भवति इति प्रभुः ।

श्री.– *प्रभुः = भूपदलक्षितदिवश्च प्रकृष्टः ।



## ३६. ईश्वरः

वि.– *ईशनशीलत्वादीश्वरः ।

**★'ईशेभ्यो वर इति वा ।**

तच्चोक्तम्– ''ईशेभ्यो ब्रह्मरुद्रश्रीशेषादिभ्यो यतो भवान् ।
वरोऽत ईश्वराख्या ते मुख्या नान्यस्य कस्य चित्'' ॥
इति ब्रह्मवैवर्ते ।

''समर्थ ईश इत्युक्तस्तद्वरत्वात् त्वमीश्वरः'' इति च ।

र.– **★सर्वेश्वरः भगवान् एक एव इति ईश्वरः ।**

स.– **★ईशनशीलत्वात् ईश्वरः ।**

**★ईशेभ्यो वर इति वा ।**

श्री.– **★ईश्वरः = सर्वनियन्ता ।**



**स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः ।**
**अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ ५ ॥**

## ३७. स्वयम्भूः

वि.– **★स्वयमेव भवति नान्यत इति स्वयम्भूः ।**

**★स्वयं स्वतन्त्र एव भवति न परतन्त्र इति वा ।**

**★स्वयमेव परानपेक्षो जगद् भावयतीति वा ।**

**★स्वयमेव स्वस्य भूराश्रय इति वा ।**

''स भगवः कस्मिन् प्रतिष्ठितः? स्वे महिम्नि'' इति श्रुतेः ।

''कविर्मनीषी परिभूः स्वयम्भूः'' इति च श्रुतिः ।

र.– **★स्वयम् एव स्वतन्त्रः भवति अभिव्यक्तः भवति इति स्वयम्भूः ।**

स.– *स्वयमेव भवति इति स्वयम्भूः ।

श्री.– *स्वयम्भूः = स्वतन्त्र एव अभिव्यक्तः ।



## ३८. शम्भुः

वि.– *शं सुखं, तस्य भूः आश्रयः शम्भुः ।

*शमस्मात् प्राणिनां भवतीति वा ।

"विश्वाक्षं विश्वशम्भुवम्" इति श्रुतेः ।

र.– *शं भवति अस्मात् इति शम्भुः ।

स.– *शं सुखं भावयति इति शम्भुः ।

श्री.– *शम्भुः = सुखाकरः ।



## ३९. आदित्यः

वि.– *अदितिपुत्रत्वेनावतारात् आदित्यः ।

*आदत्त इति वाऽऽदित्यः ।

"आदित्यस्त्वं तथाऽऽदानात्" इति वचनात् ।

र.– *आदौ तता मर्यादा यस्य इति आदित्यः ।

स.– *आदित्यस्थत्वात् आदित्यः ।

*आदिश्चासौ त्यश्चेति व्युत्पत्त्या सूर्यान्तर्गतरूपेण पृथिवीरसं गृह्णानो याति इति वा ।

तदुक्तम् ऋग्भाष्ये–

"आदित्यस्थत्वात् स आदित्य आददानः प्रयाति वा" इति ।

*उपेन्द्ररूपेण अदितिपुत्रत्वात् वा ।

श्री.– *आदित्यः = आदौ ततमर्यादः ।



## ४०. पुष्कराक्षः

वि.– *पुष्करे कमले इवाक्षिणी यस्य स पुष्कराक्षः ।

*पुष्करमाकाशं अक्ष्णोति व्याप्नोतीति वा ।

*आकाशवद् व्याप्तदेह इति वा ।

"आकाशशरीरं ब्रह्म" इति श्रुतेः ।

र.– *पुपं पुष्टिं करोति इति पुष्करः । अधिकः सदृशः वा तम् आ समन्तात् क्षिपति निरस्यति इति आक्षः । समाभ्यधिकवर्जितः । पुष्करश्चासौ आक्षश्च पुष्कराक्षः ।

स.– *पुष्करं कमलं तद्वत् अक्षिणी यस्य सः पुष्कराक्षः । रलयोरभेदात् ।

*पुष्कलानि अक्षीणि यस्य इति वा ।

सहस्राक्षः सहस्रपात् इति श्रुतेः ।

*पुप पुष्टौ इत्यतः पुपं पुष्टिं करोति इति पुष्करः ।

*न विद्यते क्षं नाशः यस्य इति अक्षः, पुष्करश्चासौ अक्षश्च इति वा ।

श्री.– *पुष्कराक्षः = पुष्टिकरान्यनिरासकः ।



## ४१. महास्वनः

वि.– *महान् गम्भीरः स्वनो ध्वनिर्यस्येति वा, महान् ऊर्जितः स्वनो वेदादिः प्रतिपादकत्वेन यस्येति वा महास्वनः ।

"सर्वे वेदा यत् पदमामनन्ति" । "नामानि सर्वाणि यमाविशन्ति । "यो देवानां नामधा एक एव" । इत्यादिश्रुतिभ्यः ।

र.– *महान् स्वनः ध्वनिः नदीनां यस्मात् सः महास्वनः ।

*महत् च तत् स्वं च महास्वं समुद्रसम्बन्ध्युदकं तत् यस्मात् सः महास्वनः ।

*ज्ञानिनां स्वं ज्ञानं नयति प्रापयति इति वा महास्वनः ।

स.– *न विद्यते स्वं धनं येषां ते अस्वाः, तान् नयति स्वं इत्यस्वनः, महांश्चासौ अस्वनश्चेति महास्वनः ।

*महांश्चासौ असुश्चेति महाऽसुः वायुः, तम् अनयति इति वा ।

*गम्भीरस्वनो वा ।

श्री.– *महास्वनः = ज्ञानरूपमहाधनप्रापकः ।



## ४२. अनादिनिधनः

वि.– *आदिरुत्पत्तिः, निधनं नाशः, तयोरभावादनादिनिधनः ।

तदुक्तम् ऋग्भाष्ये–

''आदित्यस्थत्वात् स आदित्य आददानः प्रयाति वा'' इति ।

★उपेन्द्ररूपेण अदितिपुत्रत्वात् वा ।

श्री.– ★आदित्यः = आदौ ततमर्यादः ।



## ४०. पुष्कराक्षः

वि.– ★पुष्करे कमले इवाक्षिणी यस्य स पुष्कराक्षः ।

★पुष्करमाकाशं अक्ष्णोति व्याप्नोतीति वा ।

★आकाशवद् व्याप्तदेह इति वा ।

''आकाशशरीरं ब्रह्म'' इति श्रुतेः ।

र.– ★पुपं पुष्टिं करोति इति पुष्करः । अधिकः सदृशः वा तम् आ समन्तात् क्षिपति निरस्यति इति आक्षः । समाभ्यधिकवर्जितः । पुष्करश्चासौ आक्षश्च पुष्कराक्षः ।

स.– ★पुष्करं कमलं तद्वत् अक्षिणी यस्य सः पुष्कराक्षः । रलयोरभेदात् ।

★पुष्कलानि अक्षीणि यस्य इति वा ।

सहस्राक्षः सहस्रपात् इति श्रुतेः ।

★पुप पुष्टौ इत्यतः पुपं पुष्टिं करोति इति पुष्करः ।

★न विद्यते क्षं नाशः यस्य इति अक्षः, पुष्करश्चासौ अक्षश्च इति वा ।

श्री.– *पुष्कराक्षः = पुष्टिकरान्यनिरासकः ।



### ४१. महास्वनः

वि.– *महान् गम्भीरः स्वनो ध्वनिर्यस्येति वा, महान् ऊर्जितः स्वनो वेदादिः प्रतिपादकत्वेन यस्येति वा महास्वनः ।

''सर्वे वेदा यत् पदमामनन्ति'' । ''नामानि सर्वाणि यमाविशन्ति । ''यो देवानां नामधा एक एव'' । इत्यादिश्रुतिभ्यः ।

र.– *महान् स्वनः ध्वनिः नदीनां यस्मात् सः महास्वनः ।

*महत् च तत् स्वं च महास्वं समुद्रसम्वन्ध्युदकं तत् यस्मात् सः महास्वनः ।

*ज्ञानिनां स्वं ज्ञानं नयति प्रापयति इति वा महास्वनः ।

स.– *न विद्यते स्वं धनं येषां ते अस्वाः, तान् नयति स्वं इत्यस्वनः, महांश्चासौ अस्वनश्चेति महास्वनः ।

*महांश्चासौ असुश्चेति महाऽसुः वायुः, तम् अनयति इति वा ।

*गम्भीरस्वनो वा ।

श्री.– *महास्वनः = ज्ञानरूपमहाधनप्रापकः ।



### ४२. अनादिनिधनः

वि.– *आदिरुत्पत्तिः, निधनं नाशः, तयोरभावादनादिनिधनः ।

*अनस्यादिः अनादिः, निधनकर्तृत्वान्निधनः, अनादेर्बन्धस्य निधनः, अनादिश्चासौ निधनश्चेति वा ।

र.– *न विद्येते आदिनिधने यस्य सः अनादिनिधनः ।

स.– *न विद्येते आदिनिधने यस्य सः अनादिनिधनः ।

*अनस्य मुख्यप्राणस्य आदिनिधने यस्मात् इति वा ।

*अनं मुख्यप्राणम् अनति इति अनात् । एः कामस्य निधनं यस्मात् रुद्रान्तर्यामिनृसिंहरूपात् इति इनिधनः । अनाच्चासौ इनिधनश्चेति वा ।

*नादः भगवद्विषयगानादिरूपः येषां अस्ति इति नादिनः । तेषां निधनं यस्मात् सः नादिनिधनः, सः न भवति इति अनादिनिधनः इति वा, गानप्रियत्वात् ।

श्री.– *अनादिनिधनः = जन्ममरणशून्यः ।



## ४३. धाता

वि.– *सामान्येन धारणपोषणकर्ता धाता ।

र.– *सूर्यादीन् तत्तत्स्थानेषु स्थापयित्वा धारणपोषणकर्ता इति धाता ।

स.– *धारणपोषकश्च ।

'डु धाञ्' धारणपोषणयोः । धाता विधाता परमोऽत सन्दृग् इति श्रुतेः ।

श्री.– *धाता = धारणपोषणकर्ता ।



## ४४. विधाता

वि.– *विशेषेण धाता विधाता ।

"धाता विधाता परमोऽत सन्दृग्" इति श्रुतिः ।

र.– *वि विशिष्टान् उक्थादिस्तोत्रगणान् स्वप्रतिपादकतया धत्ते इति विधाता ।

स.– *विः गरुडः, धाता धारकः यस्य इति विधाता ।

*विगतौ धातारौ धारकपोषकौ यस्य इति वा ।

*वीनां विशिष्टानां मुक्तानां धारकत्वाद्वा ।

श्री.– *विधाता = विशिष्टस्तोत्रगणधारकः ।



## ४५. धातुरुत्तमः (धातुः उत्तमः)

वि.– *अतिशयेन उच्चत्वादुत्तमः ।

*धातुः चतुर्मुखात् उत्तम इत्येकं वा नाम ।

र.– *धातुः चतुर्मुखस्य उत्तमः ईशः इति धातुरुत्तमः ।

स.– *धातुभिः तदुपलक्षितशब्दैः रुवते शब्द्यत इति धातुरुत् । अतिशयेन धातुरुत् धातुरुत्तमः ।

*धातुभिः तत्प्रकृतिकाख्यातादिभी रौति व्यवहरति इति धातुरुत् हनुमान्, तेन तम्यते इष्यत इति वा ।

*धातुः चतुर्मुखात् उत्तमः इति वा ।

श्री.– *धातुरुत्तमः = चतुर्मुखस्य ईशः ।



**अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।**
**विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ ६ ॥**

## ४६. अप्रमेयः

**वि.– ★साकल्येन प्रमाणाविषयत्वादप्रमेयः ।**

"एषो ह्यात्माऽध्युद्गतो मानशक्तेः तथाऽप्यसौ प्रमितिं याति वेदैः ।
पूर्णोऽचिन्त्यः सर्ववेदैकयोनिः, सर्वाधीशः सर्ववित् सर्वकर्ता" ।
इति श्रुतिः ।

**"अप्रसिद्धेरवाच्यं तद् वाच्यं सर्वागमोक्तितः ।**
**अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेवं परं स्मृतम्"** ॥ इति गारुडे ॥

**र.– ★प्रमा परिमितिः तां गच्छति इति प्रमेयः सः न भवति इति अप्रमेयः ।**

**स.– ★न विद्यन्ते प्रमातुं योग्याः परिच्छिन्नाः गुणाः यस्यासौ अप्रमेयः ।**

**★प्रमितसर्वज्ञत्वेन न विद्यते प्रमेयं ज्ञातव्यं यस्येति वा ।**

"ज्ञातव्याश्चैव ध्यातव्याः गुणाः सर्वेऽप्यतो हरेः" इत्युक्तेः ।

**★प्रकृष्टाः मेयाः भक्तज्ञेयाः गुणाः यस्यासौ प्रमेयः, अश्चासौ प्रमेयश्चेति वा ।**

**★प्रकृष्टा च सा मा च प्रमा लक्ष्मीः तां इं विस्मयं यापयति इति प्रमेयः । अश्चासाविति प्राग्वत् ।**

**श्री.– ★अप्रमेयः = परिमाणरहितः ।**



## ४७. हृषीकेशः

वि.– ***हृषीकाणि इन्द्रियाणि ।**

"वध्रयस्त्विन्द्रियाण्याहुर्हृषीकाणीति चाप्युत"

इति शब्दनिर्णये ।

"न मे हृषीकाणि पतन्त्यसत्पथे" इत्यादिप्रयोगाच्च । तेषामीशत्वात् हृषीकेशः । तेषां विशेषत ईशत्वं च "यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद" इत्यादौ सिद्धम् ।

***यद्वा अग्नीषोमाद्यन्तर्यामितया केशसंज्ञैरंशुभिः जगद्धर्षणादेः हृषीकेशः । केशत्वं चांशूनां तन्नियतत्वादेः ।**

"सूर्याचन्द्रमसौ शश्वत् केशैर्मे अंशुसंज्ञितैः ।
बोधयन् स्थापयंश्चैव जगदुत्पद्यते पृथक् ।
बोधनात् स्थापनाच्चैव जगतो हर्षसम्भवात् ।
अग्नीषोमकृतैरेभिः कर्मभिः पाण्डुनन्दन ।
हृषीकेशोऽहमीशानो वरदो लोकभावनः" ॥ इति मोक्षधर्मे ।

र.– ***हृषीकाणां इन्द्रियाणां ईशः स्वामी इति हृषीकेशः ।**

स.– ***हृष तुष्टौ इत्यतो भावे कप्रत्यये हृषो हर्षः । सोऽस्यास्तीति हृषी, ई रमा को ब्रह्मा च ईकौ, तयोरीशः ईकेशः, हृषी चासौ ईकेशश्च इति हृषीकेशः ।**

***हृषिण ईकेशाः रमाब्रह्मरुद्राः येन इति वा ।**

***हृषीकाणि इन्द्रियाणि तेषां ईशः इति वा ।**

श्री.– ***हृषीकेशः = इन्द्रियस्वामी ।**

## ४८. पद्मनाभः

वि.– ★जगत्कारणं पद्मं नाभौ यस्य स पद्मनाभः ।

"अजस्य नाभावध्येकमर्पितम्" इति श्रुतेः ।

यद्वा पद्यमानत्वात् पद्मम् । अज्ञानहीनत्वान्नाभश्चेति पद्मनाभः ।

र.– ★पद्मं स्वकारणत्वेन नयति प्राप्नोति इति पद्मनः चतुर्मुखः । तेन आभ्रियन्ते वेदगिरः यत्र इति पद्मनाभः ।

स.– ★पद्मं नाभौ यस्यासौ पद्मनाभः ।

★पदोर्मा यस्यासौ पद्मः नाभे राज्ञोऽयं वृषभरूपेण इति नाभः । न विद्यते अभा अप्रकाशो यस्येति वा नाभः । पद्मश्चासौ नाभश्चेति वा ।

★पद्मं नयति इति पद्मनः सूर्यः, तस्य आभा इव आभा यस्य इति वा ।

श्री.– ★पद्मनाभः = चतुर्मुखभृतदेवगीरधिकरणः ।



## ४९. अमरप्रभुः

वि.– ★न म्रियन्त इत्यमरा मुक्ताः, तेषामीश्वरत्वादमरप्रभुः ।

★देवानां प्रभुरिति वा ।

★अमरश्चासौ प्रभुश्चेति वा ।

र.– ★जरामरणराहित्यादिरूपस्य दीर्घायुष्यात्मकस्य अमरत्वस्य प्रभुः अमरप्रभुः ।

स.– *गत्यर्थात् अमतेः भावे अचि, 'अमं ज्ञानं राति ददाति' इति अमरः ।

*न विद्यते मा मितिः यस्य (सः) तत् अमम् । अमं रं रमणं यस्य इति वा ।

*अस्य विष्णोः मा ज्ञानं येपां ते अमाः, तान् राजयति इति वा ।

*प्रकर्पेण भवति इति प्रभुः । अमरश्चासौ प्रभुश्च अमरप्रभुः ।

श्री.– *अमरप्रभुः = दीर्घायुषः स्वामी ।



## ५०. विश्वकर्मा

वि.– *विश्वविषयव्यापारवत्त्वाद् विश्वकर्मा ।

*परिपूर्णक्रियावत्त्वाद् वा ।

"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः ।

*विश्वं क्रियमाणमेतेनेति वा ।

र.– *विश्वेपां प्राणिनां विश्वानि समस्तानि कर्माणि यस्मात् इति विश्वकर्मा ।

स.– *विना गरुडेन शुवति गच्छति इति विशुः । न विद्यते कर्म बन्धकं यस्येति वा । न विद्यते कर्म क्लिष्टं यस्य इति वा अकर्मा । विशुश्चासौ अकर्मा च इति विश्वकर्मा ।

*विश्वं कर्म यस्मादिति वा ।

'न ऋते तत्क्रियते' इति श्रुतेः ।

## ४८. पद्मनाभः

वि.– *जगत्कारणं पद्मं नाभौ यस्य स पद्मनाभः ।

''अजस्य नाभावध्येकमर्पितम्'' इति श्रुतेः ।

यद्वा पद्यमानत्वात् पद्मम् । अज्ञानहीनत्वान्नाभश्चेति पद्मनाभः ।

र.– *पद्मं स्वकारणत्वेन नयति प्राप्नोति इति पद्मनः चतुर्मुखः । तेन आभ्रियन्ते वेदगिरः यत्र इति पद्मनाभः ।

स.– *पद्मं नाभौ यस्यासौ पद्मनाभः ।

*पदोर्मा यस्यासौ पद्मः नाभे राज्ञोऽयं वृषभरूपेण इति नाभः । न विद्यते अभा अप्रकाशो यस्येति वा नाभः । पद्मश्चासौ नाभश्चेति वा ।

*पद्मं नयति इति पद्मनः सूर्यः, तस्य आभा इव आभा यस्य इति वा ।

श्री.– *पद्मनाभः = चतुर्मुखभृतदेवगीरधिकरणः ।



## ४९. अमरप्रभुः

वि.– *न म्रियन्त इत्यमरा मुक्ताः, तेपामीश्वरत्वादमरप्रभुः ।

*देवानां प्रभुरिति वा ।

*अमरश्चासौ प्रभुश्चेति वा ।

र.– *जरामरणराहित्यादिरूपस्य दीर्घायुष्यात्मकस्य अमरत्वस्य प्रभुः अमरप्रभुः ।

स.– *गत्यर्थात् अमतेः भावे अचि, 'अमं ज्ञानं राति ददाति' इति अमरः ।

*न विद्यते मा मितिः यस्य (सः) तत् अमम् । अमं रं रमणं यस्य इति वा ।

*अस्य विष्णोः मा ज्ञानं येषां ते अमाः, तान् राजयति इति वा ।

*प्रकर्षेण भवति इति प्रभुः । अमरश्चासौ प्रभुश्च अमरप्रभुः ।

श्री.–*अमरप्रभुः = दीर्घायुषः स्वामी ।



## ५०. विश्वकर्मा

वि.– *विश्वविषयव्यापारवत्त्वाद् विश्वकर्मा ।

*परिपूर्णक्रियावत्त्वाद् वा ।

"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः ।

*विश्वं क्रियमाणमेतेनेति वा ।

र.– *विश्वेषां प्राणिनां विश्वानि समस्तानि कर्माणि यस्मात् इति विश्वकर्मा ।

स.– *विना गरुडेन शुवति गच्छति इति विशुः । न विद्यते कर्म बन्धकं यस्येति वा । न विद्यते कर्म क्लिष्टं यस्य इति वा अकर्मा । विशुश्चासौ अकर्मा च इति विश्वकर्मा ।

*विश्वं कर्म यस्मादिति वा ।

'न ऋते तत्क्रियते' इति श्रुतेः ।

श्री.– *विश्वकर्मा = स्वकर्महेतुः ।



## ५१. मनुः

वि.– *अवबोधरूपत्वान्मनुः ।

''मनुरेषोऽवबोधत्वान्मन्वन्तस्थो जनार्दनः ।
स ह्याचारानुवाचेशः प्रेरयन् मनुमानसम्'' ॥ इति ब्राह्मे ।

*मन्तृत्वाद् वा मनुः ।

''नान्योऽतोऽस्ति मन्ता'' इत्यादिश्रुतेः ।

र.– *यतः इन्द्रस्य शत्रूणां अधृष्यं बलादिकं अस्ति तस्मात् मनुः ।

स.– *अवबोधरूपत्वात् मनुः ।

श्री.– *मनुः = ज्ञाता ।



## ५२. त्वष्टा

वि.– *प्रळये सर्वभूततनूकरणात् त्वष्टा ।

''त्वष्टा तेजस्त्वतो विष्णुर्बलत्वाद्वा समीरितः'' इति वचनाद् वा त्वष्टा ।

र.– *दीप्तिमत्वात् त्वष्टा ।

स.– *त्वष्टा दीप्तः ।

श्री.– *त्वष्टा = दीप्तिमान् ।



### ५३. स्थविष्ठः

वि.– *अतिशयेन स्थूलः स्थविष्ठः ।

र.– *अतिशयेन स्थवः स्थविष्ठः ।

स.– *स्थविष्ठः अत्यन्तस्थूलः ।

श्री.–*स्थविष्ठः = तेजस्वितमः ।



### ५४. स्थविरो ध्रुवः (स्थविरः, ध्रुवः)

वि.–*पुराणः स्थविरः । "त्वेषं ह्यस्य स्थविरस्य नाम" इति श्रुतेः । स्थिरो ध्रुवः । अविनाशी वा ध्रुवः । स्थविरत्वेन विनाशप्राप्तौ ध्रुवत्वेन स्थविरो विशेष्यते ।

स्थविरः

र.– *रथे तिष्ठति इति स्थविरः ।

स.– *स्थविरः वृद्धः । 'प्रवयाः स्थविरो वृद्धः' इत्यमरोक्तेः ।

श्री.–*स्थविरः = रथस्थः ।

ध्रुवः

र.– *सूर्यं गगने ध्रुवं आरोहयति इति ध्रुवः ।

स.– *ध्रुव स्थैर्ये इत्यतो ध्रुवः स्थिरः ।

श्री.–*ध्रुवः = गगने ध्रुवं सूर्यमारोहयन् ।



श्री.– *विश्वकर्मा = स्वकर्महेतुः ।



## ५१. मनुः

वि.– *अवबोधरूपत्वान्मनुः ।

"मनुरेषोऽवबोधत्वान्मन्वन्तस्थो जनार्दनः ।
स ह्याचारानुवाचेशः प्रेरयन् मनुमानसम्" ॥ इति ब्राह्मे ।

*मन्तृत्वाद् वा मनुः ।

"नान्योऽतोऽस्ति मन्ता" इत्यादिश्रुतेः ।

र.– *यतः इन्द्रस्य शत्रूणां अधृष्यं बलादिकं अस्ति तस्मात् मनुः ।

स.– *अवबोधरूपत्वात् मनुः ।

श्री.– *मनुः = ज्ञाता ।



## ५२. त्वष्टा

वि.– *प्रळये सर्वभूततनूकरणात् त्वष्टा ।

"त्वष्टा तेजस्त्वतो विष्णुर्बलत्वाद्वा समीरितः" इति वचनाद् वा त्वष्टा ।

र.– *दीप्तिमत्वात् त्वष्टा ।

स.– *त्वष्टा दीप्तः ।

श्री.– *त्वष्टा = दीप्तिमान् ।



## ५३. स्थविष्ठः

वि.– ★अतिशयेन स्थूलः स्थविष्ठः ।

र.– ★अतिशयेन स्थवः स्थविष्ठः ।

स.– ★स्थविष्ठः अत्यन्तस्थूलः ।

श्री.– ★स्थविष्ठः = तेजस्वितमः ।



## ५४. स्थविरो ध्रुवः (स्थविरः, ध्रुवः)

वि.– ★पुराणः स्थविरः । "त्वेषं ह्यस्य स्थविरस्य नाम" इति श्रुतेः । स्थिरो ध्रुवः । अविनाशी वा ध्रुवः । स्थविरत्वेन विनाशप्राप्तौ ध्रुवत्वेन स्थविरो विशेष्यते ।

### स्थविरः

र.– ★रथे तिष्ठति इति स्थविरः ।

स.– ★स्थविरः वृद्धः । 'प्रवयाः स्थविरो वृद्धः' इत्यमरोक्तेः ।

श्री.– ★स्थविरः = रथस्थः ।

### ध्रुवः

र.– ★सूर्यं गगने ध्रुवं आरोहयति इति ध्रुवः ।

स.– ★ध्रुव स्थैर्ये इत्यतो ध्रुवः स्थिरः ।

श्री.– ★ध्रुवः = गगने ध्रुवं सूर्यमारोहयन् ।



अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥ ७ ॥

### ५५. अग्राह्यः

वि.– ★इन्द्रियैर्गृहीतुमशक्यत्वाद् अग्राह्यः ।

"न चक्षुषा गृह्यते नापि वाचा" इत्यादिश्रुतेः ।

★ग्राह्यजीवादिविलक्षणत्वाद् वा अग्राह्यः ।

र.– ★दुष्टैः ग्राह्यः न भवति इति अग्राह्यः ।

स.– ★साकल्येन ग्राह्यो न भवति इति अग्राह्यः ।

★सर्वस्यापि गृहीतत्वेन, न विद्यते ग्राह्यं यस्य इति वा ।

★ग्रह उपादाने । ग्राह्यः न भवति इति अग्राह्यः ।

★अह व्याप्तौ इत्यतो ण्यत् । आह्यः गुणैः व्यापनीयः, अग्रश्चासौ आह्यश्च इति वा ।

श्री.–★अग्राह्यः = दुष्टग्रहणायोग्यः ।



### ५६. शाश्वतः

वि.– ★शश्वदेकप्रकारः शाश्वतः ।

"शाश्वतं शिवमच्युतम्" इति श्रुतेः ।

"अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता ।
उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ॥

स्वाभाविकं तयोरेतन्नान्यथा स्यात् कदाचन ।
वदन्ति शाश्वतावेतावत एव महाजनाः" ॥

इति महाविष्णुपुराणे ॥

र.– ★कालत्रयेऽपि शश्वदेकप्रकारेण वर्तत इति कालपरिमाण-रहितत्वात् शाश्वतः ।

स.– ★सदा एकरूपः ।

श्री.–★शाश्वतः = शश्वदेकप्रकारेण वर्तमानः ।



## ५७. कृष्णः

वि.– ★नियमनादिना सकललोककर्षणात् कृष्णः ।

तच्चोक्तं– "यतः कर्षसि देवेश नियम्य सकलं जगत् ।
अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः" ॥
इति कौर्मे ।

★सदानन्दात्मकत्वाद् वा कृष्णः ।

"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" ॥
इति व्यासवचनात् ॥

र.– ★कर्तृत्वात् चेष्टकत्वात् सकलजगत्प्रवर्तकत्वात् बलाद्यनन्त-गुणात्मकत्वात् च कृष्णः ।

स.– ★नियमनादिना सकललोककर्षणात् कृष्णः ।

तच्चोक्तम्–
"यतः कर्षसि देवेश नियम्य सकलं जगत् ।
अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः" ॥ इति महाकौर्मे ।

श्री.–★कृष्णः = कर्ता चेष्टको बलादिगुणात्मकश्च ।



## ५८. लोहिताक्षः

वि.– ★लोहिते अक्षिणी यस्य स लोहिताक्षः ।

"स मा वृषभो लोहिताक्षः" इति श्रुतेः ।

★प्रदीप्तचक्र इति वा । अक्षशब्दस्य चक्रेऽपि प्रवृत्तेः ।

र.– ★लोहितानां रजोगुणयुक्तानां पञ्चविधानां च चर्षणीनां वसूनां च क्षितिः आश्रयः लोहिताक्षः ।

★लोहिताः निवसन्ति अत्र इति लोहिताक्षः ।

स.– ★"लोहिते रक्ते स्वभावात् सलक्षणे, हिरण्यकशिप्वादिशत्रुषु कोपाद्वा रक्ते अक्षिणी यस्य सः लोहिताक्षः ।

श्री.– ★लोहिताक्षः = राजसाश्रयः ।



## ५९. प्रतर्दनः

वि.– ★संहारकाले सर्वं प्रतर्दयति हिनस्तीति प्रतर्दनः ।

★दैत्यान् प्रतर्दयति खण्डयतीति वा प्रतर्दनः ।

र.– ★इष्टं भक्तान् प्रतर्दयति प्रापयति इति प्रतर्दनः ।

स.– ★प्रतर्दनः शत्रुहिंसकः ।

श्री.– ★प्रतर्दनः = भक्तेष्टप्रापकः ।



## ६०. प्रभूतः

वि.– ★सर्वगुणपूर्णत्वाद् व्याप्तत्वाद् वा प्रभूतः ।

र.– ★प्रकर्षेण भूतः प्रभूतः उत्कृष्टः ।

स.– ★प्रकर्षेण भवति इति प्रभुः, ऊ तन्तुसन्ताने द्रौपद्यर्थे यस्मात् सः प्रभूतः ।

★प्रकर्षेण भवति इति प्रभुः । स चासौ गुणैः ऊतः व्याप्तश्चेति ।

★प्रकृष्टानि भूतानि आकाशादीनि यस्मात् इति । 'आत्मन आकाशः सम्भूतः' इत्यादिश्रुतेः ।

श्री.– ★प्रभूतः = प्रकर्षोत्कृष्टः ।



## ६१. त्रिककुद्धामा (त्रिककुब्धामा) (त्रिककुप्-धामा)

वि.– ★तिस्रः ककुभो वैकुण्ठादयो लोका यस्येति त्रिककुप् ।

''अनन्तासनवैकुण्ठनारायणपुराणि तु' ।
त्रीणि धामानि वै विष्णोरास्त्रिलोक्या बहिरेव हि'' ॥
इति ब्रह्माण्डे ॥

★तेजोरूपत्वाद् धामा ।

र.– ★त्रीन् आध्यात्मिकादिशत्रून् ककुत् कुत्सितान् करोति इति त्रिककुत्, तदेव धाम स्वरूपं यस्य सः त्रिककुद्धामा ।

स.– ★त्रिस्रः ककुभः धाम गृहं यस्य तत् त्रिककुब्धाम ।

त्रिककुद्धामा इति पाठे,

''तथैवासं त्रिककुदो वाराहं रूपमास्थितः ।
त्रिककुत्तेन विख्यातः शरीरस्य प्रभावनात्'' ॥

-इति मोक्षधर्मोक्तेः, त्रयः ककुदः वराहावतारे भुजद्वयं कन्दमूलं चेति यस्य सः तथेत्यर्थः ।

श्री.–★त्रिककुद्धामा = आध्यात्मिकादीन् त्रीन् कुत्सितकारि-स्वरूपः ।

''तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते'' इति वचनात् । त्रयाणां लोकानामाश्रयत्वात् त्रिककुब्धामेत्येकं वा पदम्'' ॥



## ६२. पवित्रम्

वि.– ★पुनाति पूयतेऽनेनेति वा पवित्रम् ।

र.– ★पापसङ्गरहितत्वात् पवित्रम् ।

स.– ★पुनातीति पवित्रम् ।

★कुलिशं भिदुरं पविः' इत्याभिधानात् । पविवत् वज्रवत् त्रायत इति वा ।

★''पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनम् ।
पर्यायवाचका ह्येते चक्रस्य परमात्मनः'' ॥

-इति पञ्चरात्रशास्त्रोक्तेः, पवित्रं चक्रम् अस्य अस्ति इति वा ।

श्री.–★पवित्रं = पापरहितः ।



## ६३. मङ्गलम्

वि.– ★''अशुभानि निराचष्टे तनोति शुभसन्ततिम् ।
श्रुतिमात्रेण यत् पुंसां ब्रह्म तन्मङ्गलं विदुः'' ॥

इति विष्णुपुराणेऽभिधानात् ।

★श्रवणमात्रेण कल्याणरूपत्वाद् वा मङ्गलम् ॥

र.– ★लक्ष्म्याः मङ्गलप्रापकत्वोक्त्या तस्य मङ्गलत्वं सिद्धम् एव । तस्मात् मङ्गलम् ।

स.– ★मङ्गलम् कल्याणरूपम् ।

★दातृतया मङ्गलवत्त्वाद्वा ।

श्री.–★मङ्गलं = मङ्गलरूपः ।



## ६४. परम्

वि.– ★सर्वभूतेभ्य उत्कृष्टत्वात् परम् ।

★"निर्दोषगुणपूर्णत्वात् परं चाऽहुर्जनार्दनम्" इति वचनाद् वा परम् ॥

र.– ★तद्रूपमेव परं सर्वोत्तमम् ।

स.– ★परं सर्वोत्तमम् ।

★सर्वविलक्षणं वा ।

श्री.–★परं = सर्वोत्तमः ।



ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ ८ ॥

## ६५. ईशानः

वि.– ★"ईशनादेव चेशानः" इति स्मृत्युक्तरीत्या ईशानः ।

★ईशाननति चेष्टयतीति वा ।

*ईकारवाच्यरमाया पतिर्वा ।

र.– *समर्थः ।

*स्वामी ।

स.– *ईशं रुद्रं अनयति चेष्टयति इति ईशानः ।

*ई लक्ष्मीः तस्याः शं सुखं यस्मात् सः ईशः । अनः अनस्य अयं स्वामी आनः, ईशश्चासौ आनश्च इति वा ।

*मुक्तचेष्टकत्वात् वा ।

'ईशानामपि मुक्तानां ईशान्तः सोऽनताच्छुतः ।'

-इति माण्डूकभाष्योक्तेः ।

श्री.– *ईशानः = स्वामी ।



## ६६. प्राणदः

वि.– *प्राणान् इन्द्रियाणि ददाति, द्यति खण्डयतीति वा प्राणदः ।

''यदा प्राणान् ददातीशस्तदा चेतनकोऽखिलम् ।
जानाति ग्रस्तकरणस्तेन वेत्ति न किञ्चन'' ॥ इति श्रुतेः ।

र.– *प्राणान् ददाति इति प्राणदः ।

स.– *प्राणान् ददाति इति प्राणदः ।

श्री.– *प्राणदः = चक्षुरादीन्द्रियदाता ।



### ६७. प्राणः

वि.– ★इन्द्रियदेवान् सदा प्राणितीति प्राणः ।

''तद् वै त्वं प्राणोऽभवः यद् देवान् प्राणयो नव'' इति श्रुतेः ।

★सर्वलोकप्रणयनाद् वा ।

र.– ★प्रकृष्टचेष्टकत्वात् प्राणः ।

स.– ★प्रकर्षेण अणं सुखविरुद्धदुःखं द्यति खण्डयति इति वा ।

★प्रकृष्टचेष्टकत्वात् वा प्राणः ।

श्री.– ★प्राणः = प्रकृष्टचेष्टावान् ।



### ६८. ज्येष्ठः

वि.– ★अतिशयेन वृद्धः ज्येष्ठः ।

र.– ★ज्येष्ठत्वरूपमाहात्म्यवत्त्वात् ज्येष्ठः ।

स.– ★ज्येष्ठः श्रेष्ठः गुणैः कालेन वा वृद्धतमः ।

श्री.– ★ज्येष्ठः = माहात्म्यवान् ।



### ६९. श्रेष्ठः

वि.– ★प्रशस्यतमः श्रेष्ठः ।

र.– ★प्रशस्तगुणशालित्वात् श्रेष्ठः ।

स.– ★श्रेष्ठः प्रशस्ततमः । प्रशस्यतमः ।

श्री.– ★श्रेष्ठः = प्रशस्तगुणशाली ।



## ७०. प्रजापतिः

वि.– *प्रजानां पालनात् प्रजापतिः ।

र.– *प्रजापतिः ब्रह्मा तत्वोपदेशादिना सेवकः यस्य सः प्रजापतिः ।

स.– *प्रजापालकत्वात् प्रजापतिः ।

'प्रजानां पालनाद्विष्णुः प्रजापतिरितीर्यते' –इति षट्प्रश्न-भाष्योक्तेः ।

*प्रकर्षेण जनयति इति प्रजः ।

न विद्यते पतिर्यस्य सः अपतिः, प्रजश्चासौ अपतिश्चेति वा प्रजापतिः ।

श्री.– *प्रजापतिः = ब्रह्मसेव्यः ।



## ७१. हिरण्यगर्भः

वि.– *"हिरण्यमस्य यद् गर्भे हिरण्यस्यापि गर्भजः ।
हिरण्यगर्भस्तस्माद्धि पुराणे स निगद्यते" ॥
इति भारतवचनात् हिरण्यगर्भः ।

"हिरण्यगर्भः समवर्तताग्रे" इति च श्रुतिः ।

र.– *हितं च रमणीयं च इति हिरण्यं सोमः ज्ञानं च । तत् गर्भे उदरे यस्य सः हिरण्यगर्भः ।

स.– *'हर्य गतिकान्त्योः' इत्यस्मात् हर्यत अनेन कान्तिः इति व्युत्पत्त्या हिरण्यं सुवर्णात्मकं ब्रह्माण्डं गर्भे यस्य सः हिरण्यगर्भः ।

श्री.– *हिरण्यगर्भः = हितरमणीयज्ञानोदरः ।



## ७२. भूगर्भः

वि.– *भूः गर्भे यस्य स भूगर्भः ।

र.– *उत्कृष्टा भवति अनेन इति भूः वज्रं ज्ञानं वा तां गृह्णाति इति भूगर्भः ।

स.– *स्वरादित्वात् अव्ययात्मकऋशब्दवाच्यस्वर्गे भान्तीति ऋभाः देवाः भुवं गच्छन्तीति भूगा ऋभाः यस्मात् सः भूगर्भः ।

*भूः गर्भे यस्य इति वा ।

श्री.– *भूगर्भः = उत्कर्षकरणज्ञानग्रहः ।



## ७३. माधवः

वि.– *मायाः श्रियो धवः पतिः माधवः ।

"श्रीपतित्वाच्च माधवः" इति वचनात् ।

*विद्येश्वरत्वाद्वा माधवः ।

"मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् ।
तस्मान्माधवनामासि धवः स्वामीति शब्दितः" ।। इति हरिवंशे ।

र.– *मा ज्ञानं तत्करणं आचार्यादि वा । तत् प्रतिष्ठापकत्वेन धवः पतिः इति माधवः ।

स.– ★मायाः धवः माधवः ।

★मधोः अयं तद्वंशत्वात् वा ।

★न विद्यते धवः यस्य इति वा ।

श्री.– ★माधवः = ज्ञानपतिः ।



## ७४. मधुसूदनः

वि.– ★मधुनामानमसुरं निसूदितवान् इति मधुसूदनः ।

र.– ★आपाततः मधुवत् रमणीयत्वात् मं ज्ञानं सुखं वा तत् धुनोति इति मधुसूदनः ।

★मधूनि अज्ञानादीनि वृत्रादीनि वा सूदयति इति मधुसूदनः ।

स.– ★''मध्वित्यानन्द उद्दिष्टः'' इत्युक्तेः मधु सुखं सुष्ठु उदं कर्म ज्ञानं वा एषां ते सूदाः ।

''अ इत्युक्तः परो विष्णुः एभ्य उच्चः स एव तु ।
त उदाः जीवसङ्घाः स्युः''..... ॥ -इति तैत्तिरीय भाष्योक्तेः ।

उदाः जीवाः ।

शोभनाश्च ते उदाश्च इति वा सूदाः सज्जीवाः । मधु सूदान् नयति इति मधुसूदनः ।

★मधुं सूदयति इति वा मधुसूदनः, पूद क्षरणे ।

श्री.– ★मधुसूदनः = ज्ञाननिरासकाज्ञाननाशकः ।



ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ ९ ॥

## ७५. ईश्वरः

वि.– *पूर्णशक्तित्वात् ईश्वरः ॥

र.– *ईशेभ्यः वरः इति ईश्वरः ।

स.– *ईशेभ्यः ब्रह्मादिभ्यः वरः ईश्वरः ।

*अस्य स्त्री ई लक्ष्मीः, श्वा वायुः ।

"श्वा वै वायुः श्वसनात्" -इति ऋग्भाष्योक्तेः । ईश्वभ्यां राजत इति वा ।

श्री.– *ईश्वरः = ईशश्रेष्ठः ।



## ७६. विक्रमी

वि.–*विक्रमः शौर्यम् । विशिष्टः पादविक्षेपो वा । सोऽस्यास्तीति विक्रमी ।

र.– *विशिष्टः क्रमः व्यापारः विक्रमः । सः अस्य अस्ति इति विक्रमी ।

स.– *विक्रमः अस्य अस्ति इति विक्रमी ।

*क्रमः तारतम्यं अस्य अस्ति इति क्रमी । विप्रिय इत्यादिवत् विशब्दः नङ् अर्थे । न क्रमी विक्रमी स्वावतारेषु तारतम्यरहितः इति वा ।

श्री.– *विक्रमी = विशिष्टव्यापारवान् ।

### ७७. धन्वी

वि.– *प्रशस्तं धनुरस्यास्तीति धन्वी ।

र.– *इन्द्रेण हते वृत्रे आपः यन्ति इति अनेन धन्वः आप ताः प्रवर्त्यत्वेन अस्य सन्ति इति धन्वी ।

स.– *धनुः अस्य अस्ति इति धन्वी ।

श्री.– *धन्वी = उदकप्रवर्तकः ।



### ७८. मेधावी

वि.– *मेधा धारणावती बुद्धिः । साऽस्यातीति मेधावी ।

र.– *बुद्धिमान् मेधावी ।

स.– *मेधा अस्य अस्ति इति मेधावी ।

श्री.– *मेधावी = बुद्धिमान् ।



### ७९. विक्रमः

वि.– *विश्वविक्रमणाद् विक्रमः ।

*विना पक्षिणा गरुडेन क्रमणात् ।

*विशिष्टकार्यक्रमवत्त्वाद्वा विक्रमः ।

र.– *शत्रून् हन्तुं विक्रमते इति विक्रमः ।

स.– *विशेषेण क्रमः पादविक्षेपः यस्यासौ विक्रमः ।

'क्रमु पादविक्षेपे' इति धातोः ।

श्री.– ★विक्रमः = पराक्रमकर्ता ।



## ८०. क्रमः

वि.– ★क्रमात् क्रमहेतुत्वात् क्रमः ।

र.– ★वृत्रशरीरं काष्ठादौ क्रमयति सङ्क्रामयति, आपश्च भूमौ संक्रामयति इति क्रमः ।

स.– ★क्रमदेवत्वात् क्रमः । स्पष्टं चैतत् ऐतरेयभाष्ये ।

''पृथिवीस्थो वराहस्तु संहितादेवतोदिता ।
दिविष्ठो वामनश्चैव सम्प्रोक्ताः पददेवताः ।
नृसिंहस्त्वन्तरिक्षस्थो भगवान् क्रमदेवता'' ।। इति ।

श्री.– ★क्रमः = भूमौ अपां क्रमयिता ।



## ८१. अनुत्तमः

वि.– ★अविद्यमान उत्तमो यस्मात् सोऽनुत्तमः ।

''यस्मात् परं नापरमस्ति किञ्चित्'' इति श्रुतेः ।

र.– ★न विद्यते उत्तमः यस्मात् सः अनुत्तमः ।

स.– ★न विद्यते उत्तमः यस्मात् इति अनुत्तमः ।

★न विद्यते नुत् प्रेरकः यस्य सः अनुत् । 'नुद प्रेरणे' । अतिशयेन अनुत् अनुत्तमः ।

''नुत्तनुन्नास्तनिष्ठ्यूता विद्धक्षिप्तेरिताः समाः'' इति कोशात् ।

★नुत्ता तिरस्कृता, न नुत्ता अनुत्ता अतिरस्कृता मा सम्पत् ज्ञानं वा यस्य इति वा ।

★'क्लिन्नं तिमित्तं समुन्नमुत्तं च' इत्यमरोक्तेः, अनुत्ता अक्लिन्ना रमा यस्येति वा ।

श्री.–★अनुत्तमः = सर्वोत्तमः ।



## ८२. दुराधर्षः

वि.–★असुरैर्न शक्यो धर्षयितुमिति दुराधर्षः ।

र.– ★केनाप्यधृष्यः पराभाव्यः न भवति इति दुराधर्षः ।

स.– ★आधर्षयितुमशक्यः दुराधर्षः ।

''श्रुतिस्मृती हरेराज्ञे'' इत्युक्तेः ।

श्री.–★दुराधर्षः = अपराभाव्यः ।



## ८३. कृतज्ञः

वि.–★प्राणिभिः कृतं पुण्यादिरूपं कर्म स्वाराधनरूपमुपकारं वा जानातीति कृतज्ञः ।

र.– ★कृतं कर्मजातं व्यर्थीकरणप्रकारं च जानाति इति कृतज्ञः ।

स.– ★कृतं कर्म ज्ञापयति इति वा ।

★कृतं स्वाराधनरूपमुपकारं जानाति इति वा ।

★कृतान् नित्यान् सर्वपदार्थान् जानाति इति वा कृतज्ञः ।

★कृताः उत्पादिताः ज्ञाः जीवाः येन इति वा । 'यतो वा इमानि भूतानि' इति श्रुतेः ।

श्री.– ★कृतज्ञः = कर्मज्ञानी ।



## ८४. कृतिः

वि.– ★करोतीति कृतिः ।

★प्रयत्नरूपत्वात् क्रियारूपत्वाद् वा कृतिः ।

''पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्'' इति श्रुतेः ।

र.– ★असाधारण्येन व्यपदेशात् अनन्यसाध्यं कर्म करोति इति कृतिः ।

स.– ★प्रयत्नरूपत्वात् कृतिः ।

श्री.– ★कृतिः = अनन्यसाध्यकर्मपरः ।



## ८५. आत्मवान्

वि.– ★आत्मशब्देन आततत्वप्रयत्नधृतिबुद्ध्यादयो ह्युच्यन्ते । तद्वान् आत्मवान् ।

कृतिरिति प्रयत्नादीनां तत्स्वरूपत्वमुक्तम् । आत्मवानिति विशेष-शक्त्या भेदव्यवहारोऽपि घटत इति दर्शयति ।

''गुणरूपोऽपि भगवान् गुणभुक् च सदा स्मृतः ।
अहमित्यात्मभोगो यत् सर्वेषामनुभूयते ।।

अभिन्नेऽपि विशेषोऽयं सदानुभवगोचरः ।
विशेषोऽपि हि नान्योऽतः स च स्वस्यापि युज्यते ॥
नानवस्था ततः क्वापि परमैश्वर्यतो हरेः ।
युक्तायुक्तत्वमपि हि यदधीनं सदेष्यते ॥
प्रमाणावगते तत्र कुतः एव ह्ययुक्तता'' ॥ इति परमश्रुतिः ।

र.– ★आत्मानः नवनवतिदेवाः तार्यत्वेन भक्तत्वेन च अस्य सन्ति इति आत्मवान् ।

स.– ★''आत्मा विरिञ्चिः सुमनाः सुधौतश्च इति कथ्यते'' इति वचनात्, आत्मा चतुर्मुखः, तद्वान् आत्मवान् ।

★आत्मा देहः नित्यम् अस्ति इति वा ।

श्री.–★आत्मवान् = तार्यदेववान् ।



सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥ १० ॥

## ८६. सुरेशः

वि.– ★सुराणां देवानामीशः सुरेशः ।

र.– ★सर्वे चेतनाः स्थावराश्च तेषां ईशः स्वामी इति सुरेशः ।

स.– ★सुरा समुद्रोत्था येषाम् अस्ति इति सुराः । सुष्ठु राजन्ते इति वा । 'राजृ दीप्तौ' । सुराणां ईशः सुरेशः ।

श्री.–★सुरेशः = चेतनाचेतनस्वामी ।



## ८७. शरणम्

वि.– ★भीतानां भयहन्तृत्वादाश्रयत्वाच्च शरणम् ।

र.– ★ब्रह्माद्यशेषजगत्सुखहेतुत्वात्, रक्षकत्वात् च शरणम् ।

स.– ★शरणम् आश्रयः रक्षिता वा ।

'शरणं गृहरक्षित्रोः' इत्यमरः ।

श्री.– ★शरणं = ब्रह्मादिरक्षकः ।



## ८८. शर्म

वि.– ★परमानन्दरूपत्वात् शर्म ।

र.– ★भक्तेभ्यः शरं अतिशयितसुखं माति निर्मिमीते स्वयम् अनुभवति च इति शर्म ।

स.– ★शर्म शृणाति अशुभं, 'शॄ हिंसायाम्' ।

श्री.– ★शर्म = अतिशयितसुखनिर्माता ।



## ८९. विश्वरेताः

वि.– ★विश्वं रेतः कार्यं यस्य स विश्वरेताः ।

★विश्वस्य रतिप्रदानाद्वा विश्वरेताः ।

र.– ★विश्वासु समस्तासु वेदवाक्सु रेताः सर्वसारतया प्रतिपाद्यते इति विश्वरेताः ।

स.– ★विश्वरेताः जगत्कारणम् ।

भुवनस्य रेतो विष्णोरिति श्रुतेः ।

*विश्वो वायुः तत्कारणं वा ।

'विश्वो वायुः समुद्दिष्टः' इत्युक्तेः ।

श्री.– *विश्वरेताः = सर्ववेदवाक्प्रतिपाद्यः ।



## ९०. प्रजाभवः

वि.– *प्रजाः भवन्त्यस्मादिति प्रजाभवः ।

*प्रकर्षेण जायते प्रादुर्भवति देहसम्बन्धेन न भवति इति वा प्रजाभवः ।

''अजायमानो बहुधा विजायते'' इति श्रुतेः ॥

र.– *प्रजाः प्रहृष्टाः (प्रकृष्टा) एभिः जायन्ते इति ज्ञानसाधनाद्यभीष्टानि ताः भावयति दोग्धीति प्रजाभवः ।

स.– *प्रजनयन्तीति प्रजाः भगवतः ज्ञापयितारः ।

''इन्द्र एकं सूर्य एकं जजान इति श्रुतेः ।
यस्ता विजानात् सः पितुः पितासत्'' ॥ इति श्रुतेः ।

*न विद्यते भव उत्पत्तिः यस्मिन् इति वा अभवः वैकुण्ठादिः, प्रजानां अभवः यस्मात् सः प्रजाभवः ।

*प्रजानां भवः उत्पत्तिः यस्मात् इति वा ।

*प्रजाश्च भानि च तानि वर्तयति इति वा ।

श्री.– *प्रजाभवः = प्रकर्षसाधनाभीष्टदोग्धा ।

## ९१. अहः

वि.– ★प्रकाशरूपत्वात्, अहीनत्वात्, अहेयत्वात्, अहन्तृत्वात्, अहन्यमानत्वाद्वा अहः ।

र.– ★अहःशब्दितप्रकाशाख्यसुमतिविषयत्वेन अहः ।

स.– ★हन्यमानत्वात् हः जीवः सः न भवति इत्यहः ।

★हेयो न भवति इति वा अहः ।

''ओहाक् त्यागे'' इति धातोः ।

श्री.– ★अहः = प्रकाशाख्यसुमतिविषयः ।



## ९२. संवत्सरः

वि.– ★सम्यग् वत्सभूतान् ब्रह्मादीन् रमयतीति संवत्सरः ।

★सम्यग् वसति सरति चेति वा ।

''आसीनो दूरं व्रजति, शयानो याति सर्वतः'' इति श्रुतेः ।

र.– ★भक्तेषु सम् अत्यन्तं वत्सरः वत्सलः इति संवत्सरः ।

स.– ★संवसति अत्रेति संवत्सरः ।

श्री.– ★संवत्सरः = भक्तवत्सलः ।



## ९३. व्यालः

वि.– ★विगतमालम्बनं यस्येति व्यालः ।

★मणिषु सूत्रमिव सर्वत्र विशेषेण आलम्बत इति, विशेषेण आ समन्ताल्लातीति वा । ला दाने ।

र.– ★व्यालः क्रूरः प्राणी तद्वत् शत्रूणां मारकः इति व्यालः ।

स.– ★वि आङ्पूर्वात् अड उद्यमे इति धातोः, अच् प्रत्यये डलयोरभेदे व्यालः ।

भक्ताभीष्टप्रदानोद्योगवान् ।

★अलं भूषणपर्याप्तिवारणेषु इति धातोः अच् प्रत्यये निष्पन्नालशब्दात् समूहार्थे अणि अलानां भूषणानां समूह आलम्, कौस्तुभादिकं विशेषेण आलम् यस्य इति वा ।

★विशेषेण अलति सृष्ट्यादिकार्ये पर्याप्तो भवति इति वा ।

★शत्रून्वारयतीति वा ।

★विशेषेणासमन्ताज्जगतः क्षयो यस्मादिति वा ।

★लीङ् श्लेषण इत्यतो डप्रत्यये विशेषेणासमन्तात् श्लेषो यस्येति वा ।

★लस् प्रकाशन इत्यतो भावे डप्रत्यये विशेषेणासमन्तात् प्रकाशनं यस्येति वा ।

श्री.– ★व्यालः = क्रूरप्राणिवच्छत्रुमारकः ।



## ९४. प्रत्ययः

वि.– ★ज्ञानरूपत्वात् प्रत्ययः ।

★प्रतिपुरुपमयत इति वा ।

र.– ★ज्ञानिनं प्रति अयः अभीष्टस्य नयनं येन सः इति वा, प्रत्ययः ज्ञानं तत् दातृत्वेन प्रत्ययवान् प्रत्ययः ।

स.– *प्रत्ययः ज्ञानरूपः । प्रतिविषयान् अयते जानाति इति । अय पय गतौ इति धातोः ।

श्री.–*प्रत्ययः = ज्ञानिनं प्रति अभीष्टनेता ।



## ९८. सर्वदर्शनः

वि.–*सम्पूर्णज्ञानरूपत्वात्, सर्वविषयसाक्षात्कारवत्त्वाद्वा सर्वदर्शनः ।

*सर्वशास्त्रप्रवर्तको वा ।

*सर्वस्य ज्ञानप्रदो वा ।

र.– *सर्वेषां दर्शनं यस्मिन् सः सर्वदर्शनगोचरः सर्वदर्शनः ।

स.– *सर्वविषयकत्वात् सर्वं दर्शनं यस्यासौ सर्वदर्शनः ।

*'ईश्वरः सर्व ईशानः' इति द्विरूपकोशात् 'पर्व हिंसायां' इत्यतः पचाद्यचि धात्वादेः षः स इति सत्वे च सर्वो रुद्रः, तस्य दर्शनं ज्ञानं यस्माद् इति वा ।

*सर्वे च ते दर्शाश्च अमावास्याश्च तेषु हविरादिकं नयति इति सर्वदर्शनः ।

श्री.– *सर्वदर्शनः = सर्वदृष्टिगोचरः ।



अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥ ११ ॥

## ९६. अजः

वि.– ★जननराहित्यादजः ।

"न हि जातो न जायेऽहं न जनिष्ये कदाचन ।
क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः" ।। इति भारते ।

"न जातो न जनिष्यते" इति श्रुतिः ।

र.– ★सदा सत्-द्वेपिणां कलिप्रभृतीनां पृथिव्यां निरसनात् अजः ।

स.– ★न जायते इति अजः ।

★'अज गतौ' इति धातोः गन्ता वा ।

श्री.– ★अजः = दैत्यक्षेपकः ।



## ९७. सर्वेश्वरः

वि.– ★सर्वेषामीश्वरः सर्वेश्वरः ।

"एष सर्वेश्वरः" इति श्रुतेः ।

र.– ★सर्वान् ईशान् समर्थान् सुदासशत्रून् वारयति इति सर्वेश्वरः ।

स.– ★सर्वेषां ईश्वरः सर्वेश्वरः ।

श्री.– ★सर्वेश्वरः = सर्वसमर्थशत्रुनिवारकः ।



## ९८. सिद्धः

वि.– ★नित्यनिष्पन्नरूपत्वात् स्वाभाविकाणिमादिसम्पन्नत्वाद्वा सिद्धः ।

र.– *सदा गमनशीला मरुतः सिधः, सिधां मरुतां नियमनचेष्टाः धत्ते इति वा सिद्धः ।

स.– *'षिध गत्याम्' इति धातोः सिद्धः गम्यः ।

*निश्चयज्ञानरूपो वा ।

*सिद्धः भक्तरक्षणाय ।

श्री.– *सिद्धः = सदा गमनशीलमरुतां नियमनचेष्टाधारकः ।



## ९९. सिद्धिः

वि.– *मोक्षादिफलसाधकत्वात् सिद्धिः ।

*फलाभिलाषाकलुपितमनसां फलरूपत्वाद्वा सिद्धिः ।

"वेदाः सर्वेऽपि देवार्था देवा नारायणार्थकाः ।
नारायणस्तु मोक्षार्थे मोक्षो नान्यार्थ इष्यते ॥
एवं मध्यमभक्तानामेकान्तानां न कस्यचित् ।
अर्थे नारायणो देवः सर्वमन्यत् तदर्थकम्" ॥ इति गीताकल्पे ।

*षिधु गत्यामिति धातोर्ज्ञानादिरूपो वा ॥

र.– *सिधः मरुतः तान् भक्तेषु सखित्वेन आदधाति इति सिद्धिः ।

स.– *निरतिशयरूपत्वात् सिद्धिः ।

श्री.– *सिद्धिः = मरुतः भक्तेपु सखित्वेन अदधन् ।



## १००. सर्वादिः

वि.– ★सर्वस्य कारणत्वात्, अत्तृत्वात्, आदातृत्वाद्वा सर्वादिः ।

र.– ★सर्वान् अत्ति इति सर्वादिः ।

स.– ★सर्वकारणत्वात् सर्वादिः ।

★सर्वैः आदित उपादीयत इति वा ।

★सर्वं अत्ति इति वा सर्वादिः ।

श्री.–★सर्वादिः = समस्तात्ता ।



## १०१. अच्युतः

वि.–★"यस्मान्न च्युतपूर्वोऽहमच्युतस्तेन कर्मणा" इति भगवद्वचनादच्युतः ।

"शाश्वतं शिवमच्युतम्" इति श्रुतेः ॥

र.– ★अप्रच्युतसुखवत्वात् अच्युतः ।

स.– ★देशतः कालतः गुणतश्च च्युतिरहितत्वात् अच्युतः ।

श्री.–★अच्युतः = अप्रच्युतसुखः ।



## १०२. वृषाकपिः

वि.– ★वर्षणात् सर्वकामानां धर्मो वृषः । काज्जलात् भूमिं पातीति कपिर्वराहः । तदुभयरूपत्वाद् वृषाकपिः ।

''कपिर्वराहः श्रेष्ठश्च धर्मो हि वृष उच्यते ।
तस्माद् वृषाकपिं प्राह कश्यपो मां प्रजापतिः'' ॥

इति व्यासवचनात् ।

र.– ★भक्ताभिलषितवर्षिता वृषः । आ समन्तात् भक्तान् कं सुखं प्रापयति इति आकपिः । वृषश्चासौ आकपिश्च वृषाकपिः ।

स.– ★वर्षणाद्वृष, आकं सुखं पिवति इति आकपिः, वृषश्चासौ आकपिश्च इति वृषाकपिः ।

★वृषेण धर्मेण आकं सुखं पिनष्टि इति वा ।

श्री.–★वृषाकपिः=भक्ताभीष्टवर्षकः, समन्ताद्भक्तान् सुखं प्राशयिता ।



## १०३. अमेयात्मा

वि.– ★एतावानिति मातुं परिच्छेत्तुं अशक्यः, आत्मा चेत्यमेयात्मा ।

आत्मशब्दार्थश्चोक्तो वामने–

''यो गुणैः सर्वतो हीनो यश्च दोषविवर्जितः ।
हेयोपादेयरहितः स आत्मेत्यभिधीयते'' ॥ इति ।

★अमेयः आत्मा देहो यस्येति वा ।

''परो मात्रया तन्वा वृधान'' इति श्रुतेः ॥

र.– ★अमेयः आत्मा स्वरूपं यस्य सः अमेयात्मा ।

स.– ★साकल्येन ज्ञातुं अशक्यस्वरूपः ।

## १००. सर्वादिः

वि.– ★सर्वस्य कारणत्वात्, अत्तृत्वात्, आदातृत्वाद्वा सर्वादिः ।

र.– ★सर्वान् अत्ति इति सर्वादिः ।

स.– ★सर्वकारणत्वात् सर्वादिः ।

★सर्वैः आदित उपादीयत इति वा ।

★सर्वं अत्ति इति वा सर्वादिः ।

श्री.–★सर्वादिः = समस्तात्ता ।



## १०१. अच्युतः

वि.–★"यस्मान्न च्युतपूर्वोऽहमच्युतस्तेन कर्मणा" इति भगवद्वचनादच्युतः ।

"शाश्वतं शिवमच्युतम्" इति श्रुतेः ॥

र.– ★अप्रच्युतसुखवत्त्वात् अच्युतः ।

स.– ★देशतः कालतः गुणतश्च च्युतिरहितत्वात् अच्युतः ।

श्री.–★अच्युतः = अप्रच्युतसुखः ।



## १०२. वृषाकपिः

वि.– ★वर्षणात् सर्वकामानां धर्मो वृषः । काज्जलात् भूमिं पातीति कपिर्वराहः । तदुभयरूपत्वाद् वृषाकपिः ।

"कपिर्वराहः श्रेष्ठश्च धर्मो हि वृष उच्यते ।
तस्माद् वृषाकपिं प्राह कश्यपो मां प्रजापतिः" ॥

इति व्यासवचनात् ।

र.– ***भक्ताभिलषितवर्षिता वृषः । आ समन्तात् भक्तान् कं सुखं प्रापयति इति आकपिः । वृषश्चासौ आकपिश्च वृषाकपिः ।**

स.– ***वर्षणाद्वृष, आकं सुखं पिवति इति आकपिः, वृषश्चासौ आकपिश्च इति वृषाकपिः ।**

***वृषेण धर्मेण आकं सुखं पिनष्टि इति वा ।**

श्री.– ***वृषाकपिः=भक्ताभीष्टवर्षकः, समन्ताद्भक्तान् सुखं प्राशयिता ।**



## १०३. अमेयात्मा

वि.– ***एतावानिति मातुं परिच्छेत्तुं अशक्यः, आत्मा चेत्यमेयात्मा ।**

आत्मशब्दार्थश्चोक्तो वामने–

"यो गुणैः सर्वतो हीनो यश्च दोषविवर्जितः ।
हेयोपादेयरहितः स आत्मेत्यभिधीयते" ॥ इति ।

***अमेयः आत्मा देहो यस्येति वा ।**

"परो मात्रया तन्वा वृधान" इति श्रुतेः ॥

र.– ***अमेयः आत्मा स्वरूपं यस्य सः अमेयात्मा ।**

स.– ***साकल्येन ज्ञातुं अशक्यस्वरूपः ।**

श्री.– *अमेयात्मा = अप्रमेयस्वरूपः ।



## १०४. सर्वयोगविनिःसृतः

वि.– *सर्वभूताधारत्वेन सर्वाशयस्थो भवन्नपि सर्वेभ्यो योगेभ्यः सम्बन्धेभ्यो विनिर्गतः सर्वयोगविनिःसृतः ।

"असङ्गो ह्ययं पुरुषः" इति श्रुतेः ।

*सम्पूर्णज्ञानाद्युपायेन विशेषतो नितरां युक्त इति वा ।

र.– *युज्यन्ते इति योगाः भोग्याः धनादयः । सर्वेषां योगानां विनिःसृतः विनिःसृतिः यस्मात्, सर्वे योगाः विनिःसृताः यस्मात् इति वा सर्वयोगविनिःसृतः ।

स.– *सर्वे च ते योगाश्च सर्वयोगाः सर्वोपाया विनिःसृताः यस्मात् ।

श्री.– *सर्वयोगविनिःसृतः = सर्वधनाद्युत्पत्तिभूमिः ।



वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ १२ ॥

## १०५. वसुः

वि.– *वसत्याच्छादयति मायया सर्वमिति वसुः ।

वरान् सूत इति वा वसुः ।

"वरसूर्वसुरुद्दिष्टः" इत्युक्तेः ।

र.– *वसु धनं दातव्यतया अस्य अस्ति इति वसुः ।

स.– *सर्वत्र वसति इति वसुः ।

*वं ज्ञातं सूते इति वा ।

श्री.–*वसुः = दातव्यधनवान् ।



## १०६. वसुमनाः

वि.– *वसु शोभनं मनो यस्य स वसुमनाः ।

र.– *शुश्रूषितुं वाति गच्छति जानाति इति वा वः । वे शुश्रूषमाणे कुत्से सु समीचीनं मनः दयार्द्रं यस्य इति वसुमनाः ।

स.– *भक्तसमर्पितवसूनि तोये द्रव्ये वा स्यमन्तकमणौ वा मनः यस्य सः तथा ।

श्री.–*वसुमनाः = सेवके सम्यङ्मनस्वान् ।



## १०७. सत्यः

वि.– *नित्यसाधुगुणव्याप्तत्वाद् यन्तृत्वाद् वा सत्यः ।

*"निर्दुःखानन्दपूर्णत्वाद् यमाहुः सत्यमच्युतम्" ।

इत्युक्तरीत्या वा सत्यः ।

र.– *अणिमाद्यष्टैश्वर्यजातं सत् तत् सुदासादिभक्तजनान् यापयति प्रापयति । सन्तं सुदासादिं याति सद्गुणदानेन इति वा सत्यः ।

स.– *सद्भावं यापयति इति सत्यः ।

"सद्भावं यापयेद्यस्मात् सत्यं तत्तेन कत्थते" ।

श्री.– *सत्यः = सद्भ्यः सद्गुणप्रापयिता ।



## १०८. समात्मा

वि.– *समा एकप्रकारा मूर्तयो यस्येति समात्मा ।

''प्रादुर्भावादिरूपेषु मूलरूपेषु सर्वशः ।
न विशेषोऽस्ति सामर्थ्ये गुणेष्वपि कदाचन'' ।। इति महावाराहे ।

*सम आत्मा मनो यस्येति वा, समश्चासावात्मेति वा समात्मा ।

'सम आत्मेति विद्यात्'' इति श्रुतेः ।

र.– *सं सर्वोत्तमः आत्मा स्वरूपं यस्य इति समात्मा ।

स.– *मा रमा, आत्मा चतुर्मुखः ताभ्यां सहितः समात्मा ।

*सारत्वात् सः, माया आत्मा यस्य इति वा । माया आत्मा मनः यस्मिन् इति वा, मात्मा, स चासौ मात्मा च इति वा ।

*मया ज्ञानेन सहिताः समाः ज्ञानिनः तेषां आत्मा इति वा ।

श्री.– *समात्मा = सर्वोत्तमस्वरूपः ।



## १०९. सम्मितः (असम्मितः)

वि.– *सम्यक् श्रुत्यादिप्रमाणैर्मितः सम्मितः ।

*असम्मितः सम्यक् साकल्येन प्रमाणैरप्रमित इति वा, अपरिच्छिन्न इति वा, न प्रमित इति वा असम्मितः ।

र.– ★सम्यक् पुराणि मिनोति इति सम्मितः ।

स.– ★सं सम्यक् मितः प्रमाणैः इति संमितः ।

★सम्यक् मितं जगत्त्रितयं येन इति वा ।

★'मितजगत्त्रितयाय जितारये' इत्युक्तेः, सम्यक् मितः न भवति इति असम्मितः इत्यप्याहुः ।

श्री.– ★संमितः = सम्यक्पुरनाशकः ।



### ११०. समः

वि.– ★अधिष्ठानवैचित्र्येऽपि स्वस्य सर्वत्रैकरूप्यात् समः ।

"विषमेष्वपि जीवेषु समो विष्णुः सदैव तु ।
यत् तृणादिगतस्यापि गुणाः पूर्णा हरेः सदा" ॥
इति पैङ्गिश्रुतिः ।

★पक्षवर्जितत्वाद्वा समः ।

"नास्य भक्तोऽपि यो द्वेष्यो न चाभक्तोऽपि यः प्रियः ।
किन्तु भक्त्यनुसारेण फलदोऽतः समो हरिः" ॥ इति पाद्मे ।

स्कान्दे च–

"देशकालौ गुणांश्चैव भक्त्यादीनप्यपेक्ष्य तु ।
योग्यतां च तथा कर्म फलदानात् समः स्मृतः" ॥ इति ॥

र.– ★समानि तत्तद्योग्यतानुसाराणि सप्रमाणानि वा दानानि अस्य इति समः ।

स.– ★मया लक्ष्म्या, माभिः वेदैः, प्रमाणैः वा सहितत्वात् समः ।

*सर्वत्र सर्वरूपेषु समत्वाद् वा समः ।

*तत्तद्योग्यफलदातृत्वात् समः ।

श्री.– *समः = सप्रमाणदानवान् ।



## १११. अमोघः

वि.– *अवाप्तसकलकामत्वात् सफलश्रवणादिविषयत्वाद् वा अमोघः ।

र.– *न विद्यते मोघः विघ्नः कर्मणः यस्य इति अमोघः ।

स.– *न विद्यते मोघं जगत्सर्जनादिकं यस्य इत्यमोघः ।

'यच्चिकेत सत्यमित्तं न मोघम्' इति श्रुतेः ।

श्री.– *अमोघः = अनिष्फलकर्मा ।



## ११२. पुण्डरीकाक्षः

वि.– *पुण्डरीके इव अक्षिणी यस्य स पुण्डरीकाक्षः ।

*हृदयस्थं पुण्डरीकमश्नुते व्याप्नोति तत्रोपलभ्यत इति वा पुण्डरीकाक्षः ।

''यत् पुण्डरीकं पुरमध्यसंस्थम्'' इति श्रुतेः ।

''पुण्डरीकं परं धाम नित्यमक्षयमव्ययम् ।
तेनैव पुण्डरीकाक्ष उच्यते पुरुषोत्तमः'' ॥

इति महासंहितायाम् ॥

र.– *पुण्डरीकवत् प्रियाः भक्ताः पुण्डरीकाणि तेषां आक्षः आ समन्तात् आश्रयः इति पुण्डरीकाक्षः ।

स.– *पुण्डरीके इव अक्षिणी यस्य सः पुण्डरीकाक्षः ।

*पुण्डरीकः अग्निः स एव अक्षि तृतीयं यस्य नरसिंहस्य सः इति वा ।

*पुण्डरीकनामकमुनौ अक्षि कृपादृष्टिः यस्य इति वा ।

श्री.– *पुण्डरीकाक्षः = भक्ताश्रयः ।



## ११३. वृषकर्मा

वि.– *धर्मलक्षणं कर्म यस्य स वृषकर्मा ।

*सर्वाभीष्टप्रदव्यापारो वा ।

*वृषस्य शुष्मिण इव कर्माणि यस्य स वृषकर्मेति वा ।

र.– *स्वभक्तं वृषं श्रेष्ठं करोति इति वृषकर्मा ।

स.– *'पुण्यश्रेयसी सुकृतं वृषः' इत्युक्तेः वृषकर्मा पुण्यकर्मा ।

वृषाणां नासावेधादिकर्म यस्य स इति वा ।

तदुक्तं भागवते–

बद्ध्वा तान् दामभिः शौरिः भग्नवीर्यान् हतौजसः ।
अकर्षल्लीलया बद्धान् बालो दारुमयान्यथा ।। इति ।

श्री.– *वृषकर्मा = स्वभक्तश्रेष्ठकारी ।



## ११४. वृषाकृतिः

वि.– *वृषाय धर्माय आकृतिर्यस्य स वृषाकृतिः ।

*शुष्मिण इव हृपपुष्टा आकृतिर्यस्येति वा वृषाकृतिः ।

र.– *हिंकारशिरस्कः वध्यस्तोत्रं वृपः तेन आकृतिः आकारणम् आह्वानं यस्य इति वृपाकृतिः ।

स.– *वृपवत् पुष्टा आकृतिर्यस्य स वृपाकृतिः ।

श्री.– *वृपाकृतिः = हिङ्कारशिरस्कोक्थाह्वानः ।



रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतस्थाणुर्वरारोहो महातपाः ॥ १३ ॥

## ११५. रुद्रः

वि.– *प्रळयकाले प्रजा रोदयतीति रुद्रः ।

"अथ यद् रोदयति तस्माद् रुद्रः" इति श्रुतेः ।

*रुद्रं दुःखं राति ददातीति वा रुद्रः ।

*भक्तानां रुजं संसाररोगं द्रावयतीति वा रुद्रः ।

"रुजं द्रावयते यस्माद् रुद्रस्तस्माज्जनार्दनः" इति वचनात् ।

र.– *रुजं द्रावयते यस्मात् तस्मात् रुद्रः ।

स.– *रुजद्रावकत्वात् रुद्रः ।

'ब्रह्माण्डे च–

रुजं द्रावयते यस्मात् रुद्रस्तस्माज्जनार्दनः' इति भाष्योक्तेः ।

*रोदयति इति रुद्रः ।

*रुदं शब्दं भेर्यादीनां राति ददाति इति वा ।

*रुदा भक्तकृतस्तुतिशब्देन रमते इति वा ।

श्री.– *रुद्रः = रोगद्रावकः ।



## ११६. बहुशिराः

वि.– *बहूनि शिरांसि यस्येति बहुशिराः ।

''सहस्रशीर्षं देवम्'' इति श्रुतेः ।

र.– *भक्तानां धनानि व्यूढ्वा दातुं बहूनि शिरांसि यस्य इति बहुशिराः ।

स.– *बहूनि शिरांसि यस्यासौ बहुशिराः ।

*बहवः शिराः नाड्य आवासस्थानत्वेन यस्य सः बहुशिराः ।

श्री.– *बहुशिरा = अनेकशिरस्कः ।



## ११७. बभ्रुः

वि.– *लोकान् बिभर्तीति बभ्रुः ।

र.– *बभ्रुरिव स्थितत्वात् बभ्रुः ।

स.– *बिभर्ति जगदिति बभ्रुः ।

श्री.– *बभ्रुः = अहिभक्षणे नकुलसदृशः ।



## ११८. विश्वयोनिः

वि.– *विश्वस्य योनिः कारणमिति विश्वयोनिः ।

*विश्वं योनिः अग्नेररणिरिव कारणं यस्येति वा विश्वयोनिः ।

र.– *नृसदनं यज्ञवाटे प्रविशति इति विश्वः । भक्तानां रक्षणादीन् युनक्ति इति योनिः । विश्वश्चासौ योनिश्च विश्वयोनिः ।

स.– *विश्वं जगत् योनिः स्थानं यस्य इति वा ।

*विश्वस्य वायोः कारणं इति वा ।

''योनिः भार्या तथा स्थानं योनिः कारणमेव च'' इति गीतातात्पर्योक्तेः ।

श्री.– *विश्वयोनिः = यज्ञवाटप्रवेशकः भक्तरक्षणयोजकश्च ।



## ११९. शुचिश्रवाः

वि.– *शुचीनि श्रवांसि नामानि श्रवणीयानि यस्येति शुचिश्रवाः ।

र.– *शुचिः श्रुतिः तया प्रसिद्धं श्रवः यस्य सः शुचिश्रवाः ।

स.– *शुद्धकीर्तिः पवित्रकरविद्यो वा ।

''शुचीनि श्रवणीयानि शृणोमीह धनञ्जय ।
न च पापानि गृह्णामि ततोऽहं वै शुचिश्रवाः ॥''

-इति मोक्षधर्मोक्तेः ।

*श्रवणीयश्रवणकर्ता वा ।

श्री.– *शुचिश्रवाः = श्रुतिप्रसिद्धकीर्तिः ।



## १२०. अमृतः

**वि.– ★न विद्यते मृतं मरणमस्येति अमृतः ।**

"अतिरोहितविज्ञानाद् वायुरप्यमृतः स्मृतः ।
मुख्यामृतः स्वयं रामः परमात्मा सनातनः" ॥

इति रामसंहितायाम् ॥

**र.– ★न मृतः अमृतः ।**

**स.– ★अमृतं अनन्तासनं आधारत्वेन यस्य सः अमृतः ।**

'ब्रह्म पूर्णगुणत्वाच्च नित्यत्वात् अमृतं तथा' इति ऐतरेयभाष्योक्तेः ।

**★अमृतः नित्यः । (वा)**

**★अमम् अपरिमितं ऋतं शास्त्रं यस्मिन् सः अमृतः ।**

**श्री.–★अमृतः = मरणरहितः ।**



## १२१. शाश्वतस्थाणुः (शाश्वतः, स्थाणुः)

**वि.– ★शाश्वतश्चासौ स्थाणुश्चेति शाश्वतस्थाणुः ।**

**★शाश्वतेषु मुक्तेष्वपि नियामकतया तिष्ठतीति वा शाश्वतस्थाणुः ।**

**र.– ★शश्वदेकप्रकारेण नित्यः वर्तते इति शाश्वतः ।**

**★सर्वजनेषु सन्तिष्ठति इति स्थः । आ अनन्तः णः आनन्दः अस्य अस्ति इति आणुः । स्थश्चासौ आणुश्च इति स्थाणुः ।**

**स.– ★शाश्वतः नित्यः । यद्वा शशशब्दस्य अत्यन्तसुखवाचित्वेन शशमानः इति ऋग्व्याख्यानावसरे शशशब्दः**

सुखवाची । द्विर्वचनमतिशयार्थे । शशं अधिकं सुखं एषां अस्ति इति शश्वन्तः मुक्ताः । तेषां अयं स्वामी इति शाश्वतः । तिष्ठति अस्मिन् इति स्थाणुः । शाश्वतश्चासौ स्थाणुश्च इति शाश्वतस्थाणुः ।

श्री.– ★शाश्वतः = एकप्रकारवर्ती ।

★स्थाणुः = सर्वजनस्थः । अनन्तानन्दवाँश्च ।



## १२२. वरारोहः

वि.– ★वरः श्रेष्ठः आरोहोऽङ्कोऽस्येति वरारोहः ।

★आरूढानां पुनरावृत्त्यसम्भवात् वरमारोहणं यस्मिन्निति वा ।

★सर्वेषामुपर्यारोहतीति आरोहः । वरश्चासावारोहश्चेति वा ।

र.– ★वरत्वेन स्वामित्वेन सर्वान् आरोहति, ततश्च वरत्वेन सर्वारूढः वरारोहः ।

स.– ★वरः आरोहः वाहनं अङ्कं वा यस्य इति वरारोहः ।

★वराणि अराणि एषां ते वरारः, तेभ्योऽपि उत्कृष्टः वरारोहः ।

★परोवरीयान् इत्यत्र परोशब्दवत्, तान् हन्ति इति वरारोहः ।

श्री.– ★वरारोहः = श्रेष्ठत्वेन सर्वारूढः ।



### १२३. महातपाः

वि.– ★महत् परिपूर्णं तपः ज्ञानमैश्वर्यं प्रतापो वा यस्येति महातपाः ।

★लोकहितार्थं नारायणादिरूपेणानुष्ठितं महत् कृच्छ्रादिकं तपो यस्येति वा ।

र.– ★महत् तपः सामर्थ्यादिरूपं यस्य सः महातपाः ।

स.– ★महत् तपः ज्ञानं यस्य सः ।

'यस्य ज्ञानमयं तपः' इत्युक्तेः ।

★कपिलादिरूपेण तपस्वी वा ।

श्री.– ★महातपाः = महासामर्थ्यः ।



सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः ॥ १४ ॥

### १२४. सर्वगः

वि.– ★सर्वत्र गच्छति इति सर्वगः ।

र.– ★सर्वं जीवजातं धनादिदातृत्वेन गच्छति इति सर्वगः ।

स.– ★सर्वत्र गच्छति, जानाति इति वा सर्वगः ।

श्री.– ★सर्वगः = सर्वजीवगः ।



### १२५. सर्ववित्

वि.– ★सर्वं वेत्ति विन्दते विचारयति चेति सर्ववित् ।

र.– *सर्वं दातृत्वादिसादृश्यं वेदयति प्रापयति इति सर्ववित् ।

स.– *सर्वं वेत्ति, सर्वं विन्दति, सर्वत्र विद्यते इति वा, सर्वं वेदयति इति वा सर्ववित् ।

*विद ज्ञाने, विद्लृ लाभे, विदु सत्तायां, विद उत्पत्तौ इति धातुभ्यः, सर्वज्ञः सर्वलाभः सर्वगतः सर्वोत्पादकः ।

श्री.– *सर्ववित् = दातृत्वादिसादृश्यलाभः ।



## १२६. भानुः

वि.– *भातीति भानुः ।

र.– *भा प्रतिभा विषयाकाङ्क्षा तां स्वभक्तेभ्यः अपनयति इति भानुः ।

स.– *भाति इति भानुः ।

श्री.– *भानुः = स्वभक्तविषयेच्छापनेता ।



## १२७. विष्वक्सेनः

वि.– *विष्वक् प्रसृता सर्वत्र रक्षणार्थं भक्तानां सेना यस्येति विष्वक्सेनः ।

*यद्रणोद्योगमात्रेण विष्वक् सर्वतः पलायते दैत्यसेना स विष्वक्सेन इति वा ।

र.– *विष्वक् तत्र तत्र भूम्यन्तरिक्षस्वर्गवैकुण्ठादौ सरणं गमनं विष्वक्सम् । तस्येनः स्वामी । मुक्तानां भोगाय तत्तल्लोक-गमनस्य दाता इति (यावत्) विष्वक्सेनः ।

स.– *विषुशब्दो नानार्थे निपातितः । विषु नाना अञ्चति ऋत्विगिति क्विन् उगितश्चेति ङीप् । विषूची सेना यस्य सः विष्वक्सेनः ।

श्री.– *विष्वक्सेनः = मुक्तभोगाय तत्तल्लोकगमनदाता ।



## १२८. जनार्दनः

वि.– *जनान् दुर्जनानर्दयति हिनस्ति नरकान् वा गमयति । सज्जनैर्वा मोक्षाद्यर्थं याच्यते इति जनार्दनः ।

*न जायते इति जनः, अर्दयति संसारमिति अर्दनः, (जनश्चासौ अर्दनश्च जनार्दनः) ।

तथाहि बाभ्रव्यशाखायाम्–

''स भूतः स जनार्दन इति स ह्यासीत् स नाऽसीत् सोऽर्दयति'' इति ।

र.– *जनं जननं अर्दयति इति जनार्दनः ।

स.– *जनो जननं तं अर्दयति इति जनार्दनः । 'अर्द हिंसायाम्' ।

*जनाः समुद्रस्थाः दैत्यविशेपाः तेपां अर्दनः ।

*न जायते इति जनः, अर्दयति संसारमिति अर्दनः । जनश्चासौ अर्दनश्च जनार्दनः ।

*जनैः अर्द्यते याच्यते गम्यत इति वा ।

श्री.–*जनार्दनः = जन्मनाशकः ।



## १२९. वेदः

वि.– ★वेत्तृत्वात्, वेदयितृत्वाद्वा वेदः ।

★वेदप्रवक्तृत्वाद्वा ।

"वेदानां प्रथमो वक्ता हरिरेव यतो विभुः ।
अतो विष्ण्वात्मका वेदा इत्याहुर्वेदवादिनः" ।। इति शब्दनिर्णये ।

र.– ★विश्वानि स्वाधिष्ठानतया विन्दते इति वा स्तोत्ररूपां भक्तवाचं विन्दते शृणोति इति वा वेदः ।

स.– ★वेदयति इति वेदः ।

श्री.– ★वेदः = स्तोत्ररूपभक्तवाक्श्रोता ।



## १३०. वेदवित्

वि.– ★यथावद् वेदार्थं वेत्तीति वेदवित् ।

"मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् ।
इत्यस्या हृदयं साक्षान्नान्यो मद् वेद कश्चन" ।। इति भागवते ।

र.– ★वेदस्य लम्भनीयस्य आयुषः प्रापकः वेदवित् ।

स.– ★वेदं वेत्ति इति वेदवित् ।

श्री.– ★वेदवित् = लम्बनीयायुःप्रापकः ।



## १३१. अव्यङ्गः

वि.– ★सर्वगुणैरविकलत्वादव्यङ्गः ।

★व्यङ्गो व्यक्तिरस्य नास्तीति वा ।

र.– ★अङ्गं देवतापरिवारः । न विद्यते अङ्गं यस्य सः व्यङ्गः स न भवति इति अव्यङ्गः । अल्पाक्षरेण शक्येऽपीति न्यायेन सर्वदा बहुपरिवारयुक्तः अव्यङ्गः ।

स.– ★अविः सूर्यः अङ्गे चक्षुसि यस्यासौ अव्यङ्गः ।

★विकलाङ्गो न भवति इति वा ।

★अविरङ्गं यज्ञाङ्गं यस्मात् इति वा ।

★नञः विरुद्धार्थकत्वेन विः गरुत्मान् तद्विरुद्धः अविः शेपः, तस्मिन् अङ्गं यस्य इति वा ।

श्री.– ★अव्यङ्गः = सर्वदा बहुपरिवारयुक्तः ।



## १३२. वेदाङ्गः

वि.– ★वेदाः अङ्गभूता यस्य स वेदाङ्गः । "तस्य यजुरेव शिरः" इत्यादिश्रुतेः,

वेदानङ्गयतीति वा ।

र.– ★विदन्ति इति वेदाः ज्ञानिनः देवाः त एव अङ्गानि सहचराणि यस्य इति वा, वेदो ज्ञानं तत् प्रापयति इति वा वेदाङ्गः ।

स.– ★वेदाः वेदाभिमानिदेवाः, वेदाः तन्नाम्नी रमा वा, अङ्गे यस्य इति वा ।

★'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इत्यादेः वेदस्य अङ्गं भारतादिकं यस्मात् इति वा ।

श्री.– ★वेदाङ्गः = ज्ञानप्रापकः ।



## १३३. वेदवित्

वि.– ★वेदान् विचारयतीति वेदवित् ।

र.– ★वेदान् वेदरूपान् स्तोत्रविशेषान् विन्दते इति वेदवित् ।

स.– ★वेदं विन्दयति प्रापयति मत्स्यादिरूपेण ब्रह्मादीन् प्रति इति वेदवित् ।

श्री.– ★वेदवित् = स्तोत्रलब्धा ।



## १३६. कविः

वि.– ★कविः सर्वज्ञः ।

"कविर्मनीषी" इति श्रुतिः ।

"त्वं कविः सर्ववेदनात्" इति च ब्राह्मे ।

र.– ★स्वभक्तं कं सुखात्मकं विदधाति इति कविः ।

स.– ★कु शब्देऽच इरिति इः । स्तुत्यः ।

श्री.– ★कविः = भक्तसुखस्वरूपकर्ता ।



लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ १९ ॥

## १३५. लोकाध्यक्षः

वि.– ★अध्यक्षोऽधिपतिः । "अध्यक्षोऽधिपतिः प्रोक्तो यदक्षाण्यस्य चोपरि" इति शब्दनिर्णये । लोकानामध्यक्षो लोकाध्यक्षः ।

र.– ★लोकानां अध्यक्षः लोकाध्यक्षः ।

स.– ★प्रकाशरूपत्वात् लोकः, अध्यक्षः अधिपतिः । स चासौ अध्यक्षश्च इति लोकाध्यक्षः ।

★लोकानां अधि लोकाधि, न विद्यते क्षं क्षयः यस्य सः अक्षः लोकाधिश्चासौ अक्षश्चेति ।

★लोकानां अध्यक्षः इति वा ।

श्री.– ★लोकाध्यक्षः = लोकाधिकृतः ।



## १३६. सुराध्यक्षः

वि.– ★सुराणामध्यक्षः सुराध्यक्षः ।

र.– ★सुष्ठु रमणयोग्याः सुराः, तेषां अधि अधिकं आनन्दादिगुणजातं व्यञ्जयति इति, अध्यक्षः सुराणां अध्यक्षः सुराध्यक्षः ।

स.– ★सुष्ठु राध्यः आराध्यः साध्यो वा । क्षयं यत्र इति क्षः ।

क्षि निवासगत्योरित्यतो डः । सुराध्यश्चासौ क्षश्च सुराध्यक्षः ।

★सुराधिकत्वात् सुराधिः देवेन्द्रः, तस्य अक्षीणि यद्विषये स इति वा ।

श्री.– ★सुराध्यक्षः = सुराधिकगुणव्यञ्जकः ।



## १३७. धर्माध्यक्षः

वि.– ★धर्मस्याध्यक्षो धर्माध्यक्षः ।

र.– *धारकत्वात् धर्माः ऊतयः तान् अधिकान् व्यनक्ति इति वा, तेषां अध्यक्षः स्वामी इति वा धर्माध्यक्षः ।

स.– *धारकत्वात् धर्मः । अधि अधिकानि अक्षाणि इन्द्रियाणि यस्य सः अध्यक्षः । धर्मश्चासौ अध्यक्षश्च धर्माध्यक्षः ।

*धर्मस्य अध्यक्ष इति वा ।

श्री.–*धर्माध्यक्षः = रक्षासाधनादि(भि)व्यञ्जकः ।



## १३८. कृताकृतः (कृताकृतिः)

वि.– *कृतमप्यकृतं येन स कृताकृतः ।

"अप्रयत्नात् स्वतन्त्रत्वात् फलानां च विवर्जनात् ।
क्रियायाश्च स्वरूपत्वादकर्तेति च तं विदुः ॥
कर्तृत्वं भ्रान्तिजं प्राहुरतत्त्वविदो जनाः ।
ऐश्वर्यजं तु कर्तृत्वं सम्यक् तत्तत्ववेदिकः" ॥ इति पाद्मे ।

*कृतेन कर्मणा अकृत इति वा । "नास्त्यकृतः कृतेन" इति श्रुतेः ।

र.– कृताः गुर्वादिना सम्यक् शिक्षिताः तेपाम् आशंसनीयानाम् अनन्तानाम् अभीष्टानाम् आ समन्तात् कृतिः उत्पादनं यस्मात् सः कृताकृतिः । यद्वा कृतेपु शिक्षितेषु आकृतिः स्वामित्वेन आकारः यस्य इति कृताकृतिः ।

स.– *कृतेन कर्मणा अकृतः कृताकृतः ।

*कृतोऽकृतः मोक्षः येन इति वा ।

श्री.–*कृताकृतिः = गुरुशिक्षिताभीष्टोत्पादकः ।

## १३९. चतुरात्मा

वि.– ★चत्वार आत्मानः आत्मान्तरात्मापरमात्मज्ञानात्मलक्षणा यस्येति चतुरात्मा ।

★यद्वा चत्वार आत्मानो देहाः स्वरूपाणि यस्येति चतुरात्मा ।

"परमात्मा चतूरूपः सर्वप्राणिशरीरगः ।
विश्वश्च तैजसः प्राज्ञस्तुरीयश्चेति कथ्यते ॥" इति मार्कण्डेये ।

र.– ★शूर, तविषीव, उग्र, हरिव आख्याः चत्वारः आत्मानः रूपाणि यस्य इति वा, चतुरान् स्वभक्तान् वहुदिनेषु आतनोति विस्तारयति इति वा चतुरात्मा ।

स.– ★'अत सातत्यगमने' इति धातोः मनिन् प्रत्यये अतति इति आत्मा, चतुरश्चासौ आत्मा च इति वा ।

★चतुरः कुशलः आत्मा चतुर्मुखः यस्माद् इति वा ।

श्री.– ★चतुरात्मा = स्वभक्तदीर्घायुर्दाता ।



## १४०. चतुर्व्यूहः

वि.– ★चत्वारो व्यूहा वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाद्याख्याः यस्य स चतुर्व्यूहः ।

र.– ★चतुरः उक्तरूपान् पुरुषार्थान् व्यूहति प्रापयति इति चतुर्व्यूहः ।

स.– ★चत्वारः व्यूहाः वासुदेवाद्या आत्माद्या वा यस्यासौ ।

श्री.– *चतुर्व्यूहः = चतुःपुरुषार्थप्रापकः ।



## १४१. चतुर्दंष्ट्रः

वि.– *चतस्रो दंष्ट्रा मूर्तिभेदा दन्तभेदा वा यस्य स चतुर्दंष्ट्रः ।

र.– *चत्वारि दंष्ट्राणीव दंष्ट्राणि सङ्कल्पचतुष्टयानि ज्ञानानि वा यस्य सः चतुर्दंष्ट्रः ।

स.– *चतस्रः दंष्ट्राः यस्य सः चतुर्दंष्ट्रः ।

श्री.– *चतुर्दंष्ट्रः = सङ्कल्पचतुष्टयज्ञानवान् ।



## १४२. चतुर्भुजः

वि.– *चत्वारो भुजा यस्य स चतुर्भुजः ।

र.– *आप्लवनादिसंस्कारचतुष्टययुक्तं सोमं भुङ्क्ते इति चतुर्भुजः ।

स.– *चत्वारो भुजा यस्य सः ।

*भुङ्क्ते भुनक्ति इति वा भुजः, चतुर्णां धर्मार्थकाममोक्षाणां भुजः चतुर्भुजः ।

*चतुर्भ्यः वेदेभ्यः भवति इति चतुर्भु ज्ञानं तेन जायते अभिव्यज्यते वा ।

श्री.– *चतुर्भुजः = चतुःसंस्कारवत्सोमभोक्ता ।



भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥ १६ ॥

## १४३. भ्राजिष्णुः

वि.– ★प्रकाशमानत्वाद् भ्राजिष्णुः ।

र.– ★हर्षेण भ्राजयति प्रकाशयति इति भ्राजिष्णुः ।

स.– ★भ्राजिष्णुः दीप्तिमान् ।

श्री.– ★भ्राजिष्णुः = प्रकाशमानः ।



## १४४. भोजनम्

वि.– ★आनन्दरूपत्वाद् भुज्यते स्वेनैव स्वयमिति भोजनम् ।
★अन्यैरुपजीव्यत इति वा ।
"एतस्यैवाऽनन्दस्यान्यानि मात्रामुपजीवन्ति" इति श्रुतेः ।
★भुज्यतेऽनेनेति वा भोजनम् ।

र.– ★सोमरसादिभोजनं प्रति ऋत्विजः यं आह्वयन्निति भोजनम् ।

स.– ★भुज्यते सर्वैः उपजीव्यत इति भोजनम् ।

श्री.– ★भोजनं = सोमादिपानाह्वानविषयः ।



## १४५. भोक्ता

वि.– ★भुङ्क्ते इति भोक्ता ।

"अक्लिष्टत्वात् स्वतन्त्रत्वादशुभस्य च वर्जनात् ।
अभोक्ता शुभभोक्तृत्वाद् भोक्तारं चेति तं विदुः" ॥

इति स्कान्दे ।

र.– *शत्रुनगरीस्थजनानां भोक्ता भक्षकः निष्कासयिता इति भोक्ता ।

स.– *सर्वसारभोक्तृत्वात् भोक्ता ।

श्री.– *भोक्ता = शत्रुजनभक्षकः ।



## १४६. सहिष्णुः

वि.– *सहनशीलत्वात् अनभिभाव्यत्वाच्च सहिष्णुः ।

र.– *शत्रुवेगान् सहते इति सहिष्णुः

स.– *भक्तापराधसहनशीलः ।

श्री.– *सहिष्णुः = शत्रुवेगसहः ।



## १४७. जगदादिजः

वि.– *जगदादौ जायते प्रादुर्भवतीति जगदादिजः ।

*जगत् आदिजं यस्मात् स जगदादिज इति वा ।

*आदौ विष्णोरेव जगज्जायते पश्चाद् ब्रह्मादिद्वारेणेति विशेषः ।

"निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः ।
हिरण्यगर्भः शर्वश्च कालाख्यारूपिणस्तव" ।। इति भागवते ।

र.– *जगतां कृष्टीनां प्रजानां आदौ जातत्वात् अभिव्यक्तत्वात् जगदादिजः ।

स.– ★जगत आदिः कारणं जगदादिः चतुर्मुखः, स जायते यस्मात् ।

★गदस्य आदिजः गदादिजः, जश्चासौ गदादिजश्चेति वा ।

श्री.– ★जगदादिजः = पूजाग्राभिव्यक्तः ।



## १४८. अनघः

वि.– ★न विद्यते अघं दुःखं पापं वा यस्य इति अनघः ।

"निरनिष्टो निरवद्यः" इत्यादिश्रुतेः ।

र.– ★अघं दोषः, न विद्यते अघं यस्य सः अनघः ।

स.– ★न विद्यते अघं पापं तदुपलक्षितयावद्दोषः यस्य सोऽनघः ।

श्री.– ★अनघः = निर्दोषः ।



## १४९. विजयः

वि.– ★स्वमहिम्ना जगद् विजयत इति वा ।

★विशिष्टो जयो यस्येति वा विजयः ।

र.– ★विशेषेण शत्रुजयः यस्मात् इति विजयः ।

स.– ★विशेषेण जयः यस्य स विजयः ।

★विः पक्षी गरुडः वेः जयः यस्मात् इति वा ।

श्री.– ★विजयः = विशेषाच्छत्रुजेता ।



## १५०. जेता

वि.– *सर्वं जेतुं शीलमस्येति जेता ।

र.– *रिपूणां जेता इति जेता ।

स.– *जयशीलत्वात् जेता ।

श्री.– *जेता = रिपुजेता ।



## १५१. विश्वयोनिः

वि.– *विश्वं प्रकृतिः पूर्णत्वात्, सा योनिर्भार्या यस्येति विश्वयोनिः ।

"विष्णोर्योनिर्गर्भसन्धारणार्था महामाया सर्वदुःखैर्विहीना ।
तथाऽप्यात्मानं दुःखिवन्मोहनार्थं प्रदर्शयन्ती सह विष्णुना सा" ॥
इति सामवेदे शार्कराक्ष्यश्रुतौ ।

*विश्वस्य योनिः स्थानम्, विश्वं स्थानमस्येति वा विश्वयोनिः ।

"योनिर्भार्या तथा स्थानं योनिः कारणमेव च" इति शब्दनिर्णये ॥

र.– *विश्वस्य योनिः निदानस्थानं इति विश्वयोनिः ।

स.– *विना गरुडेन शवति गच्छति इति विशुः, न विद्यते योनिः कारणं यस्य इति अयोनिः, विशुश्चासौ अयोनिश्च इति विश्वयोनिः ।

श्री.– *विश्वयोनिः = सर्वाश्रयः ।



## १५२. पुनर्वसुः

वि.– ★सर्वत्र स्थितोऽपि कार्यार्थं देवादिषु पुनर्वसति विशेषेण सन्निधत्त इति पुनर्वसुः ।

''तेष्वेव लक्ष्मणाद्येषु त्रिष्वेवं च बलादिषु ।
नरार्जुनादिषु तथा पुनरावेश उच्यते'' ।। इति महावाराहे ।

★अजानतां कुयोगिनां रूपं प्रकाश्य पुनराच्छादयतीति वा पुनर्वसुः ।

र.– ★पुनःपुनः वसून् ददाति इति पुनर्वसुः ।

स.– ★पुनः पुनः वसु द्रव्यं यस्मात् स पुनर्वसुः ।

श्री.–★पुनर्वसुः = पुनः पुनः धनदाता ।



उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।
अतीन्द्रः सङ्ग्रहः सर्गो धृतात्मा नियमो यमः ।। १७ ।।

## १५३. उपेन्द्रः

वि.– ★उपसर्जनभूत इन्द्रोऽस्येत्युपेन्द्रः ।

★इन्द्रस्योपरि स्थित इति वा ।

''ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः ।
उपेन्द्र इति कृष्ण त्वां मंस्यन्ति भुवि देवताः'' ।। इति हरिवंशे ।

★अनुग्रहार्थमनुजत्वेनेन्द्रमुपगत इति वा ।

र.– ★उप परिवारदेवैः सहितः इन्द्रः उपेन्द्रः ।

स.– ★उपगत इन्द्रः अनुजत्वेन उपेन्द्रः ।

श्री.– ★उपेन्द्रः = परिवारदेवसहित-ऐश्वर्यवान् ।



## १५४. वामनः

वि.– ★वामं सौन्दर्यं वक्रत्वं च नयतीति वामनः ।

★बलिबन्धनार्थं सूक्ष्मरूपधारणाद्वा वामनः ।

"उपेन्द्ररूपी भगवान् प्रतिमन्वन्तरं विभुः ।
असुरान् हन्ति नियते श्राद्धदेवे च वामनः" । इति वामने ॥

र.– ★वामं अभीष्टजातं नयति इति वामनः ।

स.– ★वामानि सुन्दरवस्तूनि नयति इति वामनः ।

★वामं शत्रुं तमो नयति इति वा ।

श्री.– ★वामनः = अभीष्टनेता ।



## १५५. प्रांशुः

वि.– ★स एव जगत्त्रयं क्रममाणः प्रांशुरभवदिति प्रांशुः, विशालवपुः ।

"तोये तु पतिते हस्ते वामनोऽभूदवामनः ।
सर्वदेवमयं रूपं दर्शयामास वै प्रभुः" ॥ इत्यादि हरिवंशे ॥

र.– ★जगद्व्याप्तत्वात् व्याप्तमहिमत्वात् वा प्रांशुः उन्नतः ।

स.– ★त्रिविक्रमरूपेण उन्नतत्वात् प्रांशुः ।

*प्रकृष्टाः अंशवः यस्य इति वा ।

श्री.– *प्रांशुः = जगद्व्याप्तः ।



## १५६. अमोघः

वि.– *अमोघं सङ्कल्पितमस्येत्यमोघः ।

*"अमोघः सत्यसङ्कल्पः" सति श्रुतेः ।

र.– *मोघं कर्म यस्य न अस्ति इति अमोघः ।

स.– *न विद्यते मोघः सङ्कल्पः वाक्यं वा यस्य स अमोघः ।

श्री.– *अमोघः = अनिष्फलकर्मा ।



## १५७. शुचिः

वि.– *पावनत्वात् प्रकाशत्वाद्वा शुचिः ।

र.– *शं सुखं अश्नति प्राप्नोति इति शुचिः । यद्वा अशुचीन् पापिजनान् शुचीन् करोति इति शुचिः ।

स.– *शुचिः शुद्धः ।

श्री.– *शुचिः = सुखापः ।



## १५८. ऊर्जितः

वि.– *बलातिशयशालित्वादूर्जितः ।

*सारान्नसम्पन्नत्वाद्वा ऊर्जितः ।

"ऊर्ज सारान्नम्" इत्युक्तेः ।

र.– *उरून् परोपद्रवसमर्थान् शत्रून् जितवान् इति ऊर्जितः ।

स.– *ऊर्जं सारं अन्नं येपां अस्ति इति ऊर्जाः अन्नदातारः तान् तनोति इति ऊर्जितः ।

श्री.–*ऊर्जितः = परोपद्रवसमर्थशत्रुजेता ।



## १५९. अतीन्द्रः

वि.– *इन्द्रानतिसमर्थान् ब्रह्मादीनतीत्य वर्तत इत्यतीन्द्रः ।

र.– *अति अतिशयितं इदं रयिसिद्ध्यादिकं ददाति इति अतीन्द्रः ।

स.– *इन्द्रं अतिक्रान्त अतीन्द्रः ।

श्री.–*अतीन्द्रः = अधिकधनसिद्ध्यादिदाता ।



## १६०. सङ्ग्रहः

वि.– *सर्वं सङ्गृह्णातीति सङ्ग्रहः ।

"सर्वस्य ग्रहणाद् विष्णुः सर्वसङ्ग्रह उच्यते" इत्यादिवचनात् ।

*भक्तान् सम्यग् गृह्णातीति वा सङ्ग्रहः ।

*संशयविपर्ययाभावेन सम्यगर्थान् गृह्णातीति वा सङ्ग्रहः ।

र.– *सोमरसं स्तोत्रं वा सङ्गृह्णाति इति सङ्ग्रहः ।

स.– *सङ्गृह्णाति भक्तान् इति सङ्ग्रहः ।

★सं समीचीनाः ग्रहाः पात्रविशेषाः यस्मै इति वा ।

★समीचीनाः ग्रहाः सूर्यादिग्रहाः यस्मिन् शिंशुमाररूपे स इति वा ।

श्री.– ★सङ्ग्रहः = स्तोत्रग्राही ।



## १६१. सर्गः

वि.– ★सर्जकत्वात् सर्गः ।

र.– ★सरति ऊर्ध्वं अधश्च गच्छति इति मनुष्यः अर्वाचीनः भूस्थः जनः सरः इत्युच्यते । तं गच्छति इति सर्गः ।

स.– ★सृजति इति सर्गः ।

श्री.– ★सर्गः = भूस्थजनगन्ता ।



## १६२. धृतात्मा (अधृतात्मा)

वि.– ★धृता आत्मानो ब्रह्मादिजीवा येन स धृतात्मा ।

★केनाप्यधृत आत्मा यस्येति अधृतात्मा वा ।

र.– ★भक्तकृतयज्ञेषु धृतः आत्मा मनः यस्य सः धृतात्मा ।

स.– ★धृतात्मा धीरमनाः ।

★धृता आत्मानः जीवाः येन इति वा ।

★धृत आत्मा मनः ऋषिभिः यस्मिन् इति वा ।

श्री.– ★धृतात्मा = भक्तयज्ञमनोधर्ता ।

## १६३. नियमः

वि.– *स्वकार्ये लोकान् नियमयतीति नियमः ।

र.– *स्वविषयकज्ञानानि भक्तेभ्यो नियमयति प्रयच्छति इति नियमः ।

स.– *नियमयति इति नियमः ।

श्री.– *नियमः = स्वविपयज्ञाननियामकः ।



## १६४. यमः (अयमः)

वि.– *अतिक्रमे संयमनाद् यमः ।

र.– *यान्ति जानन्ति इति याः ऋषयः तेषां स्तोत्राणि माति जानाति शृणोति इति यमः ।

स.– *'यमः नियमनात् हरिः' इत्युक्तेः नियन्ता ।

*न विद्यते यमः नियामकः सदृशो वा यस्य ।

*अयं शुभावहविधिं माति जानाति इति वा अयम इति वा छेदः ।

श्री.– *यमः = ऋपिस्तोत्रश्रुत् ।



वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ १८ ॥

## १६५. वेद्यः

वि.– ★निःश्रेयसार्थिभिर्विज्ञेयत्वाद् वेद्यः ।

"आत्मा वा अरे द्रष्टव्यः" इति श्रुतेः ।

र.– ★स्तुतिरूपं वेदं याति गच्छति इति वेद्यः ।

स.– ★वेद्यः ज्ञेयः ।

श्री.– ★वेद्यः = स्तुतिरूपवेदगन्ता ।



## १६६. वैद्यः

वि.– ★सर्वविद्यानां वेदनाद् वैद्यः ।

★भवरोगभेषजकारणत्वाद्वा ।

र.– ★वैद्य इव वैद्यः ।

स.– ★भवरोगपरिहारकत्वात् वैद्यः ।

★प्रतिपाद्यतया सकलविद्यासम्बन्धित्वात् वैद्यः ।

श्री.– ★वैद्यः= वैद्यसदृशो, रोगपरिहारकः ।



## १६७. सदायोगी

वि.– ★योगः शक्त्यादि । "युज्यतेऽनेन योगोऽसावुपायः शक्तिरेव च" इति वचनात् । सदा योगोऽस्यास्तीति सदायोगी ।

र.– *सदा पृतन्युभिः योद्धृभिः योगवान् संयोगवान् इति सदायोगी ।

स.– *सदायोगी कपिलादिरूपेण ।

श्री.– *सदायोगी = युद्धाय शत्रुसंयोगवान् ।



## १६८. वीरहा

वि.– *वीरान् हिरण्यादीन् हन्तीति वीरहा ।

*सतां विविधाः संसारगतीः मुक्तिदानेन हन्तीति वा वीरहा ।

र.– *वीरान् हन्ति इति वीरहा ।

स.– *विगतः ईरः वायुः एभ्यः ते वीराः वायुद्वेषिणः वीरान् हन्ति इति वीरहा ।

*विः गरुडः, ईरः वायुः, ताभ्यां हन्ति गच्छति इति वा ।

'हन हिंसागत्योः' ।

श्री.– *वीरहा = शूरहन्ता ।



## १६९. माधवः

वि.– *मधुविद्याविषयत्वात् माधवः ।

*ज्ञानरूपः स्वामी चेति वा ।

र.– *मधूनां धनानां समूहः माधवं तत् अस्य अस्ति इति माधवः ।

स.– ★मा धूयते इति माधवः ।

'धूञ् कम्पने' इत्यतः अच् ।

श्री.–★माधवः = धनादिप्रवर्तकः ।



## १७०. मधुः

वि.– ★सुखसाररूपत्वात् मधुः ।

र.– ★मधु सुखं अस्य अस्ति इति मधुः ।

स.– ★सुखरूपत्वात् मधुः ।

श्री.–★मधुः = सुखी ।



## १७१. अतीन्द्रियः

वि.– ★इन्द्रियाविषयत्वादतीन्द्रियः ।

''नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा'' इति श्रुतेः ।

र.– ★इन्द्रियं मरणादिदोपयुक्तं प्राकृतं शरीरादिकं अतिक्रम्य वर्तते इति अतीन्द्रियः ।

स.– ★अतिक्रान्तः इन्द्रियाणि इति अतीन्द्रियः । वहुलेन्द्रियो वा ।

श्री.–★अतीन्द्रियः = शरीराद्यतिवर्ती ।



## १७२. महामायः

वि.– ★माया इच्छा ।

''महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते'' ।। इति स्कान्दवचनात् ।

**महती माया यस्य स महामायः ।**

**र.– ★महत् मायं वज्रं यस्य सः महामायः ।**

**स.– ★महती च सा मा च महामा रमा, तस्याः अयः यस्मात् सः महामायः ।**

**★अम गत्यामित्यतोऽमन्ति जानन्ति इति अमाः ज्ञानिनः, महान्तश्च ते अमाश्च, महामाः, तेषां अय आयः यस्मात् इति वा**

**★न विद्यते माया कपटं यस्य इति अमायः, महांश्चासौ अमायश्च इति वा ।**

**★महती माया इच्छा यस्य इति वा ।**

''महामायेत्यविद्येति'' इत्युक्तेः ।

**श्री.– ★महामायः = बृहद्वज्रः ।**



## **१७३. महोत्साहः**

**वि.– ★महान् जगत्सृष्ट्यादिविषय उत्साह उद्योगो यस्येति महोत्साहः ।**

र.– ★महान् उत्साहः यस्य इति महोत्साहः ।

स.– ★महान् उत्साहः जगत्सृष्ट्यादिव्यापारेषु उद्योगः यस्य सः ।

★महेषु यज्ञाद्युत्सवेषु उत्साहः यस्य इति वा ।

श्री.– *महोत्साहः = महोत्साहवान् ।



### १७४. महाबलः

वि.– *महद् बलं सत्त्वमस्येति महाबलः ।

र.– *महत् बलं यस्य इति महाबलः ।

स.– *महद् बलं यस्य सः ।

*महती अबला रमारूपा यस्य इति वा ।

बलनामकासुरविरुद्धत्वात् अबलः इन्द्रः महान् यस्मात् इति वा ।

श्री.– *महाबलः = महाबलवान् ।



महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥ १९ ॥

### १७५. महाबुद्धिः

वि.– *महती बुद्धिरस्येति महाबुद्धिः ।

'कार्याकार्यविनिश्चयो बुद्धिः' ।

र.– *महती बुद्धिः यस्य इति महाबुद्धिः ।

स.– *महती बुद्धिः यस्य सः महाबुद्धिः ।

श्री.– *महाबुद्धिः = महाबुद्धिमान् ।



## १७६. महावीर्यः

वि.– *महद् वीर्यं आरब्धान्तगमनं प्रभावस्तेजः सामर्थ्यं वाऽस्येति महावीर्यः ।

र.– *महत् वीर्यं सामर्थ्यं यस्य इति महावीर्यः ।

स.– *महद् वीर्यं यस्य सः महावीर्यः ।

श्री.– *महावीर्यः = महासामर्थ्यः ।



## १७७. महाशक्तिः

वि.– *शक्तिः स्वरूपभूता बाह्या च ।

"शक्यत्वाच्छक्तयो विष्णोर्महदाद्या रमा तथा ।
स्वरूपशक्तिः शक्तित्वान्मुख्यशक्तिर्हि सा यतः" ॥

इति ब्रह्मतर्के ।

*"पराऽस्य शक्तिः" इति श्रुतेः, महती सा यस्येति महाशक्तिः ॥

र.– *शत्रुहनन-तदीयद्रव्यापहरण-भक्ताभीष्टदानादिविषयिणी महती शक्तिः अस्य अस्ति इति महाशक्तिः ।

स.– *महती शक्तिः यस्य सः महाशक्तिः ।

*अननुग्रहानुग्रहाभ्यां महत्यः शक्तयः यस्मात् ।

श्री.– *महाशक्तिः = महासामर्थ्यवान् ।



## १७८. महाद्युतिः

वि.– ★महती द्युतिः प्रकाशोऽस्येति महाद्युतिः ।

र.– ★महती द्युतिः यस्य इति महाद्युतिः ।

स.– ★महती द्युतिः सूर्यप्रकाशः यस्मात् इति वा यस्य इति वा ।

''तमेव भान्तम् अनुभाति सर्वम्'' इति श्रुतेः ।

''रूपनी पाचिका चैव शोषणी च प्रकाशिनी ।
नैव राजन् रवेः शक्तिः शक्तिर्नारायणस्य च ॥''

-इति नृसिंहपुराणोक्तेः ।

श्री.– ★महाद्युतिः = महाप्रकाशः ।



## १७९. अनिर्देश्यवपुः

वि.– ★इदं तदिति निर्देष्टुमशक्यं वपुरस्येति अनिर्देश्यवपुः ।

''तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्'' इति श्रुतेः ।

र.– ★ब्रह्मणापि साकल्येन निर्देष्टुं ज्ञातुं च अशक्यं अनिर्देश्यं वपुः यस्य इति अनिर्देश्यवपुः ।

स.– ★निर्देष्टुम् अशक्यं वपुः शरीरं यस्य सः अनिर्देश्यवपुः ।

''अनामा सः अप्रसिद्धत्वात्'' इत्युक्तेः ।

★निर्देशी न भवति इति अनिर्देशी ।

''अरूपः भूतवर्जनात्'' इत्युक्तेः, अवपुः, अनिर्देशी च असौ अवपुश्च इति वा ।

★उपमानत्वेन निर्देशशून्यः अवपुः कामः यस्य इति वा । कामापेक्षया अत्यन्तसुन्दरः । "साक्षान्मन्मथमन्मथः" इत्युक्तेः ।

श्री.–★अनिर्देश्यवपुः = अञ्जसा अज्ञेयस्वरूपः ।



## १८०. श्रीमान्

वि.–★समग्रा श्रीरैश्वर्यमस्यास्तीति श्रीमान् ।

र.– ★स्वराज्यशब्दिता श्रीः कान्तिः अस्य अस्ति इति श्रीमान् ।

स.– ★श्रीः अस्य अस्ति इति श्रीमान् ।

श्री.–★श्रीमान् = कान्तिमान् ।



## १८१. अमेयात्मा

वि.–★अमेया आत्मानः प्रयत्नधृतिवुद्ध्यादयो यस्येति सोऽमेयात्मा ।

र.– ★अमेयः अपरिच्छेद्यः आत्मा स्वरूपं यस्य इति अमेयात्मा ।

स. ★साकल्येन ज्ञातुम् अशक्यः आत्मा स्वरूपं यस्य सः अमेयात्मा ।

★श्रिया मानैः मेय आत्मा यस्य सः श्रीमानमेयात्मा इत्यपि पठन्ति ।

श्री.–★अमेयात्मा = अपरिच्छेद्यस्वरूपः ।



## १८२. महाद्रिधृक्

वि.– ★महान्तमद्रिं मन्दरं गोवर्धनं वा धृतवानिति महाद्रिधृक् ।

र.– ★महाद्रिमत्यादरणीयं मुख्यप्राणं धत्ते इति महाद्रिधृक् ।

स.– ★महांश्चासौ अद्रिश्च मन्दरो गोवर्धनो वा, "अद्रिः आदरणीयत्वात् प्राणः" इत्युक्तेः प्राणो वा । 'तान् धरति इति महाद्रिधृक् ।

श्री.– ★महाद्रिधृक् = अत्यादरणीयमुख्यप्राणधारकः ।



महेष्वासो महीभर्ता श्रीनिवासः सताङ्गतिः ।
अनिरुद्धः सदा(सुरा)नन्दो गोविन्दो गोविदाम्पतिः ॥ २०॥

## १८३. महेष्वासः

वि.– ★महानिष्वास इषुविक्षेपणं यस्य स महेष्वासः ।

र.– ★महान् इष्वासः धनुः यस्य इति महेष्वासः ।

स.– ★महान् इष्वासः इषुधिः यस्यासौ महेष्वासः ।

★'इषु इच्छायाम्' इत्यतो महानिषुः इच्छा वाणो वा यस्यासौ महेषुः, आ समन्तात् स एव इत्यासः सर्वगतः । महेषुश्चासौ आसश्चेति वा ।

श्री.– ★महेष्वासः = बृहद्धनुः ।



## १८४. महीभर्ता

वि.– ★एकार्णवप्लुतां महीं बभारेति महीभर्ता ।

र.– *मह्याः गवाश्वादेः भर्ता स्वामी महीभर्ता ।

स.– *महीभर्ता– महः उत्सवः अस्य अस्ति इति मही, याः लक्ष्म्याः एः कामस्य वा भर्ता ईभर्ता वा, मही चासौ स चेति महीभर्ता ।

*मह्याः भर्ता वा ।

श्री.– *महीभर्ता = गवाश्वादेः स्वामी ।



## १८५. श्रीनिवासः

वि.– *नित्यं श्रीरस्य वक्षसि वसतीति श्रीनिवासः ।

"श्रियो निवासो यस्योरः" इति भागवते ॥

र.– *श्रयते इति श्रीः धनादीनि अभीष्टजातानि स्वस्मिन् वासयति इति श्रीनिवासः ।

स.– *श्रीः निवसति अस्मिन् इति श्रीनिवासः ।

*श्रियं नयति इति श्रीनिः, वामनिः भामनिः इतिवत् । वस्ते आच्छादयति सर्वं वासयति च वसति सर्वत्रेति वा वासः, श्रीनिश्चासौ वासश्चेति श्रीनिवासः ।

श्री.– *श्रीनिवासः = सर्वाभीष्टाश्रयः ।



## १८६. सताङ्गतिः

वि.– *"तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।

अजातशत्रवः शान्ताः साधवः साधुभूषणाः ।
मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम्'' ॥

इत्यादिलक्षणानां सतां पुरुपार्थहेतुत्वाद् गतिः सताङ्गतिः ॥

र.– *सतां उत्तमानां गुणानां तेजआदीनां गतिः स्थानं गच्छन्ति अत्र इति सताङ्गतिः ।

स.– *ता आनन्देन सहिताः सन्तः आविर्भूतस्वरूपा मुक्ताः तेषां गतिः ।

अथवा 'षद्लृ विशरणगत्यवसादनेषु' इति धातोः विशीर्णानाम् अवसन्नानाम् आर्तानां गतिमतां ज्ञानिनां वा गतिः ।

श्री.– *सताङ्गतिः = गुणानामाश्रयः ।



## १८७. अनिरुद्धः

वि.– *न केनापि निरुद्ध इत्यनिरुद्धः ।

*अनिभिः प्रयत्नवद्भिः, मुख्यप्राणदासैर्वा हृदि रुद्ध इति वाऽनिरुद्धः ।

र.– *नितरां रुद्धः निरुद्धः निरोधकः । न विद्यते युद्धे निरोधकः यस्य सः अनिरुद्धः ।

स.– *केनापि रुद्धो न भवति इति अनिरुद्धः ।

*ज्ञानिनः प्रति निरोधरहितत्वात् अनिरुद्धः ।

*अनः मुख्यप्राणः येषां अस्ति इति अनिनः, तैः हृदि निरुध्यते इति अनिरुद्धः ।

★न विद्यते निरुत् वेदादिरूपः शब्दः येषां तेऽनिरुतः वेदविरुद्धाचाराः तान् हन्ति इति वा ।

श्री.– ★अनिरुद्धः = अन्यनिरोधकरहितः ।



## १८८. सुरानन्दः (सदानन्दः)

वि.– ★सुरानानन्दयतीति सुरानन्दः ।

र.– ★सन् उद्रिक्त आनन्दः यस्य सः सदानन्दः ।

स.– ★सु शोभनज्ञानं राति ददाति आनन्दयति च इति सुरानन्दः ।

श्री.– ★सुरानन्दः = उद्रिक्तानन्दः ।



## १८९. गोविन्दः

वि.– ★गां भूमिं विन्दत इति गोविन्दः ।

''नष्टां वै धरणीं पूर्वमविन्दं वै गुहागताम् ।
गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः'' ॥ इति मोक्षधर्मे ।

★गां वाणीं विन्दत इति वा, गवामिन्द्र इति वा गोविन्दः ।

तथाहि हरिवंशे–

''गौरेषा तु तथा वाणी तां तु विन्दयते भवान् ।
गोविन्दस्तु ततो देव मुनिभिः कथ्यते भवान्'' ॥ इति ।

तथा–

"अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः ।
गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम् ।।" इति ।

र.– ★गां पशुपुत्रादीन् विन्दति लम्भयति इति गोविन्दः ।

स.– ★गां भुवं इषुं धेनुं स्वर्गं वेदं वा विन्दति इति गोविन्दः ।

श्री.–★गोविन्दः = पशुपुत्रादिप्रापयिता ।



## १९०. गोविदांपतिः

वि.–★गां वाणीं विदन्तीति गोविदः । तेषां पतिर्गोविदांपतिः ।

र.– ★गां तेजः लभन्ते इति गोविदः गोविदां तेजस्विनां पतिः इति गोविदांपतिः ।

स.– ★गोविदां वेदवेत्तॄणां जलचराणां पतिः ।

श्री.–★गोविदांपतिः = तेजस्विनां स्वामी ।



मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ।। २१ ।।

## १९१. मरीचिः

वि.– ★उदवन्मेघचलनात् मरीचिः ।

र.– ★वलासुरं मरणं प्रापयति इति मरीचिः ।

स.– ★म्रियते तमः अनेन इति मरीचिः ।

*मरम् उदकं येषाम् अस्ति इति मरिणः, तान् चालयति इति वा ।

श्री.– *मरीचिः = दैत्यमरणप्रापयिता ।



## १९२. दमनः

वि.– *दुष्टान् दमयति निगृह्णातीति दमनः ।

र.– *शत्रुपुरीणां दमं निरोधं करोति इति दमनः ।

स.– *दमनासुरसंहारकत्वात् दमनप्रियत्वात् वा दमनः ।

*दमः येषाम् अस्ति इति दमाः, तान् नयति इति वा ।

*दम् अभीष्टदातृ मनः यस्य स इति वा ।

श्री.– *दमनः = शत्रुपुरनिरोधनकर्ता ।



## १९३. हंसः

वि.– *संसारं हन्तीति हंसः ।

''हन्तृत्वाद्धंसनामाऽसौ'' इत्युक्तेः ।

*दुःखादिदोपहीनः सारभूतश्चेति वा ।

''नित्यं हीनोऽखिलैर्दोषैः सारभूतो यतो हरिः ।
हंस इत्युच्यते तस्मात्'' इत्यादिवचनात् ॥

''त्यागात्पूर्वशरीरस्य नवानां सञ्चयेन च ।
जीवं हंस इति प्राहुस्तद्धेतुत्वाद्धरिं परम्'' ॥

-इति भारतवचनाद्वा हंसः ।

"हंसः शुचिषत्" इति श्रुतिः ।

र.– ★हं शत्रून् हननं सारयति प्रापयति इति हंसः ।

स.– ★दोषहीनत्वात् हं, सारत्वात् सः, हं चासौ सश्च हंसः ।

"नित्यं हीनोऽखिलैर्दोषैः साररूपो यतो हरिः ।
हंसः इत्युच्यते तस्मात् ....." ॥ इति काठकभाष्योक्तेः ।

श्री.– ★हंसः = शत्रुवधप्रापयिता ।



## १९४. सुपर्णः

वि.– ★शोभनपक्षवत्त्वात् सुपर्णः ।

★सुपरानन्दत्वाद्वा सुपर्णः ।

"सुपर्णः सुपरानन्दात्" इति वचनात् ॥

र.– ★सु सदृशः परः णः आनन्दः यस्य इति सुपर्णः ।

स.– ★सुष्ठु परमानन्दरूपत्वात् सुपर्णः ।

श्री.– ★सुपर्णः = सदृशोत्कृष्टानन्दः ।



## १९५. भुजगोत्तमः

वि.– ★भुजेन गच्छतामुत्तमो भुजगोत्तमः ।

र.– ★भुजं अभ्यवहारं गच्छन्ति इति भुजगाः सर्वदा अन्न-भक्षणादिभोगरताः चुमुरिधुनिशम्बरादयः तान् उत् उत्कृष्टं तमयति ग्लपयति इति भुजगोत्तमः ।

स.– *'भुज कौटिल्ये' इत्यतो भुजाः सन्तः गच्छन्ति इति भुजगाः सर्पाः, तेषाम् उत्तमः शेषः, यस्य शय्यात्वेन स भुजगोत्तमः ।

*भुजेन कौटिल्येन गच्छन्ति इति भुजगाः तमोयोग्याः, तेषां उत् उत्कृष्टं तमः यस्मात् सः इति वा ।

श्री.– *भुजगोत्तमः = अन्नादिभोगरतासुरोद्ग्लापकः ।



## १९६. हिरण्यनाभः

वि.– *हिरण्यमिव ख्याता नाभिरस्येति हिरण्यनाभः ।

*हिरण्यं हिरण्मयं वाह्याण्डं नाभौ यस्येति वा ।

*परमानन्दरूपत्वात् सर्वाश्रयत्वाच्च हिरण्यनाभः ।

''हिरुक् सुखं हिरण्यं स्याद् बाह्यानन्दात् पृथग्यतः'' इति वचनात् । ''नाभिरित्यथ नाम स्याद्धरेः सर्वाश्रयो यतः'' इति (च) । नाभिरेव नाभः ।

र.– *भक्तानां हितं च रमणीयं च इति हिरण्यं वज्रम् । न अभः अभिभवः यस्य सः नाभः हस्तः, हिरण्यं वज्रं नाभे हस्ते यस्य सः हिरण्यनाभः ।

स.– *'णभ् हिंसायाम्' इत्यतो घञि नाभः हिंसकः, हिरण्यस्य तन्नामकासुरस्य नाभः हिरण्यनाभः ।

श्री.– *हिरण्यनाभः = वज्रहस्तः ।



## १९७. सुतपाः

वि.– ★शोभनं तपो ज्ञानादिकं यस्य स सुतपाः ।

★यज्ञे सुतमभिषुतं सोमं पिबतीति वा सुतपाः । सोमपा इति यथा ।

र.– ★सु सम्यक् आसुरीः मायाः तपति सन्तापयति विनाशयति विफलीकरोति इति सुतपाः ।

स.– ★शोभनं तपः ज्ञानं यस्य सः सुतपाः ।

★'पा रक्षणे' इत्यतः सुतं चतुर्मुखं पाति इति वा सुतपाः ।

★सुतं अभीष्टितं सोमरसं पिबति इति वा ।

श्री.– ★सुतपाः = सम्यगसुरमायानाशकः ।



## १९८. पद्मनाभः

वि.– ★पद्ममिव सुवर्तुला नाभिरस्येति, हृदयपद्मस्य नाभौ मध्ये प्रकाशनाद्वा पद्मनाभः ।

र.– ★पद्मना सिंहनादादिना रणे आभाति इति पद्मनाभः ।

स.– ★पद्मः चतुर्मुखः नाभौ यस्य इति पद्मनाभः ।

★पदं भगवत्स्वरूपं मन्यन्ते इति पद्मनाः भगवद्भक्ताः तान् प्रत्याभाति इति पद्मनाभः ।

श्री.– ★पद्मनाभः = सिंहनादादिभासमानः ।



## १९९. प्रजापतिः

वि.– *प्रजानां स्वामी प्रजापतिः ।

*कर्मानधीनत्वलक्षणप्रकर्षेण जायत इति प्रजः स चासौ पतिरहितश्चेति प्रजापतिः ॥

र.– *प्रजाः पालयति इति प्रजापः, प्रजापत्वेन ततः व्याप्तः प्रजापतिः।

*अत्यक्तप्राजापत्यवान् । यद्वा प्रकृष्टः जायते अनेन इति प्रजं पूर्णसुखं, आ समन्तात् सर्वकालेषु सर्वदेशेषु आपम् आपशब्देन विवक्षितकालतः व्याप्त्या देशतः व्याप्त्या च स्थविरत्वं शत्रुधर्षकत्वं च उक्तम् । प्रजं च आपे च प्रजापानि तैः ततः अत्यक्तसुखस्थविरत्वशत्रुधर्षकत्वादिगुणवान् प्रजापतिः ।

स.– *प्रजानां पतिः प्रजापतिः ।

*'जप् व्यक्तायाम् वाचि,' 'जप मानसे' च इत्यतो वा, प्रकृष्टः जापः स्तुतिः ध्यानं वा येषां ते प्रजापाः, तेषां तः आनन्दः यस्मात् इति प्रजापतिः । ''आनन्दन्ति इति वै वदेत्'' इति प्रमाणात् ।

श्री.– *प्रजापतिः = जगत्पालकः ।



अमृत्युः सर्वदृक् सिंहः सन्धाता सन्धिमान् स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ २२ ॥

## २००. अमृत्युः

वि.– ★विनाशहेतुशून्यत्वादमृत्युः ।

र.– ★न विद्यते मृत्युः मारकः मृतिः वा इति अमृत्युः ।

स.– ★न विद्यते मृत्युः यस्य, यस्माद् इति वा अमृत्युः ।

श्री.–★अमृत्युः = मारकरहितः ।



## २०१. सर्वदृक्

वि.– ★सर्वं पश्यति साक्षात्करोतीति सर्वदृक् ।

र.– ★सर्वस्मिन् अपि काले दृक् दृश्यमानः प्रकाशमानः महिमा अस्य अस्ति इति सर्वदृक् ।

स.– ★'सर्वं पश्यति इति सर्वदृक् ।

श्री.–★सर्वदृक् = सर्वकालप्रकाशमानमहिमा ।



## २०२. सिंहः

वि.– ★सहत इति सिंहः ।

र.– ★उदकसेचकत्वात् सिः मेघः । तं हन्ति (वृष्टिप्रदानाय) इति सिंहः ।

स.– ★सिञ्चति इति सिंहः ।

'षिच् क्षरणे' चकारस्य हकारादेशः नुमागमश्च ।

★यद्वा हिनस्ति इति सिंहः

''सिंहो वर्णविपर्ययात्'' इत्युक्तेः ।

श्री.– *सिंहः = मेघताडनः ।



## २०३. सन्धाता

वि.– *सम्यग् धारणपोषणकर्तृत्वात् सन्धाता ।

र.– *वृष्टिकाले द्यावापृथिव्यौ सन्धापयति इति सन्धाता ।

स.– *सन्धाता सम्यग् धारणपोपणकर्ता ।

*रामादिरूपेणाहल्यादीनां गौतमादिभिः सन्धानकर्तृत्वाद्वा ।

श्री.– *सन्धाता = द्यावाभूम्योः सन्धानकर्ता ।



## २०४. सन्धिमान्

वि.– *सन्धिः सन्धानं सख्यम्, तद्वान् सन्धिमान् ।

''यस्तित्याज सचिविदं सखायम्'' इति श्रुतेः ।

*सन्धिः ज्ञानिकृतं कर्मार्पणम्, तद्वान् ।

''तस्मिन्नपो मातरिश्वा दधाति'' इति श्रुतेः ॥

र.– *सन्धिः संयोगः यज्ञैः संयोगवान् सन्धिमान् ।

स.– *सुग्रीवविभीपणादिभिः सन्धिविष्टत्वात् सन्धिमान् ।

श्री.– *सन्धिमान् = यज्ञैः संयोगवान् ।



## २०५. स्थिरः

वि.– ★निश्चलत्वात् स्थिरः ।

र.– ★वज्रं हस्ते स्थापयति इति स्थिरः ।

स.– ★अनादिनित्यत्वात् स्थिरः ।

श्री.–★स्थिरः = हस्ते वज्रस्थापकः ।



## २०६. अजः

वि.– ★अजति गच्छति क्षिपतीति वा अजः ।

"अज आत्मा महान् ध्रुवः" इति श्रुतेः ।

र.– ★दस्यून् अजति प्रतिक्षिपति इति अजः ।

स.– ★न जायते इति अजः ।

श्री.–★अजः = दस्युप्रतिक्षेपकः ।



## २०७. दुर्मर्षणः

वि.– ★दानवादिभिः मर्षितुं न शक्यत इति दुर्मर्षणः ।

र.– ★शत्रूणां उग्रः क्रूरः दुर्मर्षणः ।

स.– ★मर्षयितुमशक्यत्वाद् दुर्मर्षणः ।

श्री.–★दुर्मर्षणः = शत्रूणामुग्रः ।



## २०८. शास्ता

वि.– *शास्तीति शास्ता ।

"अन्तः प्रविष्टः शास्ता जनानाम्" इति श्रुतेः ।

"एकः शास्ता न द्वितीयोऽस्ति शास्ता गर्भे शयानं पुरुषं शास्ति शास्ता" इति मोक्षधर्मे ॥

र.– *शत्रूणां शास्ता इति शास्ता ।

स.– *जगच्छासकत्वात् शास्ता ।

श्री.– *शास्ता = शत्रुशासनः ।



## २०९. विश्रुतात्मा

वि.– *विश्रुतः श्रुत्यादिप्रसिद्धः सच्चिदानन्दलक्षण आत्मेति विश्रुतात्मा ।

र.– *विश्रुतः प्रसिद्धः आत्मा स्तोत्रं यस्य सः विश्रुतात्मा ।

स.– *विश्रुतात्मा प्रसिद्धस्वरूपः ।

श्री.– *विश्रुतात्मा = प्रसिद्धस्तोत्रः ।



## २१०. सुरारिहा

वि.– *सुराणामरीन् हन्तीति सुरारिहा ।

र.– *सृष्ठु रमणहेतुत्वात् सुरं स्तोमं तत् आ सम्यक् रिहति लिहति आस्वादयति इति सुरारिहा । सुरारीन् असुरान् हन्ति इति सुरारिहा ।

स.– *सुरारीन् दैत्यान् हन्ति इति, हनिष्यति इति वा सुरारिहा।

श्री.–*सुरारिहा = असुरघ्नः ।



गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ २३ ॥

## २११. गुरुः

वि.– *विरिञ्चादिषु स्थित्वा सर्वेषां व्यासादिरूपेण च विद्योपदेष्टृत्वाज्जनकत्वादेश्च गुरुः ।

"मत्सम्पत्त्या तु गुर्वादीन् भजन्ते मध्यमा जनाः ।
मदुपाधितया तांश्च सर्वभूतानि चोत्तमाः" ॥ इति नारदीये ।

"यो नः पिता जनिता" इत्यादेः ।

र.– *सोमपुरोडाशादिकं गृह्णाति इति गुरुः ।

स.– *गृणाति इति गुरुः ।

श्री.–*गुरुः = सोमादिगृहीता ।



## २१२. गुरुतमः

वि.– *विरिञ्चादीनामपि जनकत्वोपदेष्टृत्वादिना गुरुतमः ।

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतेः ।

र.– *गुरुं उत्कृष्टलोकं तनोति इति गुरुतमः ।

अथवा गुरूणि सल्लोकप्राप्तिप्रतिबन्धकानि पापानि ताम्यति ग्लपयति इति गुरुतमः ।

**स.– ★अतिशयेन गुरुः गुरुतमः ।**

''गुरुः श्रीब्रह्मणोर्विष्णुः सुराणां च गुरोर्गुरुः ।
मूलभूतगुरुः सर्वजनानां पुरुषोत्तमः'' ॥ -इति दशमतात्पर्योक्तेः ।

**★गुरुभिः ब्रह्मादिभिः तम्यते अभिकाङ्क्ष्यते इति वा ।**

**★गुरोः बृहस्पतेः ता विस्तृता मा ज्ञानं यस्मात् इति वा ।**

**★तमः अतिशयेन व्याप्तः, गुरुश्चासौ तमश्चेति वा ।**

**श्री.–★गुरुतमः = उत्कृष्टलोकविस्तारकः ।**



## २१३. धाम

**वि.– ★तेजःशक्तिस्वरूपत्वात् सर्वनिवासत्वाद्वा धाम ।**

''तेजः शक्तिः समूहश्च गृहं धामेति कथ्यते'' इति शब्दनिर्णये ।
''स वेदैतत् परमं ब्रह्म धाम'' इति च श्रुतिः ।

**र.– ★अस्मद्दत्तसोमादिहर्वीपि भक्तरक्षणगोचरवुद्धिं वा धत्ते इति धाम ।**

**स.– ★धामः तेजोरूपः ।**

**श्री.–★धाम = सोमादिग्रहवुद्धिधर्ता ।**



## २१४. सत्यः

**वि.– *उत्तमानन्दानुभवात् सत्यः ।**

"सच्छब्द उत्तमं ब्रूयादानन्दं तीति वै वदेत् ।
येति ज्ञानं समुद्दिष्टं पूर्णानन्ददृशिस्ततः ॥
सत्यशब्दोदिता" इत्यादि तन्त्रभागवते ।

***अवितथरूपत्वाद्वा सत्यः ।**

"सत्यमेनमनु विश्वे मदन्ति" इति श्रुतेः ।

र.– ***भक्तेभ्यः सद्भागं यापयति इति वा, समीचीनाः गुणाः यान्ति अत्र इति वा, समीचीनान् गुणान् यापयति इति वा, अवितथं जगत् यापयति इति वा सत्यः ।**

स.– ***जगत्स्रष्टा ।**

"सद्भावं यापयेत् यस्मात् सत्यं तत्तेन कथ्यते" ।

***सत्त्वं जीवनं विशरणं वा भूतानां यापयति इति सत्यमित्युक्तम् ।**

***अथवा सत्यो गतिदाता ।**

तदुक्तम्–

"उक्तं सदिति धात्वर्थो गतिश्चातो हि सत्येन प्राणत्वमिति" ।

तथा च सत् सत्त्वं गतिं भूतानां यापयति इति सत्यशब्दो गतिप्रदत्वमाह । हरेर्गतिप्रदत्वं 'प्राणं देवा अनुप्राणन्ति' इति श्रुतिर्वक्ति ।

भागवततात्पर्ये तु–

'सत्यं परं धीमहि' इत्यत्र सत्यमिति प्रतीकं उपादाय 'निर्दुःख–नित्यनिरतिशयानन्दानुभवरूपम्' इति व्याख्यातम् ।

ऐतरेयभाष्ये तु–

"सच्छब्द उत्तमं ब्रूयात्" इति मानम् ।

'तनु विस्तारे' इति धातुम्, "या प्रापणे" इति धातुं च अभिप्रेत्य

'स एष भगवान् विष्णुः सत्यमित्यभिधीयते ।
सर्वोत्तमत्वात् पूर्णत्वात् सर्वज्ञत्वात् तथैव च' ॥ इत्युक्तम् ।

छान्दोग्यभाष्ये तु–

"सदित्यमृतधर्माणो मुक्ताः श्रीरपि चेरिताः ।
इत्युक्ताः सत्यधर्माणः तेषां नियमनाद्धरिः ॥
सत्यमित्युच्यते सद्भिः....." । इति व्याख्यातः ।

***अथवा सादयति विशरणादिकं प्रापयति इति सत्, यामयति नियच्छति इति यं, सच्च तत् यं च इति सत्यम् ।**

तस्योपनिषत् 'सत्यस्य सत्यम्' इति । "एष एव एतत् सादयति यामयति" इति प्राचीनशालश्रुतिः ।

**श्री.– *सत्यः = भक्तसद्भोगप्रापकः ।**



## २१५. सत्यपराक्रमः

**वि.– *अवितथः पराक्रमोऽस्येति सत्यपराक्रमः ।**

"सत्यः सो महिमा गृणे शवो यज्ञेषु विप्रराज्ये" इत्यादिश्रुतेः ।

**र.– *सत्यं समीचीनं सोमाभिपवादिकर्म, तत्पराः भरद्वाजादयः तान् आक्रमते तद्गेहं प्राप्नोति इति सत्यपराक्रमः ।**

**स.– *सत्यः पराक्रामः यस्य सः सत्यपरक्रमः ।**

***सत्यपरे सत्यवचनात्मके बलिचक्रवर्तिनि आ सम्यक् क्रमः पादविक्षेपो यस्येति वा ।**

'वायुः सदिति सम्प्रोक्तो जीवेषु तु सुपूर्णतः । तीति ब्रह्मा समुद्दिष्टः स एवान्नाभिमानवान् । अन्नं प्रजापतिरिति श्रुतिरन्याऽप्यभाषत । अतिनादात्सदा वेदैरप्यन्नं चतुर्मुखः । यमित्यादित्य उद्दिष्टो यमयेद्यत्प्रकाशयन् ॥ देवतात्रयमेतत्तु सहितं सत्यमुच्यते । शुक्लकृष्णकनीनासु चक्षुषोऽप्येत आस्थिताः । एवं सत्यपदार्थं यो विज्ञायोपास्त आदरात् । योग्यस्तस्या उपास्याया नैवासत्येन दुष्यति । देवता मुनयश्चैव योग्या अस्या अपि स्फुटम् । मानुषाणां ज्ञानमात्रा दोषो नानितरा भवेत् । इति ऐतरेयभाष्योक्तेः सत्यशब्दो वायुब्रह्मसूर्यसमुदायः तेषां पराक्रमः यस्मादिति वा ।

**श्री.– *सत्यपराक्रमः=सोमादिकंर्मतत्परगृहगः ।**



## २१६. निमिषः

**वि.– *योगनिद्रया नेत्रनिमीलनात् निमिषः ।**

''यो विद्ययाऽनुपहतोऽपि दशार्धवृत्त्या
निद्रामुवाह जठरीकृतलोकयात्रः ।
अन्तर्जलेऽहिकशिपुस्पर्शानुकूलं
भीमोर्मिमालिनि जनस्य सुखं विवृण्वन्'' ॥ इति भागवते ।

**र.– *नितरां मिषन् जागरवान् निमिषः ।**

**स.– *निमेः तन्नामकस्य राज्ञः षं बलं यस्मात् सः निमिषः ।**

***नियामकतया निमिषाख्यकालवत्त्वात् वा ।**

'मिष स्पर्धायाम्' इति धातोः नितरां दैत्यैः मिषः स्पर्धा यस्य इति वा ।

श्री.– *निमिषः = जागृद्वान् ।



## २१७. अनिमिषः

वि.– *"नित्यज्ञानदृशा नित्यं लयकालमपीश्वरः ।
पश्येत् तात्कालिकं चैव तस्मादनिमिषो हरिः" ॥
इति तन्त्रसारवचनादनिमिषः ।

र.– *अनिमिषः देव एव, न मानुषः ।

स.– *अनः येषाम् अस्ति इति अनिनः वायुभक्ताः तान् मिषति इति अनिमिषः ।

'मिष सङ्गम' इति धातोः ।

*सर्वदा दयया मुक्तान् पश्यति इति वा ।

श्री.–*अनिमिषः = मनुष्यभिन्नो देवः ।



## २१८. स्रग्वी

वि.– *स्रक् प्रकृतिर्वनमालाऽस्यास्तीति स्रग्वी ।

र.– *स्रग् विसर्गः अतिरेकः तत् अस्य अस्ति इति स्रग्वी ।

स.– *स्रजः अस्य सन्ति इति स्रग्वी ।

श्री.–*स्रग्वी = अतिरेकी ।



## २१९. वाचस्पतिरुदारधीः (वाचस्पपिः, उदारधीः)

वि.–★वाण्याः पतिः वाचस्पतिः । "वाचस्पतिं विश्वकर्माणम्" इति श्रुतेः। प्रकृष्टबुद्धित्वादुदारधीः। वाचस्पतेरेतत् विशेषणम्।

वाचस्पतिः

र.– ★वाचां पतिः वाचस्पतिः ।

स.– ★वाचां वेदवाक्यानां पतिः वाचस्पतिः । षष्ठ्याः अलुक् विसर्गस्य सकारादेशः ।

श्री.–★वाचस्पतिः = वाचाम्पतिः ।

उदारधीः

र.– ★उदाराणि सर्वबन्धनशक्तानि धियः कर्माणि यस्य सः उदारधीः ।

स.– ★उत्कृष्टा दारा रमा, तस्याः धीः यस्मात् इति उदारधीः ।

★अराणां समूहः आरम् । उद्गता आरा उदारा निर्दोपा धीः यस्य इति वा ।

श्री.–★उदारधीः = सर्वबन्धननाशककर्मा ।



अग्रणीर्ग्रामणीः श्रीमान् न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ २४ ॥

## २२०. अग्रणीः

वि.– ★अग्रं प्रकृष्टपदं नयति मुक्तानित्यग्रणीः ।

र.– ★अग्राणि शुभाशुभकर्माणि नयति इति अग्रणीः ।

स.– *अग्रे प्रथमे नयति इति अग्रणीः ।

श्री.– *अग्रणीः = शुभाशुभकर्मनेता ।



## २२१. ग्रामणीः

वि.– *भूतग्रामस्य नेतृत्वाद् ग्रामणीः ।

र.– *कमनीयं अभीष्टग्रामं नयति इति ग्रामणीः ।

स.– *ग्रामं भूतग्रामं नयति इति ग्रामणीः ।

श्री.– *ग्रामणीः = अभीष्टसमूहनेता ।



## २२२. श्रीमान्

वि.– *भूयिष्ठा कान्तिरस्यास्तीति श्रीमान् ।

र.– *श्रयते इति श्रीः कान्तिः । शरन्मासदिवसादिभिः अनपक्षीणकान्तिः अस्य अस्ति इति श्रीमान् ।

स.– *श्रीमान् नित्यलक्ष्मीवान् ।

श्री.– *श्रीमान् = अक्षीणकान्तिमान् ।



## २२३. न्यायः

वि.– *नीयते शिष्येषु गुरुणेति न्यायः ।

"तं देवाः प्राणयन्त" इति श्रुतेः ।

र.– ★नितरां तन्वाऽपि आयः वृद्धिः यस्य इति वा, न विद्यते आयः वशीकरणं यस्य इति वा, यः गम्यः सः न भवति इति अयः नितराम् आ निःशेषं अयः गम्यः न भवति इति वा न्यायः ।

स.– ★न्यायः नितराम् आयः लाभः यस्य सः ।

श्री.–★न्यायः = नितरां बुद्धिमान् ।



## २२४. नेता

वि.– ★लोकयात्राप्रवर्तकत्वात् नेता ।

र.– ★महतः पर्वतान् अपि छेदनं नयति, महान्तो अपि पर्वता अस्य अग्राः क्षिप्यमाणाः भवन्ति इति यावत्, अथवा नेतृशब्देन उत्कृष्टः राजादिः उच्यते । नीचस्थानस्थिताऽपि अनतः एव उत्कृष्ट एव इति नेता ।

स.– ★नेता तत्तद्योग्यफलनियामकः ।

'पुण्येन पुण्यं लोकं नयति, पापेन पापम्' इति श्रुतेः ।

श्री.–★नेता = पर्वतच्छेदनकर्ता ।



## २२५. समीरणः

वि.– ★सम्यग् भूतानि प्रेरयतीति समीरणः ।

र.– ★सं सन्ततम् अहोरात्रम् ईरणा प्रेरणा यस्य इति वा, सं समीचीनं स्वकर्मणि स्थितं जनं प्रति ईरणं फलप्रापणं यस्य (येन) सः इति वा समीरणः ।

स.– ★समीरणः समीरस्य वायोः णः सुखं यस्मात् ।

★सं सम्यक् याः लक्ष्म्याः रणः 'जय जय जह्यजाम् इति स्तुतिरूपशब्दः यस्मिन् सः इति वा ।

★सं सम्यग् ईरयति प्रेरयति इति वा ।

श्री.– ★समीरणः = सन्ततप्रेरकः ।



## २२६. सहस्रमूर्धा

वि.– ★सहस्राणि मूर्धानोऽस्येति सहस्रमूर्धा ।

''सहस्रशीर्षा पुरुषः'' इति ''विश्वतश्चक्षुः'' इति च श्रुतेः ॥

र.– ★मूर्धशब्दः प्रधानपरः सहस्रशब्दः बहुकालपरः सहस्रेषु शतेषु कालेषु भक्तः जनः हर्षादिना प्रधानः भवति यस्मात् सः सहस्रमूर्धा ।

स.– ★सहस्रं मूर्धानः यस्य सः ।

★''मूरं पापं हि तेनोत्थं मूरम् इत्यभिधीयत'' इति बृहद्भाष्ये मूरशब्दस्य पापार्थकत्वाभिधानात् ।

श्री.– ★सहस्रमूर्धा = चिरं भक्तहर्षाधिक्यकर्ता ।



## २२७. विश्वात्मा

वि.– ★विश्वस्य आत्मा विश्वात्मा ।

★विराड् देहो यस्येति वा विश्वात्मा ।

''विश्वात्मानं परायणम्'' इति श्रुतेः ॥

र.– *आत्मशब्देन दानकर्ता उच्यते । विश्वानि अधमोत्तम-मध्यमार्थविपयतया त्रिविधान्यपि दानानि यस्मात् भवन्ति इति विश्वात्मा ।

स.– *विश्वात्मा विश्वनियामकः ।

विश्वाभिन्न इति व्याख्यानं तु–

''भिन्नोऽचिन्त्यः परमो जीवसङ्घात्'' । सोऽहं विश्वसृजं विश्वं अविश्वं विश्ववेदसम्' । इति बहुप्रमाणविरोधात् पूर्वोत्तरत्र च धर्मोक्तेश्च उपेक्ष्यम् ।

श्री.– *विश्वात्मा = सर्वदानकर्ता ।



## २२८. सहस्राक्षः

वि.– *सहस्राण्यक्षीणि यस्य स सहस्राक्षः ॥

र.– *सहस्राः सहस्रसङ्ख्याकाः शत्रुसेनाः आ सम्यक् क्षिणोति व्यथयति इति सहस्राक्षः ।

स.– *सहस्रम् अक्षीणि यस्य सः ।

श्री.– *सहस्राक्षः = वहुशत्रुसेनाक्षयकारी ।



## २२९. सहस्रपात्

वि.– *सहस्राणि पदानि यस्य स सहस्रपात् ।

''सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति'' ॥

-इति श्वेताश्वतरश्रुतिः ॥

र.– ★सहस्राः बहुसङ्ख्याका विशः प्रजाः पातयति इति सहस्रपात्।

स.– ★सहस्रं पादाः यस्य सः।

श्री.– ★सहस्रपात् = बहुप्रजापालयिता।



आवर्तनो निवृत्तात्मा संवृतः सम्प्रमर्दनः।
अहःसंवर्तको वह्निरनिलो धरणीधरः॥ २५॥

## २३०. आवर्तनः

वि.– ★आ समन्ताद् वर्तनमस्येत्यावर्तनः।

★संसारचक्रमावर्तयितुं शीलमस्येति वा आवर्तनः।

र.– ★आ समन्तात् स्थितान् सन्निकृष्टान् विप्रकृष्टान् च पराचो वर्तयति इति आवर्तनः।

स.– ★आ सम्यक् वर्तनम् अस्य इति।

★आवर्तं नद्यादिगताम्भसां भ्रमं नयति इति वा।

श्री.– ★आवर्तनः = शत्रुवैमुख्यकर्ता।



## २३१. निवृत्तात्मा (अनिवृत्तात्मा)

वि.– ★संसारान्निवृत्तः आत्मा स्वरूपमस्येति निवृत्तात्मा।

★अनिवृत्तः विनाशहीनः आत्मा देहादिरस्येत्यनिवृत्तात्मा वा।

★अनिपु वृत्तात्मा वा।

र.– ★निवृत्तः आत्मा प्रतिभटः यस्मात् सः इति निवृत्तात्मा ।

स.– ★निवृत्तात्मा निवृत्ताः आत्मानः येन प्रलये इति ।

★यद्वा अनिवृत्तात्मा अनिवृत्तः आत्मा देहः यस्य सः ।

श्री.–★निवृत्तात्मा = परावृत्तप्रतिभटः ।



## २३२. संवृतः

वि.–★मेघान्तर्हितादित्यवत् योगमाययावृतत्वेन मूढज्ञानाविषयत्वात् संवृतः ।

"नीहारेण प्रावृताः" इति श्रुतेः ।

"आत्मनः प्रकृतेश्चैव लोकचित्तस्य बन्धनम् ।
स्वसामर्थ्येन देव्या च कुरुते स महेश्वरः" ॥ इति पाद्मे ।

★सम्यग् देवादिभिः पुरुषार्थतया वृत इति वा ।

र.– ★सं समीचीनेन वलेन वृतः इति संवृतः ।

स.– ★सम्यक् गुणैः वृतः संवृतः ।

श्री.–★संवृतः = सम्यक् वलयुक्तः ।



## २३३. सम्प्रमर्दनः (सम्प्रतर्दनः)

वि.– ★सम्यक् प्रमर्दयति प्रळये प्रजा इति सम्प्रमर्दनः ।

र.– ★सम्यक् अभक्तान् तर्दयति हिनस्ति इति सम्प्रतर्दनः (सम्प्रमर्दनः इति पाठे, सम्प्रमर्दयति इति सम्प्रमर्दनः) ।

स.– ★सम्यक् प्रमर्दयति दैत्यान् इति सम्प्रमर्दनः ।

श्री.– ★सम्प्रमर्दनः = सम्यगभक्तनाशकः ।



## २३४. अहःसंवर्तकः

वि.– ★सम्यगह्नः दिवसस्य मनुष्यादिसम्वन्धिनः ब्राह्मकल्पस्य च प्रवर्तकत्वादहःसंवर्तकः ।

र.– ★अहः भक्तजनं ज्ञानिनं सं सम्यग् भयपरिहारादिना वर्तयति इति अहःसंवर्तकः ।

स.– ★अह्नां सम्यक् प्रवर्तकः ।

★न जहाति भक्तान् इति अहः, संवर्तते जगत् अत्र इति संवर्तकः, अहश्चासौ संवर्तकश्च इति वा ।

श्री.– ★अहःसंवर्तकः = ज्ञानिभयपरिहारकः ।



## २३५. वह्निः

वि.– ★सर्वस्य वहनाद् वह्निः ।

र.– ★उह्यते युद्धादिकम् अनेन इति वह् वलं तत् नयति इति वह्निः ।

स.– ★वह्निः जगद्दाहकः ।

श्री.– ★वह्निः = बलनेता ।



## २३६. अनिलः

वि.– ★अनिति चेष्टते अनेन इति अनिलः ।

★न विद्यते निलयो यस्येति वा अनिलः ।

★न विद्यत इला यस्येति वा ।

"अनात्म्येऽनिलयने" इति श्रुतेः ।

र.– ★अनिलवत् शत्रुसेनाप्रक्षेपकत्वात् अनिलः ।

स.– ★अनति अनेन इति अनिलः ।

★न विद्यते निलो निलयनं यस्य इति वा ।

★न विद्यते इला भूमिः आधारभूता यस्य इति वा ।

श्री.– ★अनिलः = शत्रुप्रतिक्षेपे वायुसमः ।



## २३७. धरणीधरः

वि.– ★आज्ञामात्रेण धरणीं धारयतीति धरणीधरः ।

"एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः" इति श्रुतेः ।

र.– ★ध्रियते पुमान् पुरुपार्थाय अनया इति धरणी स्तुतिः, धरणीं दधति इति धरणीधाः, भरद्वाजाख्याः तान् अन्नादिना रमयति इति धरणीधरः ।

स.– ★धरण्याः धरः धरणीधरः ।

★धरान् पर्वतान् नयति इति धरणीः पर्वतश्रेष्ठः गोवर्धनः तद्धारकत्वात् वा ।

स.– ★सम्यक् प्रमर्दयति दैत्यान् इति सम्प्रमर्दनः ।

श्री.– ★सम्प्रमर्दनः = सम्यगभक्तनाशकः ।



## २३४. अहःसंवर्तकः

वि.– ★सम्यगह्नः दिवसस्य मनुष्यादिसम्बन्धिनः ब्राह्मकल्पस्य च प्रवर्तकत्वादहःसंवर्तकः ।

र.– ★अहः भक्तजनं ज्ञानिनं सं सम्यग् भयपरिहारादिना वर्तयति इति अहःसंवर्तकः ।

स.– ★अह्नां सम्यक् प्रवर्तकः ।

★न जहाति भक्तान् इति अहः, संवर्तते जगत् अत्र इति संवर्तकः, अहश्चासौ संवर्तकश्च इति वा ।

श्री.– ★अहःसंवर्तकः = ज्ञानिभयपरिहारकः ।



## २३५. वह्निः

वि.– ★सर्वस्य वहनाद् वह्निः ।

र.– ★उह्यते युद्धादिकम् अनेन इति वह् वलं तत् नयति इति वह्निः ।

स.– ★वह्निः जगद्दाहकः ।

श्री.– ★वह्निः = बलनेता ।



## २३६. अनिलः

वि.– ★अनिति चेष्टते अनेन इति अनिलः ।

★न विद्यते निलयो यस्येति वा अनिलः ।

★न विद्यत इला यस्येति वा ।

''अनात्म्येऽनिलयने'' इति श्रुतेः ।

र.– ★अनिलवत् शत्रुसेनाप्रक्षेपकत्वात् अनिलः ।

स.– ★अनति अनेन इति अनिलः ।

★न विद्यते निलो निलयनं यस्य इति वा ।

★न विद्यते इला भूमिः आधारभूता यस्य इति वा ।

श्री.– ★अनिलः = शत्रुप्रतिक्षेपे वायुसमः ।



## २३७. धरणीधरः

वि.– ★आज्ञामात्रेण धरणीं धारयतीति धरणीधरः ।

''एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः'' इति श्रुतेः ।

र.– ★ध्रियते पुमान् पुरुपार्थाय अनया इति धरणी स्तुतिः, धरणीं दधति इति धरणीधाः, भरद्वाजाख्याः तान् अन्नादिना रमयति इति धरणीधरः ।

स.– ★धरण्याः धरः धरणीधरः ।

★धरान् पर्वतान् नयति इति धरणीः पर्वतश्रेष्ठः गोवर्धनः तद्धारकत्वात् वा ।

श्री.– ★धरणीधरः = भूधारकभरद्वाजान्नदाता ।



सुप्रसादः प्रसन्नात्मा विश्वधृग् विश्वभुग् विभुः ।
सत्कर्ता सत्कृतिः साधुर्जह्नुर्नारायणो नरः ॥ २६ ॥

## २३८. सुप्रसादः

वि.– ★शोभनः प्रसादः मोक्षहेतुः प्राणिनामस्यास्तीति सुप्रसादः ।

र.– ★सु समीचीनाः प्रजाः पिता पुत्रानिव प्रकर्षेण हस्तयोः आसादयति धारयति इति वा सस्यादीनि पृथिव्यां प्रसादयति प्रसाधयति उत्पादयति इति वा सुप्रसादः ।

स.– ★शोभनः मोक्षजनकीभूतः प्रसादः यस्य इति सुप्रसादः ।

★प्रसीदति अनेन इति प्रसादः सुखम्, सुष्ठु प्रसादः यस्य इति वा ।

श्री.– ★सुप्रसादः = सत्प्रजाहस्तधारकः ।



## २३९. प्रसन्नात्मा

वि.– ★करुणार्द्रस्वभावत्वात् पूर्णकामत्वाद्वा प्रसन्नात्मा ॥

र.– ★प्रसन्नाः विषण्णाः पर्जन्यद्यावापृथिव्यादिसमस्ताः आत्मानः चेतनाः सेवकाः यस्य सः प्रसन्नात्मा ।

स.– ★प्रसन्नः आत्मा मनः यस्य सः प्रसन्नात्मा ।

श्री.– ★प्रसन्नात्मा = विषण्णचेतनः ।



## २४०. विश्वधृक्

वि.– *विश्वं धृष्णोतीति विश्वधृक् ।

र.– *विश्वानि शुष्णकुयवादिरक्षांसि दंशति इति विश्वदृक् ।

स.– *विश्वं धृष्णाति इति विश्वधृक् ।

'धृष् प्रगल्भे' ।

श्री.– *विश्वदृक् = सर्वशुष्णाद्यसुरदंशकः ।



## २४१. विश्वभुक्

वि.– *विश्वं भुङ्क्ते भुनक्ति पालयतीति वा विश्वभुक् ।

र.– *विश्वानि वहुसङ्ख्यानि शम्वराद्यसुरपुराणि भुनक्ति इति हिनस्ति इति विश्वभुक् ।

स.– *विश्वं भुङ्क्ते भुनक्ति पालयति इति वा विश्वभुक् ।

श्री.– *विश्वभुक् = वहुशम्वरादिपुरभक्षकः ।



## २४२. विभुः

वि.– *नियामकत्वेन विविधभवनात् विशिष्टभवनात् समर्थत्वाद्वा विभुः ।

''द्विविधं वैभवं विष्णोः प्रत्यक्षं च तिरोहितम् ।
कपिलव्यासकृष्णाद्यं प्रत्यक्षं वैभवं स्मृतम् ।
भिन्नं ब्रह्मादिजीवेभ्यो जडेभ्यश्चापि तद्गतम् ।
स्वजात्याधिक्यदं तेषां तत्तिरोहितवैभवम् ॥''

-इत्यादि गीताभाष्योक्तेः ॥

र.– *वि विशिष्टः भुः बलादिधर्मः यस्य सः विभुः । यद्वा वि विशिष्टरथे भवति सन्निहितः भवति इति विभुः ।

स.– *विविधं भवति इति विभुः । व्याप्तो वा ।

श्री.– *विभुः = विशिष्टबलादिधर्मवान् ।



## २४३. सत्कर्ता

वि.– *सत्करोति पूजयतीति सत्कर्ता ।

*सतां योगक्षेमादिवहनात् सत्कर्ता ।

*सतः प्रपञ्चस्य कर्ता वा । ''विश्वं सत्यम्'' इति श्रुतेः ।

सन् क्लेशादिरहितः कर्ता वा ।

''असत्कर्ता तु जीवः स्यात् सत्कर्ता परमेश्वरः'' इति शब्दनिर्णये ॥

र.– *भक्तान् सतः प्रख्यातान् करोति इति सत्कर्ता ।

स.– *सन् क्लेशादिरहितश्चासौ कर्ता च सत्कर्ता ।

*सतः सत्यस्य जगतः कर्ता इति वा ।

*सताम्, 'शद्लृ विशरणगत्यवसादनेषु' इति धातोः, विशरणादियुक्तानां दैत्यानां कर्ता हिंसकः ।

श्री.– *सत्कर्ता = भक्तप्रख्यातिकर्ता ।



## २४४. सत्कृतिः(तः)

वि.– *सद्भिराद्दतत्वात् सत्कृतः ।

*सत् सत्यं कृतं कर्म यस्य स सत्कृतः ।

"सत्या सत्यस्य करणानि वोचम्" इति श्रुतेः ।

*सद्भिः कृतः ध्यात इति वा ।

"अविद्यमानरचनं विद्यमानस्मृतिस्तथा ।
उभयं रचनं प्रोक्तं पूर्वसिद्धेषु तु स्मृतिः" ॥ इति शब्दनिर्णये ।

र.– *सती समीचीना कृतिः स्तुतिनिर्माणरूपा कृतिः यस्मिन् सः सत्कृतिः ।

स.– *सती कृतिः सत्यकर्मव्यापारः यस्य सः सत्कृतिः ।

*सती कृतिः तन्नाम्नी भार्या यस्य इति वा ।

श्री.–*सत्कृतिः = सम्यक् स्तुतिरूपकृत्यधिकरणः ।



## २४९. साधुः

वि.– *न्यायवर्तित्वात् साधकत्वात् सिद्धिरूपत्वाद्वा साधुः ।

र.– *आ सम्यक् धुः कम्पनं वलासुरापहृतगवाम् अदर्शनार्थं स्थापितशिलायाः कम्पनं तेन सह वर्तते तत् करोति इति यावत् । तथा च आधुना शिलाकम्पनेन शिलाप्रतिक्षेपणेन सहितः साधुः ।

स.– *साध्नोति परकार्यमिति साधुः ।

श्री.–*साधुः = शिलाप्रतिक्षेपयुक्तः ।



## २४६. जह्नुः

वि.– ★दुष्टान् जह्नुतेऽपनयति (भक्षयति) जहाति हन्ति वेति जह्नुः ।

र.– ★असुरैः सह सख्यं जहाति, सुरैः सह सख्यं करोति इति जह्नुः । ओ हाक् त्यागे, ओ हाक् गतौ इत्याभ्यां धातुभ्यां नुः ।

स.– ★जहाति अयोग्यान् इति जह्नुः ।

श्री.– ★जह्नुः = सुरादिसख्यादिकर्तादिः ।



## २४७. नारायणः

वि.– ★नारायणशब्दस्तत्रतत्र बहुधा निरुक्तः ।

तत्र तावन्महाभारते–

''आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः'' ।। इति ।

''देहोऽयं मे सदानन्दो नायं प्रकृतिनिर्मितः ।
परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्यहम्'' ।।

इत्यादि ब्रह्मवैवर्ते ।

पाद्मे च–

''नारा इत्यात्मनां सङ्घास्तेषां गतिरसौ परा ।
भवन्ति ते चायतनं तेन नारायणः स्मृतः ।।
नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः ।
तान्येवाऽयतनं तस्य तेन नारायणः स्मृतः ।
कल्पान्ते च जगत्कृत्स्नं ग्रसित्वा येन धार्यते ।
पुनः संसृज्यते येन स वै नारायणः स्मृतः ।।

चराचरं जगत् कृत्स्नं नारमित्यभिधीयते ।
तस्याप्यास गतिर्येन तेन नारायणः स्मृतः ॥
यो हि नित्यपदे लोके नित्यमुक्तैकभोगवान् ।
ईशः सर्वस्य जगतः सोऽपि नारायणः स्मृतः '' ॥ इत्यादि ।

अनुव्याख्याने च–

''दोषारच्छिद्रशब्दानां पर्यायत्वं यतस्ततः ।
गुणा नारा इति प्रोक्तास्तद्वान् नारायणः स्मृतः'' ॥ इति ।

**★अराणामयनं न भवतीति वा ।**

**★उपकारित्वादिना नराणामिमे नारा वेदाः । प्रतिपाद्यतया तदयनत्वाद्वा ।**

**★नरसमूहो नारम् । उद्भवादिदातृतया तदयनत्वाद्वा ।**

**★नराणामधिपतिर्नारो मुख्यवायुः । परमप्रेमास्पदतया तदयनत्वाद्वा इत्यादीनि च निर्वचनानि द्रष्टव्यानि । नगनाकादि शब्दवदयं शब्दो ज्ञातव्यः । अयनशब्दोऽधिकरणे त्रिलिङ्गः ।**

''विश्वं नारायणं देवम्'' इति ।

''यच्च किञ्च जगत् सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः'' इति च श्रुतिः ।

र.– **★नराणाम् इदं नारम् अन्नबलादिदातृत्वेन तदाश्रयत्वात् नारायणः ।**

स.– **★'दोपारच्छिद्रशब्दानां पर्यायित्वं यतस्ततः' इत्युक्तेः, अराः दोषाः, नञो विरुद्धार्थत्वात् दोषविरुद्धाः नाराः गुणाः तदाश्रयत्वात् नारायणः ।**

*नञः अभावार्थत्वात् अराणां अयनं न भवति इति वा ।

*नरसम्बन्धित्वात् न रीयते अनेन इति वा । नारमणं येन इति वा । न दोषाः येन इति वा । निर्दोषवेदोत्पन्नत्वाद् वा। नारं ज्ञानं विषयतया तदयनत्वाद् वा ।

*अरविरुद्धत्वाद् अरतिरहितत्वाद्वा, क्षयरहितत्वाद् नाराः मुक्ताः तदाश्रयत्वाद्वा ।

*उपकारित्वादिना नराणां इमे नाराः वेदादयः प्रतिपाद्यतया तदयनत्वाद्वा ।

*नराणां इदं नारं उद्भवादि, दातृतया तदयनत्वाद्वा ।

*नराणां समूहः नारं वन्द्यतया तदयनत्वाद्वा ।

*नराणां अधिपतिः नारः मुख्यवायुः, परमप्रेमास्पदत्वेन तदयनत्वाद्वा ।

*'आपो नारा इति प्रोक्ताः आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' ॥ इत्युक्तेः ।

नाराः आपः अयनं यस्य इति वा ।

श्री.– *नारायणः = नरोपयोगिवलादिदाता ।



## २४८. नरः

वि.– *'नयति न रीयत इति वा नरः ॥

र.– *अपः नक्षति भुवं गमयति विसृजति इति नरः । नक्षगतौ इत्यस्मात् कः, क्षकारस्य रेफादेशः ।

स.– ★'ना परिवर्तने' इत्यतः नरः निर्विकारः ।

★'रीङ् क्षये' 'रिप् हिंसायाम्' इत्यतो वा नरः अविनाशी वा ।

श्री.–★नरः = अपां भुवं प्रति नेता ।



असङ्ख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः ॥ २७ ॥

## २४९. असङ्ख्येयः

वि.– ★सङ्ख्यातुमशक्यत्वादसङ्ख्येयः ।

र.– ★असङ्ख्यं समुद्रं उदकानि प्रापयति इति वा, असङ्ख्यं मदं भक्तान् प्रापयति इति वा असंख्येयः । मदः सुखविशेषः ।

स.– ★न विद्यन्ते सङ्ख्येयाः गुणाः यस्य असौ असङ्ख्येयः ।

श्री.–★असङ्ख्येयः = भक्ताय अनन्तसुखदः ।



## २५०. अप्रमेयात्मा

वि.– ★अप्रमेय आत्मा स्वरूपमस्येत्यप्रमेयात्मा ।

र.– ★प्रमातुं योग्यः प्रमेयः, मानं च पर्येषणं, पर्येषणविषयः अपेक्षणीयः । आ समन्तात् प्रमेयः सम्यक् अपेक्षणीयः अप्रमेयः । अप्रमेयं सम्यक् अपेक्षणीयं गुणाढ्यं पुत्रम् आ सम्यक् ददाति इति आत्मा । यद्वा अप्रमेयः प्रमातुं हिंसितुं शत्रुभिः पराभावयितुम् अशक्यः । प्रत्युत तद्विपर्ययस्य सोढा पुत्रः तं ददाति इति अप्रमेयात्मा ।

स.– *अप्रमेया आत्मानः स्वरूपदेहाः, स्वभावाः वा यस्य असौ अप्रमेयात्मा ।

श्री.– *अप्रमेयात्मा = रिप्वपरिभाव्यपुत्रदाता ।



## २५१. विशिष्टः

वि.– *सर्वातिशायित्वाद् विशिष्टः ।

र.– *विशेषेण शिष्टः स्तुतः इति वा विशेषेण शत्रूणां शिष्टः शायिता वा इति विशिष्टः ।

स.– *वि विशिष्टाः ब्रह्मादयः यस्मात् स विशिष्टः ।

श्री.– *विशिष्टः = विशेषस्तुतः ।



## २५२. शिष्टकृत्

वि.– *शिष्टं शासनं तत् करोतीति शिष्टकृत् ।

*शिष्टान् करोतीति वा । विशेष्यस्य सिद्धत्वेऽपि विशेषणद्वारा विशिष्टकरणात् ।

*शिष्टान् करोति पालयतीति वा । सामान्यवचनोऽपि धातुर्विशेषवचनो दृष्टः । कुरु काष्ठानीत्याहरणार्थो यथा तथेहापीति ॥

र.– *शिष्टं शासनं शत्रूणां विदारणं तत् करोति इति शिष्टकृत् ।

स.– *समर्थैः सर्वैरपि कृत्वा कृत्वा उत्तरत्र करणासामर्थ्येन यच्छिष्टं तत् स्वयं पूर्णं करोति इति शिष्टकृत् ।

श्री.– ★शिष्टकृत् = शत्रुशासनकर्ता ।



## २५३. शुचिः

वि.– ★निर्लेपत्वाच्छुचिः ।

र.– ★शुचिः ऊतिः अस्य अस्ति इति शुचिः । ऊतिः स्तुतिः ।

स.– ★शुद्धत्वात् शुचिः

श्री.– ★शुचिः = शुद्धस्तुतिविषयः ।



## २५४. सिद्धार्थः

वि.– ★सिद्धो निर्वृत्तः कामो यस्य स सिद्धार्थः ।

"सत्यकामः" इति श्रुतेः ।

र.– ★सिद्धाः अतीतकालवर्तिनः वर्तमानकालवर्तिनः एष्यत्कालवर्तिनश्च तेषां अर्थः प्राप्यः स्वामी इति सिद्धार्थः ।

स.– ★सिद्धः भक्ताभिलषितदाने अर्थ्यते गम्यते इति सिद्धार्थः ।

★सिद्धश्चासौ अर्थश्च इति वा ।

★सिद्धानां सिद्धिमतां अर्थः धनरूपः वा ।

★सिद्धः अर्थः सृष्ट्यादिप्रयोजनं यस्य इति वा ।

★सिद्धः अर्थः निवृत्तिः अयोग्यानां यस्मात् इति वा सिद्धार्थः ।

श्री.– ★सिद्धार्थः = वर्तमानकालवर्त्यादिस्वामी ।



स.– ★अप्रमेया आत्मानः स्वरूपदेहाः, स्वभावाः वा यस्य असौ अप्रमेयात्मा ।

श्री.– ★अप्रमेयात्मा = रिप्वपरिभाव्यपुत्रदाता ।



## २५१. विशिष्टः

वि.– ★सर्वातिशायित्वाद् विशिष्टः ।

र.– ★विशेषेण शिष्टः स्तुतः इति वा विशेषेण शत्रूणां शिष्टः शायिता वा इति विशिष्टः ।

स.– ★वि विशिष्टाः ब्रह्मादयः यस्मात् स विशिष्टः ।

श्री.– ★विशिष्टः = विशेषस्तुतः ।



## २५२. शिष्टकृत्

वि.– ★शिष्टं शासनं तत् करोतीति शिष्टकृत् ।

★शिष्टान् करोतीति वा । विशेष्यस्य सिद्धत्वेऽपि विशेषणद्वारा विशिष्टकरणात् ।

★शिष्टान् करोति पालयतीति वा । सामान्यवचनोऽपि धातुर्विशेषवचनो दृष्टः । कुरु काष्ठानीत्याहरणार्थो यथा तथेहापीति ॥

र.– ★शिष्टं शासनं शत्रूणां विदारणं तत् करोति इति शिष्टकृत् ।

स.– ★समर्थैः सर्वैरपि कृत्वा कृत्वा उत्तरत्र करणासामर्थ्येन यच्छिष्टं तत् स्वयं पूर्णं करोति इति शिष्टकृत् ।

श्री.– *शिष्टकृत् = शत्रुशासनकर्ता ।



## २५३. शुचिः

वि.– *निर्लेपत्वाच्छुचिः ।

र.– *शुचिः ऊतिः अस्य अस्ति इति शुचिः । ऊतिः स्तुतिः ।

स.– *शुद्धत्वात् शुचिः

श्री.– *शुचिः = शुद्धस्तुतिविषयः ।



## २५४. सिद्धार्थः

वि.– *सिद्धो निर्वृत्तः कामो यस्य स सिद्धार्थः ।

"सत्यकामः" इति श्रुतेः ।

र.– *सिद्धाः अतीतकालवर्तिनः वर्तमानकालवर्तिनः एष्यत्कालवर्तिनश्च तेषां अर्थः प्राप्यः स्वामी इति सिद्धार्थः ।

स.– *सिद्धः भक्ताभिलषितदाने अर्थ्यते गम्यते इति सिद्धार्थः ।

*सिद्धश्चासौ अर्थश्च इति वा ।

*सिद्धानां सिद्धिमतां अर्थः धनरूपः वा ।

*सिद्धः अर्थः सृष्ट्यादिप्रयोजनं यस्य इति वा ।

*सिद्धः अर्थः निवृत्तिः अयोग्यानां यस्माद् इति वा सिद्धार्थः ।

श्री.– *सिद्धार्थः = वर्तमानकालवर्त्यादिस्वामी ।



## २५५. सिद्धसङ्कल्पः

वि.– *सिद्धो निष्पन्नः सङ्कल्पो यस्य स सिद्धसङ्कल्पः ।

"सत्यसङ्कल्पः" इति श्रुतेः ।

र.– *सिद्धाः अनादिसिद्धाः अपौरुषेय्यो गिरः त्वयि सङ्कल्पन्ते सङ्गच्छन्ते इति वा सिद्धाः अतीतकालीनाः वर्तमानकालीनाः एष्यत्कालीनाश्च मनीषाः जनेषु सं सम्यक् कल्पयति इति वा सिद्धसङ्कल्पः ।

स.– *सिद्धसङ्कल्पः भक्ताभिलषितवितरणविषयः यस्य सः ।

श्री.– *सिद्धसङ्कल्पः = त्रिकालसिद्धबुद्धिसम्यक्कल्पकः ।



## २५६. सिद्धिदः

वि.– *सतामसतां च सिद्धिं कर्मफलं यथासम्भवं ददाति खण्डयतीति सिद्धिदः ।

र.– *सिद्धिः युद्धं ऋषीणाम् उक्थार्काणाम् उक्थस्तोत्ररूपाणां ऋचाम् अहं पूर्वम् अहं पूर्वम् इति अहमहमिकया सपर्या (स्पर्धा) ददाति इति सिद्धिदः ।

स.– *सिद्धिं योग्यानां ददाति इति वा, अयोग्यानां द्यति खण्डयति इति वा सिद्धिदः ।

श्री.– *सिद्धिदः = ऋषियुद्धोत्पादकः ।



## २५७. सिद्धिसाधनः

वि.– ★साध्यतेऽनेनेति साधनः सिद्धीनां साधनः सिद्धिसाधनः ॥

र.– सिद्धयः परिचर्याः स्तुतयश्च, ताः आत्मनि साधयति इति साधनः। भक्तकृतपरिचर्याः स्तुतीश्च फलदानाय अङ्गीकरोति, बहुदानसमर्थत्वात् न व्यथते, प्रत्युत हृष्यति इति सिद्धिसाधनः।

स.– ★सिद्धिं मोक्षरूपं फलं साधयति इति सिद्धिसाधनः।

श्री.– ★सिद्धिसाधनः = स्वस्तुतिसाधकः।



वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥ २८ ॥

## २५८. वृषाही

वि.– ★वृषो धर्मः पुण्ययल तदेवाहः द्वादशाहप्रभृतिर्वृषाहः। सोऽस्यास्तीति वृषाही।

र.– ★अपौरुषेयत्वात् श्रेष्ठः वृषः स्तोत्रसमुदायः तेन आ सम्यक् हिनोति वर्धते इति वृषाही।

स.– ★वृषेण धर्मेण आप्यते व्याप्यते इति वृषाही।

श्री.– ★वृषाही = स्तोत्रगणसमृद्धः।



## २५९. वृषभः

वि.– ★वर्षयत्येव भक्तेभ्यः कामानिति वृषभः।

र.– मन्त्रेणाद्भिः संस्कृतत्वात् वृषः श्रेष्ठः सोमरसः भ्रियते सम्भ्रियते यस्मै सः वृषभः ।

स.– ★**वर्षणाद् वृषभः ।**

★**वृषेण धर्मेण कृतेन भाति इति वा वृषभः ।**

श्री.–★**वृषभः = सोमरसभरणनिमित्तः ।**



## २६०. विष्णुः

वि.– ★**सर्वव्यापित्वप्रवेशित्वादेर्विष्णुः ।**

''गतिश्च सर्वभूतानां प्रजानां चापि भारत ।
व्याप्ते मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम ॥
अधिभूतनिविष्टश्च तदिच्छुश्चास्मि भारत ।
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः'' ॥ इति मोक्षधर्मे ।

र.– ★**वि विशिष्टौ षकार–णकार–वाच्यौ बलचेष्टादिपुमर्थौ यस्मात् सः विष्णुः ।**

स.– ★**''स्नु प्रस्रवणे'' इत्यस्मात् 'अन्येभ्योऽपि दृश्यते' इति स्नुः प्रस्रवणम्, विगतः स्नुः यस्य इति वा ।**

★**विशेषेण स्नुः नद्यादीनां यस्मात् इति वा ।**

श्री.–★**विष्णुः = विशिष्टबलचेष्टादिपुमर्थहेतुः ।**



## २६१. वृषपर्वा

वि.– ★"वृषरूपाणि ज्ञेयानि पर्वाण्याहुर्मनीषिणः ।
नरं जिगमिषोः स्थाने वृषवर्पा ततः स्मृतः" ॥

इति वृषपर्वा ॥

र.– ★वृषं स्तोत्रं श्रेष्ठस्तोत्रं धनादिफलेन सम्पूरयति निवासयति इति वृषपर्वा ।

स.– ★वृषः पुण्यं तत्साधनानि पर्वाणि अमावास्यादीनि यस्य असौ वृषपर्वा ।

श्री.– ★वृषपर्वा = स्तोत्रश्रेष्ठधनादिना पूरयन् ।



## २६२. वृषोदरः

वि.– ★वृषो धर्मः प्रजा उदरेऽस्येति वृषोदरः ।

र.– ★वृषान् श्रेष्ठान् परकीयान् राजकुमारान् परकीयैः नृपैः श्रेष्ठैः राजकुमारैः उत् उत्कृष्टं दारयति सङ्गमयति इति वृषोदरः ।

स.– ★वृषोदेन पुण्योदकेन रमत इति वृषोदरः ।

★वृषोदं गङ्गोदकं राति त्रिविक्रमरूपेण ब्रह्माण्डवर्तिभ्यः इति वा ।

★वर्षणाद्वृषः, उद्गतारत्वात् उदरः, वृषश्चासौ उदरश्चेति वा ।

★वृषोदरमिव पृष्ठम् उदरं यस्यासौ इत्यप्याहुः ।

श्री.– ★वृषोदरः = श्रेष्ठास्मदीयैः श्रेष्ठपरकीयानुत्सङ्गमनः ।



## २६३. वर्धनः

वि.– ★देवानां समेधनाद् दैत्यानां छेदनाच्च वर्धनः ।

र.– ★वर्धः भक्तेषु सुखधाता (वः वरणीयं सुखम्, धत्ते इति धः)। शत्रुभ्यः सुखम् अपगमयति इति नः । वर्धश्चासौ नश्च वर्धनः ।

स.– ★वर्धयति स्वीयान् इति वर्धनः ।

★वर् वृतं धनं यस्यासौ इति वा ।

श्री.– ★वर्धनः = सुखधारकः शत्रुसुखापहर्ता च ।



## २६४. वर्धमानः

वि.– ★नित्यप्रवृद्धत्वाद् वर्धमानः ।

र.– ★वर्धं स्तोत्रम् अन्तर्गमयति स्वात्मनि योजयति इति वर्धमानः ।

स.– ★वर्धनं नित्यं इति वर्धमानः ।

श्री.– ★वर्धमानः = स्तोत्रस्वात्मयोजकः ।



## २६५. विविक्तः

वि.– ★जीवजडात्मकात् प्रपञ्चाद् विलक्षण इति विविक्तः ॥

र.– ★पापवियोगकर्ता विविक्तः ।

स.– ★विविक्तः जगद्भिन्नः ।

श्री.– *विविक्तः = पापवियोजकः ।



## २६६. श्रुतिसागरः

वि.– *नद्यः सागर इव श्रुतयोऽस्मिन्निधीयन्त इति श्रुतिसागरः ।

*श्रुतीनां सागरस्य करणाद्वा श्रुतिसागरः ।

र.– *श्रुतिः श्रवणं गुणानां श्रवणं स्तुतिः इति यावत् । श्रुतिभिः सागरः इव परिपूर्णः श्रुतिसागरः ।

स.– *श्रुतिलक्षणः सागरः यस्य इति वा ।

*श्रुतिं वेदं सनोति इति श्रुतिसः, गृणाति इति गरः, श्रुतिसश्चासौ गरश्चेति वा ।

*श्रुतिसागरत्वात् श्रुतिसा, अगैः गोवर्धनादिभी रमते इति अगरः, श्रुतिसश्चासौ अगरश्च श्रुतिसागरः ।

श्री.– *श्रुतिसागरः = स्तोत्रैः सागर इव पूर्णः ।



सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो वृहद्रूपः शिपिविष्टः प्रकाशनः ।। २९ ।।

## २६७. सुभुजः

वि.– *शोभनाः जगद्रक्षाकराः भुजा अस्येति सुभुजः ।

र.– *महान्तः पारमार्थिकाः भुजाः मदाः हर्पविशेपाः यस्य सः सुभुजः ।

स.– *शोभनाः भुजाः यस्य असौ सुभुजः ।

*सु सुखं भोजयति इति वा ।

श्री.–*सुभुजः = पारमार्थिकहर्षविशेषवान् ।



## २६८. दुर्धरः

वि.– *दुःखेन ध्यानकाले धार्यत इति दुर्धरः ।

*दैत्यादिभिर्धारयितुं न शक्यत इति वा दुर्धरः ।

*पृथिव्यादीनि अन्यैर्धारयितुमशक्यानि धारयतीति वा दुर्धरः ।

र.– *शत्रुभिः दुर्धर्षः धर्तुं अशक्यः, ओजस्वी इति दुर्धरः ।

स.– *धारयितुम् अशक्यत्वाद् दुर्धरः ।

श्री.–*दुर्धरः = शत्रुभिर्धर्तुमशक्यः ।



## २६९. वाग्मी

वि.– *शोभना वागस्येति वाग्मी । वेदवाचा मीयते वा ।

र.– *वाचः वेदरूपाः अस्य सन्ति इति वाग्मी ।

स.– *वेदादिरूपवाग्विशिष्टत्वात् वाग्मी ।

श्री.–*वाग्मी = वेदस्वरूपवाग्युक्तः ।



## २७०. महेन्द्रः

वि.– ★महांश्चासाविन्द्रश्चेति महेन्द्रः ।

इन्द्रशब्दार्थ उक्त ऋग्भाष्ये–

"इन्द्रः स परमैश्वर्यादिदमुद्दिश्य च द्रुतेः ।
ददर्शेदं दीप्तिमत्त्वादिदं रातीति वा भवेत्" इति ।

"इदमदर्शमितीम् । तस्मादिदन्द्रो नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण" इति श्रुतेः ।

र.– ★महान् बहुव्याप्तिमान् इदं धनधारां राति ददाति इति इन्द्रः, महांश्च असौ इन्द्रश्च इति महेन्द्रः ।

स.– ★इन्द्रः परमैश्वर्यवान् । इदं विषयजातं उद्दिश्य द्रवणात् सर्वविषयभोगाद्वा इन्द्रः । इदं अभीष्टं राति ददाति इति वा इन्द्रः, महांश्चासौ इन्द्रश्च महेन्द्रः ।

श्री.– ★महेन्द्रः = बहुव्याप्तिमान्, धरादाता च ।



## २७१. वसुदः

वि.– ★वसु धनं ददातीति वसुदः ।

★"अन्नादो वसुदानः" इति श्रुतेः । वसु द्यतीति वा ।

र.– ★वसूनि ददाति आददाति इति वसुदः ।

स.– ★'वसु तोये धने मणौ' इत्युक्तेः धनदो मणिदो वा ।

श्री.– ★वसुदः = धनदाता ।



## २७२. वसुः

वि.– *सर्वत्र वसतीति वसुः । वं वाय्वादीन् सूत इति वा ।

र.– *वसूनि अस्य सन्ति इति वसुः । वसूनां स्वामी भवति इति यावत् वसुः ।

स.– *वसुः वासयति तत्तत्स्थानेषु जनान् वासयति आच्छादयति स्वस्वरूपमिति वा ।

*सर्वत्र वसति इति वा वसुः ।

श्री.– *वसुः = द्रव्यस्वामी ।



## २७३. नैकरूपः

वि.– *अनेकानि रूपाण्यस्येति नैकरूपः । अनेकानि रूपयतीति ।

र.– *एको न भवति इति नैकः, नैकैः वहुभिः अश्वैः रूप्यते उह्यते इति नैकरूपः ।

स.– *नैकानि अनेकानि रूपाणि यस्य असौ नैकरूपः ।

श्री.– *नैकरूपः = वह्वश्वोह्यः ।



## २७४. वृहद्रूपः

वि.– *तत्राप्येकैकं रूपं पूर्णमस्येति वृहद्रूपः ।

र.– *वृहतः पूयमानत्वादिगुणवतः सोमरसान् रूपयति स्वोदरे आरोपयति पिवति इति यावत् वृहद्रूपः ।

स.– *बृहत् रूपं यस्यासौ बृहद्रूपः ।

श्री.– *बृहद्रूपः = गुणवत्सोमरसप्राशकः ।



## २७५. शिपिविष्टः

वि.– *शिपयः पशवः, तेपु प्रविष्टो यज्ञरूपेणेति शिपिविष्टः ।

''यज्ञो वै विष्णुः । पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति'' इति श्रुतेः ।

*शिपयो रश्मयस्तेपु निविष्टो वा ।

र.– *शिपिर्यज्ञसाधनं चरुपुरोडाशादिकं विशति प्रविशति गृह्णाति इति शिपिविष्टः ।

स.– *शिपिपु काष्ठेपु अग्न्यन्तर्यामितया स्थितवान् ।

*यद्वा ''पशवः शिपयः प्रोक्ताः तत्राविष्टोऽन्तरात्मना ।
शिपिविष्टस्ततः प्रोक्तः सर्वान्तर्यामिसंज्ञया'' ॥
इति स्मृतेः ।

'यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति' इति श्रुतेश्च पशुषु स्थितः ।

''शिपिविष्टेषु चाख्यायां हीनरोचोऽपि यो भवेत् ।
तेनाविष्टं च यत्किञ्चित् शिपिविष्टेषु च स्मृतः ।
यास्को मां ऋषिरव्यग्रो नैकयज्ञेषु गीतवान् ।
शिपिविष्ट इति ह्यस्माद्गुह्यनामधरो ह्यहम् ।
स्तुत्या मां शिपिविष्टेति यास्को ऋषिरुदारधीः ।

मत्प्रसादादथो नष्टं निरुक्तमभिजग्मिवान्'' ।

-इति मोक्षधर्मेषु नारायणीये ।

''शिपयो रश्मयो मताः ।

तेषु प्रवेशाद्विश्वेशः शिपिविष्ट इहोच्यते'' ।

इत्युक्तेः रश्मिस्थितो वा ।

**श्री.– ★शिपिविष्टः = हविःप्रवेशकः ।**



## २७६. प्रकाशनः

**वि.– ★प्रकाशयतीति प्रकाशनः ।**

**र.– ★यज्ञकर्तॄणां दातव्यतया दक्षिणां प्रकाशयति प्रेरयति इति प्रकाशनः ।**

**स.– ★प्रकाशयति इति प्रकाशनः ।**

**★प्रकर्षेण कं सुखं अश्नाति इति वा प्रकाशनः ।**

**★प्रकाशं सूर्यादिप्रकाशं नयति इति वा ।**

**श्री.–★प्रकाशनः = यज्ञकर्तृदातव्यदक्षिणाप्रकाशकः ।**



ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।

ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ ३० ॥

## २७७. ओजस्तेजोद्युतिधरः

वि.– ★ओजः प्राणः बलम् तेजः शौर्यादयो गुणाः, द्युतिः कान्तिः तद्धारकत्वादोजस्तेजोद्युतिधरः ।

ओजस्तेज इति नामद्वयं वा ।

र.– ★ओजश्च तेजश्च द्युतिश्च ओजस्तेजोद्युतयः ताः धारयति इति ओजस्तेजोद्युतिधरः ।

स.– ★धरति इति धरः, ओजस्तेजोद्युतीनां पदावष्टम्भनशक्ति-प्रतापप्रकाशानां धरः तथा ।

श्री.– ★ओजस्तेजोद्युतिधरः = सामर्थ्यतेजःप्रकाशकत्वधर्ता ।



## २७८. प्रकाशात्मा

वि.– ★प्रकाशरूप आत्मा यस्य स प्रकाशात्मा ।

र.– ★प्रकाशते इति प्रकाशः स्तुतिः सोमादिश्च तस्य आत्मा भर्ता प्रकाशात्मा ।

स.– ★प्रकाशस्वरूपत्वात् प्रकाशात्मा ।

★प्रकर्षेण कं अश्नाति इति प्रकाशः, आदेयं याति इति आत्मा, प्रकाशश्चासौ आत्मा च इति वा ।

श्री.– ★प्रकाशात्मा = प्रकाशमानधनादिदाता ।



## २७९. प्रतापनः

वि.– ★विश्वं प्रतापयतीति प्रतापनः ।

''तापनी पाचनी चैव शोषणी च प्रकाशनी ।
नैव राजन् रवेः शक्तिः सैव नारायणस्य हि'' ॥ इति पाद्मे ।

र.– ★शत्रून् प्रतापयति इति प्रतापनः ।

स.– ★प्रकर्षेण सूर्यादिषु स्थित्वा तापयति इति प्रतापनः ।

★प्रकर्षेण ततत्वात् प्रतः, अपां समूहः आपं, तं नयति इति अपनः, प्रतश्चासौ अपनश्चेति प्रतापनः ।

श्री.– ★प्रतापनः = शत्रुतापनः ।



## २८०. ऋद्धः

वि.– ★परिपूर्णोऽनादिर्वा ऋद्धः ।

"ऋतं च सत्यं चाभीद्धात्" इति श्रुतिः । न तु वर्द्धनम् ।

"नासौ जजान न मरिष्यति नैधतेऽसौ" इति हि भागवते ।

र.– ★अन्यगमननिरोद्ध्री स्तुतिः रुध् धत्ते इति धः रुधं धत्ते इति रुद्धः ऋद्धः ।

स.– ★ऋद्धः अभिवृद्धः ।

श्री.– ★ऋद्धः = अन्यगमननिरोधकस्तुतिधारकः ।



## २८१. स्पष्टाक्षरः (स्पृष्टाजरः)

वि.– ★स्पष्टान्यक्षराणि सर्वे वेदाः प्रतिपादकत्वेन यस्यासौ स्पष्टाक्षरः ।

र.– ★महास्तोमादिना स्पष्टो ज्ञातः, न जरति जरादिना नाशयुक्तः न भवति इति अक्षरः, स्पष्टश्चासौ अजरश्च इति स्पष्टाक्षरः ।

स.– *स्पष्टाक्षरः स्पष्टानि वेदशास्त्रगतानि अक्षराणि प्रतिपादकानि यस्यासौ तथोक्तः ।

*'ऋद्धस्पष्टाक्षरः' इति पाठे अष्ट ॐ नमो नारायणाय इत्येतानि अक्षराणि यस्यासौ इत्यर्थः ।

श्री.– *स्पृष्टाजरः = स्तोमादिना स्पृष्टः, जरारहितश्च ।



## २८२. मन्त्रः

वि.– *मीयते मिमीते वा मन्त्रः ।

*मन्तॄन् त्रायत इति वा मन्त्रः ।

र.– *मन्तान् मन्तव्यान् उक्थादीन् स्वात्मसन्तोषकत्वेन परिवर्तयति इति मन्त्रः ।

स.– *मानात् त्रायते इति मन्त्रः ।

'मानात् त्राति इति मन्त्रोऽयम्' इति गीतातात्पर्योक्तेः ।

*मननकर्तृत्वाद्वा मन्त्रः ।

श्री.– *मन्त्रः = स्तोत्रादिपरिवर्तकः ।

## २८३. चन्द्रांशुः

वि.– *संसारदुःखतिग्मांशुतापतापितचेतसां चन्द्रांशुः ।

*तेषामाह्लादककिरणो वा चन्द्रांशुः ।

र.– *आह्लादकत्वात् चन्द्राः शरन्मासदिनाभिमानिनः देवाः ते एव अंशाः सेवकाः अस्य इति चन्द्रांशुः ।

स.– *चन्द्रस्य अंशवः यस्मात् सः चन्द्रांशुः ।

*तापार्तानां चन्द्रांशुरिव आह्लादकत्वाद्वा ।

श्री.– *चन्द्रांशुः = आल्हादकदेवसेव्यः ।



## २८४. भास्करद्युतिः

वि.– *भास्कराणां द्युतिरिव द्युतिर्यस्य स भास्करद्युतिः ।

''दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद् भासस्तस्य महात्मनः'' ॥

इति गीतावचनात् ।

तदपि पाकशासनविक्रम इत्यादिवत् प्रत्यायनार्थमेव ।

तथाह्यृग्वेदखिलेषु–

''अनन्तशक्तिः परमोऽनन्तवीर्यः सोऽनन्ततेजाश्च ततस्ततो हि'' इति ।

र.– *भास्करैः मन्त्रद्रष्टृभिः क्रियमाणा द्युतिः परिचर्या यस्मिन् सः भास्करद्युतिः ।

*यद्वा भास्करस्येव उग्राः द्युतयः यस्य सः भास्करद्युतिः ।

स.– *भास्करस्य द्युतिः यस्मात् सः भास्करद्युतिः ।

श्री.– *भास्करद्युतिः = प्रकाशकमन्त्रद्रष्टृपूजाधिकरणः ।



अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥ ३१ ॥

## २८५. अमृतांशूद्भवः

वि.– ★अमृतांशोश्चन्द्रस्योद्भवो यस्मात् सोऽमृतांशूद्भवः ।

र.– ★अमृतांशुः सोमः हविर्धाने स्थितः तस्मिन् उत् उत्कृष्टः भवः भावः कामना यस्य इति अमृतांशूद्भवः ।

स.– ★अमृतांशूद्भवः अमृताया अंशवः यस्य धन्वन्तर्यादिरूपस्य स अमृतांशुः । उद्गतो भवात् संसारात् उत्पत्तेर्वा, उत् उत्कृष्टः भव रुद्रः इन्द्रियादिभ्यो येन इति वा उद्भवः । अमृतांशुश्चासौ उद्भवश्च ।

★अमृतांशोः चन्द्रस्य उद्भवः यस्मात् इति वा ।

श्री.– ★अमृतांशूद्भवः = सोमोत्कृष्टकामनावान् ।



## २८६. भानुः

वि.– ★भारूपत्वाद् भानुः ।

र.– ★भां प्रभां नयति इति भानुः ।

स.– ★भाति इति भानुः ।

श्री.– ★भानुः = प्रभानेता ।



## २८७. शशबिन्दुः (शशिबिन्दुः)

वि.– ★शशं पूर्णसुखं बिन्दुर्लक्षणं यस्य स शशबिन्दुः ।

स.– *चन्द्रस्य अंशवः यस्मात् सः चन्द्रांशुः ।

*तापार्तानां चन्द्रांशुरिव आह्लादकत्वाद्वा ।

श्री.– *चन्द्रांशुः = आल्हादकदेवसेव्यः ।



## २८४. भास्करद्युतिः

वि.– *भास्कराणां द्युतिरिव द्युतिर्यस्य स भास्करद्युतिः ।

''दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद् भासस्तस्य महात्मनः'' ॥

इति गीतावचनात् ।

तदपि पाकशासनविक्रम इत्यादिवत् प्रत्यायनार्थमेव ।

तथाह्यृग्वेदखिलेषु–

''अनन्तशक्तिः परमोऽनन्तवीर्यः सोऽनन्ततेजाश्च ततस्ततो हि'' इति ।

र.– *भास्करैः मन्त्रद्रष्टृभिः क्रियमाणा द्युतिः परिचर्या यस्मिन् सः भास्करद्युतिः ।

*यद्वा भास्करस्येव उग्राः द्युतयः यस्य सः भास्करद्युतिः ।

स.– *भास्करस्य द्युतिः यस्मात् सः भास्करद्युतिः ।

श्री.– *भास्करद्युतिः = प्रकाशकमन्त्रद्रष्टृपूजाधिकरणः ।



अमृतांशूद्भवो भानुः शशविन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥ ३१ ॥

## २८५. अमृतांशूद्भवः

वि.– *अमृतांशोश्चन्द्रस्योद्भवो यस्मात् सोऽमृतांशूद्भवः ।

र.– *अमृतांशुः सोमः हविर्धाने स्थितः तस्मिन् उत् उत्कृष्टः भवः भावः कामना यस्य इति अमृतांशूद्भवः ।

स.– *अमृतांशूद्भवः अमृताया अंशवः यस्य धन्वन्तर्यादिरूपस्य स अमृतांशुः । उद्गतो भवात् संसारात् उत्पत्तेर्वा, उत् उत्कृष्टः भव रुद्रः इन्द्रियादिभ्यो येन इति वा उद्भवः । अमृतांशुश्चासौ उद्भवश्च ।

*अमृतांशोः चन्द्रस्य उद्भवः यस्मात् इति वा ।

श्री.–*अमृतांशूद्भवः = सोमोत्कृष्टकामनावान् ।



## २८६. भानुः

वि.– *भारूपत्वाद् भानुः ।

र.– *भां प्रभां नयति इति भानुः ।

स.– *भाति इति भानुः ।

श्री.–*भानुः = प्रभानेता ।



## २८७. शशबिन्दुः (शशिबिन्दुः)

वि.– *शशं पूर्णसुखं विन्दुर्लक्षणं यस्य स शशविन्दुः ।

''लक्षणं परमानन्दो विष्णोरेव न संशयः ।
अव्यक्तादितृणान्तास्तु विप्रुडानन्दभागिनः'' इति ब्रह्मवैवर्ते ॥

र.– *शशं अत्युद्रिक्तसुखं तदस्य साध्यत्वेन अस्ति इति शशी आह्वानं, तत् वेत्ति जानाति लभते वा इति शशिबिन्दुः ।

स.– *'ज्ञानज्ञानः सुखसुखः' इति श्रुतेः अत्यन्तसुखात्मकत्वात् शशः। ववयोरभेदात् विन्दुर्ज्ञानी, शशश्चासौ विन्दुश्चेति तथा ।

*मृगयायां शशस्य बिन्दुः यस्य इति वा ।

श्री.– *शशिबिन्दुः = अत्युत्कृष्टसुखसाधनाह्वानवेत्ता ।



## २८८. सुरेश्वरः

वि.– *देवतानां शोभनधनवतां शोभनदातॄणां वेश्वरः सुरेश्वरः ॥

र.– *सु सम्यक् रमते इति सुखानुभवयोग्यो जनः सुरः तस्य ईश्वरः स्वामी इति सुरेश्वरः ।

स.– *सुरेश्वरः सुष्ठु राजत इति सुरः, अश्नुते जगत् इति ईश्वरः, सुरश्चासौ ईश्वरश्च सुरेश्वरः ।

*सुराणां ईश्वर इति वा ।

श्री.– *सुरेश्वरः = सुखानुभवयोग्यजनस्वामी ।



## २८९. औषधं

वि.– *संसाररोगभेषजत्वादौषधम् ।

★उष्टानां निधिरौषधम् ।

''संसारे दह्यमानानामाश्रयत्वात् स औषधम्'' इति वचनात् ॥

र.– ★औपधस्य पुरोडाशादेः ग्राहकः रक्षकः औपधः । (औपधीनां इदं औषधम् चरुपुरोडाशादिद्रव्यम्) ।

स.– ★'उष्टानां निधिः औपधम्' इति गीतातात्पर्योक्तेः । उष्टानां तापत्रयदग्धानां आश्रयत्वात् औपधम् ।

श्री.– ★औषधं = पुरोडाशादिग्राहकः ।



## २९०. जगतःसेतुः

वि.– ★जगत उत्तारणहेतुत्वादसम्भेदत्वाद्वा सेतुरिव जगतः सेतुः ।

''एष सेतुर्विधरण एषां लोकानामसम्भेदाय'' इत्यादिश्रुतेः ।

र.– ★जगतः सखिजनस्य सेतुः वितरणसमर्थः (विधरणसमर्थः) आश्रयः सौभ्रात्रादिमान् इति यावत् जगतःसेतुः ।

स.– ★(अस्य नाम्नः अर्थः मूले न दृश्यते)

श्री.– ★जगतःसेतुः = सखिजनस्य वितरणसमर्थः ।



## २८९. सत्यधर्मपराक्रमः

वि.– ★सत्या अबाधिताः धर्माः ज्ञानादयो गुणाः पराक्रमश्च यस्य स सत्यधर्मपराक्रमः ।

र.– ★सत्याः चित्रतमाः धर्माः जगत्सर्गादयो गुणाः यस्य सः

सत्यधर्मः पराक्रमयितुं आयुधविशेषं पराक्रान्तवान् गृहीतवान् इति पराक्रमः सत्यधर्मश्चासौ पराक्रमश्च इति सत्यधर्म-पराक्रमः ।

स.– 'नोक्तपूर्वं मया क्षुद्रमलीकं वा कदाचन ।
ऋता ब्रह्मसुता सा मे सत्या देवी सरस्वती ।
सच्चासच्चेति कौन्तेय मयावेशित आत्मनि ।
पौष्करे ब्रह्मसदने सत्यं मां ऋषयो विदुः ।' इति मोक्षधर्मोक्तेः,

सत्यवचनाद्वा मूर्तामूर्तजगदाश्रयत्वाद्वा सत्यः । धारकत्वात् धर्मः । पराक् रमते इति पराक्रमः । सत्यश्चासौ धर्मश्चासौ पराक्रमश्चेति तथा ।

*सत्याः धर्मपराक्रमाः यस्य इति वा ।

श्री.–*सत्यधर्मपराक्रमः = चित्रजगत्सर्जनादिगुणः शत्रून्हन्तुं आयुधधारकश्च ।



भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत् कान्तः कामः कामप्रदः प्रभुः ॥ ३२ ॥

## २९२. भूतभव्यभवन्नाथः

वि.– *भूतभव्यभवतो लोकानुत्पत्त्यादिनाऽऽशास्ते, तेपामीष्टे वा, तैर्याच्यते वेति भूतभव्यभवन्नाथः ॥

र.– *भूतं प्रसिद्धं वज्रायुधं, भव्यं नवं निशितत्वादिगुणविशिष्टं, भावयति इति भवत्, ऋणपरिहाराय सर्वैः नाथ्यते याच्यते इति नाथः । भूतभव्यभवंश्चासौ नाथश्च इति भूतभव्यभवन्नाथः ।

स.– ★भुवि ऊता भृता भवः संसारः येपाम् अस्ति इति भविनः, अभाः ज्ञानशून्याः वनः भक्ताः । वन सम्भक्तौ इत्यतः क्विप् । भूतभव्यभवनः तेपां नाथः तैः नाथ्यते इति 'वा भूतभव्यभवन्नाथः ।

श्री.–★भूतभव्यभवन्नाथः = प्राक्सिद्धवज्रादेः निशितत्वकर्ता - ऋणपरिहारार्थं प्रार्थ्यश्च ।



## २९३. पवनः

वि.– ★पवत इति पवनः ।

★पालकैर्वननीयत्वाद्वा पवनः ।

र.– ★पुनाति, भक्तजनेपु स्थितं पापं परिहृत्य तान् पवित्रयति, इति पवनः ।

स.– ★पान्तीति पाः राजानः तान् वनति भाग्यदानेन इति पवनः ।

श्री.–★पवनः = भक्तपावित्र्यकारी ।



## २९४. पावनः

वि.– ★शोधकत्वात् पावनः ।

★पवनं पावयतीति वा ।

''भीषाऽस्माद् वातः पवते'' इति श्रुतेः ।

र.– *पान्ति इति पाः मन्वाद्याः चक्रवर्तिनः तेषां अवनानि रक्षणादिरूपकर्माणि यस्य सः पावनः ।

स.– *पावयति शोधयति इति पावनः ।

*यद्वा पाः राजानः तेभ्यो अवनं यस्मात् पावनः ।

श्री.–*पावनः = मन्वादिरक्षणरूपकर्मवान् ।



## २९५. अनलः (अनिलः)

वि.–*अलं परिसमाप्तिरस्य न विद्यत इत्यनलः ।

*अनान् प्राणान् लुनातीति वाऽनलः ।

र.– *अम् उदकं नितरां लाति ददाति इति अनिलः ।

स.– *न विद्यते अलं वारणं यस्य असौ अनलः ।

*अनं मुख्यप्राणं लाति भक्तत्वेन इति अनलः ।

*अला जगत्सृष्ट्यादौ पर्याप्तिविषयिणी भूतबुद्धिः न विद्यते यस्य सः अनलः ।

श्री.–*अनिलः = उदकान्नदाता ।



## २९६. कामहा

वि.–*कामं मुमुक्षूणां विषयेच्छां दुष्टं वा मनोरथं हन्तीति कामहा ।

र.– *काम्यते इति कामः अन्नं, कामम् इष्टं अन्नं हापयति प्रापयति इति कामहा ।

स.– ★कामं हन्ति इति कामहा ।

★कुसिनः अमः रोगः कामः, तं हन्ति इति कामहा ।

श्री.–★कामहा = अन्नादिप्रापकः ।



## २९७. कामकृत्

वि.– ★सतां मनोरथं करोतीति कामकृत् ।

★स्मरं जनयतीति वा कामकृत् ।

र.– ★आ समन्तात् मानम् आमः वृद्धिः । कं सुखं प्रति आमं वृद्धिं यज्ञेषु अभिव्यक्तं करोति इति कामकृत् ।

स.– ★कामं भक्ताभिलषितं करोति इति कामकृत् ।

श्री.–★कामकृत् = भक्तसुखवृद्धिकारी ।



## २९८. कान्तः

वि.– ★प्रियत्वात् कान्तः ।

"प्रियं हृदयमुत्सिक्तं कान्तमित्यभिधीयते" इत्यभिधानात् ।

"तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयः" इत्यादि श्रुतेः ।

"प्राणबुद्धिमनःस्वात्मदेहापत्यधनादयः ।
यत्सम्पर्कात् प्रिया आसंस्ततः को न्वपरः प्रियः" ॥

इति भागवते ।

★कं सुखम् । "प्रीतिः सुखं कं आनन्दः" इत्यभिधानात् । तस्यान्तोऽवधिरिति वा कान्तः ।

र.– ★इच्छाविपयत्वात् कान्तः (युद्धादौ अपेक्षणीयः) ।

स.– ★कस्य ब्रह्मादिसुखस्वरूपस्य अन्तः निर्णयः यस्माद् इति कान्तः ।

★दैत्यानां कस्य सुखस्य अन्तः नाशः यस्माद् इति वा कान्तः ।

★के समुद्रोदके अन्तति बध्नाति इति वा कान्तः ।

श्री.– ★कान्तः = युद्धादावपेक्षणीयः ।



## २९९. कामः

वि.– ★काम्य इति कामः ।

★यद्वा न विद्यते मा परिमितिरस्येति अमः, केनामः कामः । अपरिमितसुख इति यावत् ।

र.– ★कं ब्रह्माण्डम् आ समन्तात् माति निर्माति इति कामः ।

स.– ★काम्यते जनैः इति कामः ।

★केन चतुर्मुखेन अम्यते गम्यते इति कामः ।

★केन वायुना अम्यते गम्यते इति कामः ।

'स एनान् ब्रह्म गमयति' इति श्रुतेः ।

'विद्युत्पतिर्वायुरेव नयेद् ब्रह्म न चापरः ।
कुतोऽन्यस्य भवेच्छक्तिः तमृते प्राणनायकम् ।' इति स्मृतेश्च ।

श्री.– ★कामः = ब्रह्माण्डनिर्माता ।



### ३००. कामप्रदः

वि.– ★भक्तानां कामान् प्रकर्षेण ददातीति कामप्रदः ।

र.– ★कामं कामितं तनुप्रजादिकं प्रददाति कल्पयति इति कामप्रदः ।

स.– ★कामं काम्यं प्रददाति इति कामप्रदः ।

श्री.– ★कामप्रदः = इच्छितकल्पकः ।



### ३०१. प्रभुः

वि.– ★प्रभुः समर्थः ।

"प्रभुरीशः समर्थश्च" इत्यभिधानात् ।

र.– ★प्रकृष्टं देवत्वं देवेषु भावयति इति प्रभुः ।

स.– ★प्रकर्षेण भवति इति प्रभुः ।

श्री.– ★प्रभुः = वेदेभ्य एव प्रकृष्टदेवत्वदाता ।



युगादिकृद् युगावर्तो नैकमायो महाशनः ।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ३३ ॥

### ३०२. युगादिकृत्

वि.– ★युगादेः कालभेदस्य कर्तृत्वाद् युगादिकृत् ।

'युगस्याऽऽदिं करोतीति वा ।

"सर्वे निमेषा जज्ञिरे" इत्यादिश्रुतेः ।

★युगादेरादिमिथुनस्य सरस्वतीब्रह्माख्यस्य कर्ता वा ।

र.– ★युजः सुखस्य आदिं समन्तात् भोक्तारं करोति इति युगादिकृत् ।

स.– ★युगादिकालभेदं करोति इति तथा ।

श्री.–★युगादिकृत् = सर्वतो सुखभोक्तृकारी ।



## ३०३. युगावर्तः

वि.– ★कृतादीनि युगान्यावर्तयतीति युगावर्तः ।

र.– ★अभीष्टजातं युज्यते सम्बध्यते अनेन इति युक् यज्ञः दानं च । तत् आवर्तयति पुनःपुनः प्रवर्तयति इति युगावर्तः ।

स.– ★युगानि कृतादीनि आवर्तयति इति युगावर्तः ।

श्री.– ★युगावर्तः = यज्ञदानप्रवर्तकः ।



## ३०४. नैकमायः (अनेकमायः)

वि.– ★अनेकाः मायाः शक्तयोऽस्येति नैकमायः ।

"इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुतेः ॥

र.– ★अनेके मायाः असवः प्राणाः सामर्थ्यानि च यस्य सः अनेकमायः ।

स.– ★नैकमायः अनेकेच्छः ।

श्री.–★अनेकमायः = वहुसामर्थ्यवान् ।



## ३०५. महाशनः

वि.– ★महच्चराचरात्मकमशनमस्येति महाशनः ।

"स यद्यदेवासृजत तत्तदत्तुमाध्रियत । सर्वं वा अत्तीति तददितेरदितित्वम्" इति श्रुतेः ।

"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।
मृत्युर्यस्योपसेचनम्" इति च श्रुतेः ।

र.– ★महतः शत्रून् अश्नाति इति महाशनः ।

स.– ★महद् अशनं यस्य इति महाशनः ।

★महती आशा अन्नाशा यस्यासौ महाशः दूर्वासः, तं प्रति नयति अन्नम् इति महाशनः ।

★मदुद्देशेन यागः भवतु इति महे यज्ञविषये आशा यस्य असौ महाशः तं नयति इति वा ।

श्री.–★महाशनः = महाशत्रुनाशनः ।



## ३०६. अदृश्यः

वि.– ★पुरुषप्रयत्नेन द्रष्टुमशक्यत्वाददृश्यः ।

र.– ★स्वतः दृश्यः न भवति इति अदृश्यः ।

स.– ★दृश्यो न भवति इति अदृश्यः ।

'तदव्यक्तमाह हि' इत्युक्तेः ।

श्री.–★अदृश्यः = दृष्ट्यगोचरः ।



### ३०७. व्यक्तरूपः (अव्यक्तरूपः)

वि.– ★निजशक्त्या भक्तानां व्यक्तं रूपमस्येति व्यक्तरूपः ।

"नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः ।
तमृते परमात्मानं कः पश्येतामितं प्रभुम्" ॥
इति नारायणाध्यात्मे ॥

र.– ★व्यक्तं ब्रह्माण्डादिकं रूपयति निर्माति इति व्यक्तरूपः ।

स.– ★अव्यक्तं रूपं यस्य असौ अव्यक्तरूपः ।

श्री.–★व्यक्तरूपः = ब्रह्माण्डनिर्माता तद्गतनिर्माता चेत्यर्थः ।



### ३०८. सहस्रजित्

वि.– ★सहस्राण्यसुराणां जयतीति सहस्रजित् ।

र.– ★सहस्रं देशकालादिव्यवहितम् अव्यवहितं च सर्वं जयति प्रापयति इति सहस्रजित् ।

स.– ★सहस्रं असुराणां जयति इति सहस्रजित् ।

श्री.–★सहस्रजित् = पूर्णान्नप्रापकः ।



### ३०९. अनन्तजित्

वि.– ★अनन्तान् जयतीत्यनन्तजित् ।

र.– ★अनन्तानि भोग्यानि जयति इति अनन्तजित् ।

स.– ★अनन्तानि वस्तूनि जयति लभत इति अनन्तजित् ।

श्री.–★अनन्तजित् = अनन्तभोग्यजेता ।



इष्टो विशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत् कर्ता विश्वबाहुर्महीधरः ॥ ३४ ॥

## ३१०. इष्टः

वि.– ★यज्ञैः पूजितत्वादिष्टः ।

★परमानन्दरूपत्वाद् वा ।

र.– ★परमेष्टसुखरूपत्वात् इष्टः ।

★यद्वा वेदवाचां प्रतिपादयितुं इष्ट इति इष्टः ।

स.– ★यज्ञेन पूजितत्वात् इष्टः ।

★प्रियत्वात् इष्टः ।

श्री.–★इष्टः = परमप्रियः ।



## ३११. विशिष्टः

वि.– ★विशेषेण गुरुणा शिष्यान् प्रत्युपदिष्ट इति विशिष्टः ।

★विशेषेण प्रळये शिष्ट इति वा ।

र.– ★ज्ञानानन्दात्मकत्वेन वि उत्कृष्टतया शिष्टः वेदवाक्यैः विहित इति विशिष्टः ।

स.– ★विशेषेण शिष्टाः यस्मात् इति वा ।

★विशेषेण प्रलये अवशिष्ट इति वा विशिष्टः ।

श्री.– ★विशिष्टः = उत्कृष्टतया वेदवाक्यविहितः ।



## ३१२. शिष्टेष्टः

वि.– ★शिष्टैरिष्टः पूजितः शिष्टेष्टः ।

★शिष्टानामिष्टः प्रिय इति वा ।

★शिष्टा इष्टाः प्रिया यस्येति वा शिष्टेष्टः ।

''प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः'' इति भगवद्वचनात् ।

र.– ★वेदे शिष्टानां मुक्तानां देवर्षिजनानाम् इष्टं कामपूरणं यस्मात् सः इति शिष्टेष्टः ।

स.– ★शिष्टैः इष्टः पूजितः शिष्टेष्टः ।

★शिष्टा प्रलयकाले अवशिष्टा रमा यस्यासौ शिष्टेष्टः ।

श्री.– ★शिष्टेष्टः = मुक्तकामपूरकः ।



## ३१३. शिखण्डी

वि.– ★शिखण्डो बर्हमस्यास्तीति शिखण्डी गोपालवेषधरः ।

★शिनो विषयसुखासक्तान् खण्डयतीति शिखण्डी ।

र.– ★शं सुखं तदेव अतिशयितं शि तस्य खण्डः खण्डनम् अस्य अस्ति, शत्रूणाम् अतिशयितं सुखं खण्डयति इति शिखण्डी ।

स.– *शिखण्डी बाल्ये कृष्णरूपेण चूडाधारी बर्हधारी वा ।
*शिनः सुखिनः खण्डयति इति वा शिखण्डी ।

श्री.– *शिखण्डी = शत्रूणामतिसुखखण्डनः ।



### ३१४. नहुषः

वि.– *भूतानि नह्यति बध्नीते स्वमाययेति नहुषः ।

र.– *नहुं बन्धं सारयति अपगमयति इति नहुषः । यद्वा हुषः भक्षणीयः सः न भवति इति नहुषः ।

स.– *नहुषः दैत्यानां बन्धकः । 'नह् बन्धने' इति धातुः ।

श्री.– *नहुषः = बन्धापसारकः ।



### ३१५. वृषः

वि.– *वर्षति कामानिति वृषः ।

र.– *भक्ताभिलषितं वर्षयति पूरयति इति वृषः ।

स.– *भक्तेष्टवर्षणाद् वृषः ।

श्री.– *वृषः = भक्तकामवर्षकः ।



### ३१६. क्रोधहा

वि.– *साधूनां क्रोधं हन्तीति क्रोधहा ।

र.– *क्रोधेन शत्रून् निहन्ति इति क्रोधहा ।

स.– *क्रोधस्वरूपान् दैत्यान् हन्ति इति क्रोधहा ।

*क्षमानिधित्वात् क्रोधं हन्ति इति वा ।

श्री.– *क्रोधहा = क्रोधेन शत्रुहन्ता ।



## ३१७. क्रोधकृत्

वि.– *असाधूनां क्रोधं करोतीति क्रोधकृत् ।

र.– *क्रं च उधं च क्रोधे द्यावापृथिव्यौ, ते आत्मनि करोति संस्थापयति इति क्रोधकृत् ।

स.– *असाधुषु क्रोधं करोति इति क्रोधकृत् ।

*क्रोधं कृणोति इति वा क्रोधकृत् । 'कृ हिंसायाम्' ।

श्री.– *क्रोधकृत् = द्यावाभूमीस्थापकः ।



## ३१८. कर्ता

वि.– *करणात् कर्तनाद्वा कर्ता ।

र.– *लोकपालादिषु स्थित्वा तदुचिताः क्रियाः करोति इति कर्ता ।

स.– *कर्ता स्वतन्त्रः ।

श्री.– *कर्ता = लोकपालादिकर्मकर्ता ।



### ३१९. विश्वबाहुः

वि.– *विश्वेषामालम्बनत्वेन विश्वे वा बाहवो यस्येति विश्ववाहुः ।

र.– *विश्वेषु समस्तेषु प्रकटीकृताः बाहवः क्रियाः यस्य इति विश्ववाहुः ।

स.– *विश्वस्य वायोः कारणीभूतौ वाहू यस्य सः विश्वबाहुः ।

''सोऽहं वायुं दिशां वत्सम्' इत्यादिश्रुतेः ।

श्री.– *विश्ववाहुः = अखिलेषु क्रियाप्राकट्यकर्ता ।



### ३२०. महीधरः

वि.– *कूर्मरूपेण महीं धारयतीति महीधरः ।

''बिभर्त्यण्डं हरिः कूर्मः'' इत्यादिवचनात् ॥

र.– *मही मेधा वर्णविकारादिः तां धत्ते इति महीधः, महीधं मेधाविनं वत्सनामकं ऋषिं रमयति प्रकाशयति इति महीधरः ।

स.– *धरतीति धरः, मह्याः धरः महीधरः ।

श्री.– *महीधरः = वुद्धिमद्वत्सऋषिप्रकाशनः ।



अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ३५ ॥

### ३२१. अच्युतः

वि.– *विकारशून्यत्वात् अच्युतः ।

र.– ★स्तावकः जनः च्युतः क्षीणः न भवति अस्मात् इति अच्युतः ।

स.– ★अच्युतः च्युतिरहितः ।

श्री.–★अच्युतः = क्षरणरहितः ।



## ३२२. प्रथितः

वि.– ★जगदुत्पादनादिकर्मभिर्विख्यातः प्रथितः ।

र.– ★प्रथितः प्रख्यातः अतिवृद्धः ।

★यद्वा प्रथं प्रथितं गङ्गादिनदीजातं समुद्रं गमयति इति प्रथितः ।

★प्रसिद्धस्य गङ्गादेः समुद्रप्रापकत्वात् प्रथितः ।

★यद्वा उक्तरीत्या प्रथः प्रसिद्धः मन्युः तेन इतः प्राप्तः प्रथितः ।

स.– ★प्रथितः प्रसिद्धः ।

श्री.–★प्रथितः = प्रख्यातः ।



## ३२३. प्राणः

वि.– ★प्रकृष्टचेष्टावत्त्वात् प्राणः ।

''को ह्येवान्यात् कः प्राण्यात्'' इति श्रुतेः ।

र.– ★प्र प्रकृष्टम् अनं चेष्टा दस्युपु वज्रप्रहरणादिरूपाः क्रियाः यस्य सः प्राणः ।

★अथवा आणिः कीलं आणिरिवाणिः चालयितुम् अशक्यः प्राणः ।

स.– ★प्रकृष्टान् आ सम्यक् नयति, स्वलोकमिति प्राणः ।
★आणा सरस्वती तस्याः प्रकृष्टः इति वा ।

श्री.–★प्राणः = प्रकृष्टवज्रप्रहरणादिक्रियः ।



## ३२४. प्राणदः

वि.– ★प्राणं सर्वजगच्चेष्टां जीवनं वा ददातीति प्राणदः ।

र.– ★प्राणं जीवनं इति यावत् तथा च प्राणं जीवनम् उदकं ददाति इति प्राणदः ।

स.– ★प्राणान् ददातीति प्राणदः ।

श्री.–★प्राणदः = उदकदाता ।



## ३२५. वासवानुजः

वि.– ★अदित्यां कश्यपाद् वासवादनु जात इति वासवानुजः ।

★प्राक् शुक्लस्थः पश्चाच्छुक्लं विलाप्य स्वरूपेणैव प्रादुर्भवतीति अनुजः, वासव्यां प्रादुर्भूतो वासवः, वासवश्चासावनुजश्चेति वा ॥

र.– ★वासवं तमोरूपम् असुरम् अनु सम्यक् जयति संहरति इति वासवानुजः ।

स.– ★वसोरपत्यमिति वा, वसूनि रत्नानि अस्य सन्ति इति वा, दैत्यानां वासं वाति नाशयति इति वा वासवः इन्द्रः, तस्य अनुजो वासवानुजः ।

श्री.– *वासवानुजः = स्वानुष्ठानस्थितिनिवारकासुरानुसंहर्ता ।



## ३२६. अपांनिधिः

वि.– *कर्मणामत्र निधानादपां पतिः (निधिः) । 'उदधिः कर्मणामीशः' इति वचनात् ।

र.– *अपाम् अप्कार्याणां घृतदध्यादीनां निधिः पातृत्वेन आश्रयः इति अपांनिधिः ।

स.– *"आपो वै सर्वा देवताः" इति श्रुतेः, अपां देवानां निधिः आश्रयः ।

श्री.– *अपांनिधिः = अप्कार्यघृतादीनां पातृत्वेनाश्रयः ।



## ३२७. अधिष्ठानम्

वि.– *मूलाधारत्वादधिष्ठानम् ।

"अधिष्ठानमिति प्रोक्तं मूलाधारं विचक्षणैः ।
यत्स्थितं दृश्यते वस्तु संस्थानं तदुदीरितम्" ॥ इति वामने ।

र.– *अधि अत्यन्तं मांसादिवत् श्लिष्टतया अवस्थानं यस्य तत् अधिष्ठानं गर्भः । गर्भवत् सर्वदा वीरेषु संश्लिष्टतया वर्तते इति अधिष्ठानम् ।

स.– *अधितिष्ठति अत्र इति अधिष्ठानम् ।

श्री.– *अधिष्ठानं = गर्भवत् सर्वसंश्लिष्टः ।



## ३२८. अप्रमत्तः

वि.– ★अनवधानरहितत्वादप्रमत्तः ।

र.– ★वायुः इव अप्रमत्तः भवति इति अप्रमत्तः ।

स.– ★प्रकर्षेण मत्तो न भवति इति अप्रमत्तः ।

श्री.– ★अप्रमत्तः = वायुवत् प्रमादहीनः ।



## ३२९. प्रतिष्ठितः

वि.– ★यावन्तो जीवास्तावतः प्रति वहुरूपत्वेन नियामकतया स्थितः (प्रतिष्ठितः) ।

"रूपं रूपं प्रतिरूपो बभूव" इति श्रुतेः ।

★स्वमहिम्नि प्रतिष्ठितत्वाद्वा (प्रतिष्ठितः) ॥

र.– ★नाहुपप्रजा इव नोऽअस्मान् प्रति अभीष्टदातृत्वेन स्थितः इति वा ।

★प्रतिपुरुषं गवादिदातृत्वेन स्थितः इति वा प्रतिष्ठितः ।

स.– ★प्रतिष्ठा अस्य सञ्जातेति तथा ।

श्री.– ★प्रतिष्ठितः = प्रतिपुरुपगवादिदातृत्वेन स्थितः ।



स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो वृहद्भानुरादिदेवः पुरन्दरः ॥ ३६ ॥

### ३३०. स्कन्दः

वि.– ★जगतः स्कन्दनात् स्कन्दः ।

र.– ★सुष्ठु कं सुखं सुखमेव स्कम्, तत् ददाति इति स्कन्दः ।

स.– ★स्कन्दनात् स्कन्दः ।

श्री.– ★स्कन्दः = सुष्ठु सुखदाता ।



### ३३१. स्कन्दधरः

वि.– ★धर्मस्कन्दान् धारयतीति स्कन्दधरः ।

र.– ★स्कं सुखं इतरेभ्यो ददाति इति स्कन्दाः ब्रह्मादयः, तान् धरति विभर्ति, अत्युत्तमः इति स्कन्धधरः ।

स.– ★षण्मुखधरः ।

श्री.– ★स्कन्दधरः = सुखदातृब्रह्मादिधर्ता ।



### ३३२. धुर्यः

वि.– ★सकलजन्मादिलक्षणां धुरं धरतीति धुर्यः ।

र.– ★धुरम् अशेषदेवानाम् अग्रभागं याति वहति इति धुर्यः । अशेषदेवानां दुरन्धरः अग्रगामी इति धुर्यः ।

स.– ★धुरं वहतीति धुर्यः ।

श्री.– ★धुर्यः = अशेषदेवाग्रगामी ।



## ३३३. वरदः (अवरदः)

वि.– *चरानभिमतान् ददातीति वरदः ।

र.– *वरम् उत्तमं ज्योतिः कण्वादिभ्यो ददाति, स्वजोतिर्विषयम् अपरोक्षं ददाति इति वरदः ।

स.– *वरदो मोक्षदः ।

*रुद्रादिदत्तवरान् द्यति खण्डयति इति वरदः ।

*न विद्यते वरो धवो येषां ते अवराः शूर्पणखादिरक्षोदाराः तान् द्यति नासिकाछेदादिना खण्डयति इति वा ।

*हिंसार्थादवतेः अचि अवा दैत्यहिंसका रदा यस्येति अवरदः इत्यपि वदन्ति ।

श्री.– *वरदः = उत्तमज्योतिर्दाता ।



## ३३४. वायुवाहनः

वि.– *वायुं मुख्यप्राणं वाहयति प्रेरयतीति वायुवाहनः ।

*वायुर्वाहनमस्येति वा ।

र.– *गुरुस्थेन वायुना वाहनीया उपदेश्या मतिः पौंस्यादयः गुणाः यस्य सः इति वायुवाहनः ।

स.– *वायुवाहनः, वायुं श्वासवायुं वहन्तीति वायुवाहाः जीवाः,तान् नयतीति तथा ।

*वायुः वाहनं यस्येति वा ।

श्री.– *वायुवाहनः = गुरुस्थवायूपदेशमत्यादिगुणवान् ।



## ३३५. वासुदेवः

**वि.– *वासुदेवशब्दार्थ उक्तः सौकरायणश्रुतौ ।**

''वानात् सूतेर्देवनाद् वासुदेवो
वासाद् द्युतेश्चाद्नात् क्रीडया च ।
बलादसुत्वाद् दातृतो वर्तनाच्च
तं वासुदेवं प्रवदन्ति देवाः'' इति ॥

**र.– *वसुषु आकाशादिद्रव्येषु दीव्यति व्याप्तः इति वसुदेवः वसुदेव एव वासुदेवः ।**

**स.– *वासुदेवः वसुदेवस्य अपत्यम् ।**

अर्थान्तराणि तु कर्मनिर्णयोदाहृतवचनात्–

''वानात् सूतेः देवनाद् वासुदेवः वासाद्युतेः छादनाद् क्रीडया च ।
वलादसुत्वाद् दातृतो वर्तनाच्च तं वासुदेवं प्रवदन्ति वेदाः'' ॥

इति श्रुतेः ।

स्पष्टं तदर्थस्तु कर्मर्णियटीकायामुक्तः । तथाहि–

***वानात् ज्ञानात्, वातेः विच् । सूतेः उत्पादनात् सूतेर्डुः । देवनात् क्रीडादेः दीव्यतेः अच् । वाश्चासौ सुश्चासौ देवश्चेति विग्रहः ।**

***वासात् सर्वत्र वासकर्तृत्वात् सर्ववासाधिकरणत्वाद्वा, 'वस निवासे' इत्यस्मात् उण्, द्युतेः देवः वासुश्चासौ देवश्चेति द्वितीयार्थः ।**

***छादनात् सर्वव्यापनात् अविद्यादिना अनावरणाद्वा, 'वस आच्छादने' इत्यस्मात् उण् । क्रीडया देवः पूर्ववत् विग्रहः इति तृतीयः ।**

*'बलाद्धः, असुत्वात् प्राणरूपत्वात् असुः, दातृतो दातृत्वात् । ददातेरेकारः 'कृन्मेजन्त' इति अव्ययत्वम्, वर्तनात् सर्वत्र वः, 'वृतु वर्तने' अवो ङः, वश्चासौ असुश्चासौ देवश्च इति विग्रहः । इति चतुर्थ इति वा ।

श्री.– *वासुदेवः = आकाशादिद्रव्यव्यापकः ।



## ३३४. बृहद्भानुः

वि.– *"वृहन्तो भानवो यस्य सूर्यचन्द्रादिगामिनः ।
विश्वं जगद् भासयन्ति स वृहद्भानुरुच्यते" ॥
इति वृहद्भानुः ।

र.– *नद्यः वृहन्तः गच्छन्तः प्राप्नुवन्तः भानवः प्रकाशमानाः उक्थादिस्तोत्रविशेषाः यम् इति बृहद्भानुः ।

स.– *बृहन्तः भानवः यस्य सः बृहद्भानुः ।

श्री.– *बृहद्भानुः = गच्छत्प्रकाशमानस्तोत्रविशेषः ।

## ३३७. आदिदेवः

वि.– *आदिः कारणं च देवश्चेति
*आदौ दीव्यतीति चाऽऽदिदेवः ।

र.– *आदिम् आद्यं (अद्यं) सुतं सोमं दीव्यति पिबति इति आदिदेवः ।

स.– *कारणीभूतदेवः ।

श्री.– *आदिदेवः = भक्ष्यसोमप्राशकः ।



## ३३८. पुरन्दरः

वि.– *सुरशत्रुपुराणि दरतीति पुरन्दरः ।

*जीवादिभिः सहोत्क्रामन् शरीरं विनाशयतीति वा पुरन्दरः ।

र.– *पुरं द्यावापृथिव्यादिकं दारयति विदारयति परिवर्तयति इति पुरन्दरः ।

*यद्वा पुरं द्यावापृथिव्यादिकं रथनाभिः इव द्रियते आद्रियते इति पुरन्दरः ।

स.– *पुरं दारयति इति पुरन्दरः ।

श्री.– *पुरन्दरः = द्यावापृथिव्यादरविषयः ।



अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ३७ ॥

## ३३९. अशोकः

वि.– *दुःखरहितत्वात् अशोकः ।

"शोकं मोहं जरां मृत्युमत्येति" इति श्रुतेः ॥

र.– *न विद्यते शोकः यस्य इति अशोकः ।

स.– *न विद्यते शोकः यस्य सः अशोकः ।

श्री.– *अशोकः = शोकरहितः ।



### ३४०. तारणः

वि.– ★आपन्नत्वेन प्रपन्नानापत्समुद्रात् तारयतीति तारणः ।

र.– ★सज्जनान् संसारात् तारयति इति तारणः ।

★यद्वा वसूनि तारयति वितरति ददाति इति तारणः ।

स.– ★तारयति इति तारणः ।

★तारेण प्रच्छावेन णः सुखं यस्मात् सः इति वा ।

★तरणेः अयं तारणः, सूर्यमण्डलान्तर्गतत्वात् सूर्यवंशोद्भवत्वाद्वा ।

श्री.–★तारणः = संसारात् सज्जनतारकः ।



### ३४१. तारः

वि.– ★तारशब्दार्थोऽथर्वशिरस्यभिहितः–

''गर्भजन्मजरामरण(रूप)संसारमहाभयात् तारयतीति तस्मादुच्यते तार इति'' ।

र.– ★तां मधुघृतादिपूर्णां यज्ञक्रियां ऋच्छति गच्छति इति तारः ।

स.– ★तारः तारकः ।

श्री.–★तारः = मधुघृतादिपूर्णक्रियाऽपः ।



### ३४२. शूरः

वि.–★विक्रमत्वाच्छूरः ।

र.– ★शं सुखं अस्मात् भवति इति शुः महतां यज्ञः, तस्मिन् महतां यज्ञे उ उत्कर्षेण रमते इति शूरः ।

स.– ★शुवति सङ्ग्रामं इति वा, शूयते असौ भयार्तैः इति वा, ऊरीकृतसुखो वा ।

श्री.– ★शूरः = सुखसाधनमहद्यज्ञे उत्कर्षं रममाणः ।



## ३४३. शौरिः

वि.– ★शूरकुलोत्पन्नत्वाच्छौरिः ।

र.– ★गतिमत्त्वात् शौ अश्वौ ताभ्यां सोमपानाय यजमानगृहं प्रति रजति गच्छति इति रिः इति शौरिः ।

स.– ★शूरस्य गोत्रापत्यं शौरिः ।

श्री.– ★शौरिः = गतिमत्वात् शशाव्दवाचाभ्याऽमश्वाभ्यां गन्ता ।



## ३४४. जनेश्वरः

वि.– ★जनानां प्राणिनामीश्वरो जनेश्वरः ।

र.– ★गवाश्वहिरण्यादीन् जनयति उत्पादयति ददाति इति जः ईश्वरः अस्य नास्ति इति नेश्वरः, जश्चासौ नेश्वरश्च जनेश्वरः ।

स.– ★जनानां ईश्वरः जनेश्वरः ।

★न जायते इति जनः, अस्य स्त्री ई, याः ईश्वरः ईश्वरः । जनश्चासौ ईश्वरश्च इति वा ।

श्री.– ★जनेश्वरः = गवादिजनयिता स्वस्वामिरहितश्च ।



## ३४५. अनुकूलः

वि.– ★सुजनहितकारित्वादनुकूलः ।

र.– ★सर्वेषाम् अन्तःस्थित्वा अनुकूलः वर्तते इति अनुकूलः ।

स.– ★अनुकूलः भक्तहितकरः ।

★गङ्गादिकूलमनुसृत्य विद्यमानो वा ।

''जलाशयं समारभ्य यावद्धस्तचतुष्टयम् ।
तावन्नारायणक्षेत्रं तत्र सन्निहितो हरिः'' ।। इति स्मृतेः ।

श्री.– ★अनुकूलः = सर्वान्तःस्थित्वा अनुकूलवर्ती ।



## ३४६. शतावर्तः

वि.– ★शतशब्दोऽनन्तवाची । धर्मत्राणाय शतमावर्तनमवतारा अस्येति शतावर्तः ।

★अनन्तान्यावर्तनानि प्राणिनां गतयो यस्मादिति वा (शतावर्तः) ।

र.– ★शतैः उद्वेगकरदुष्टाभिप्रायजनैः आवर्तः वर्जितः इति शतावर्तः ।

स.– ★शतम् अमृतपानयोग्यदेवतागणम् । आ समन्तात् तत्त्वदेवतादिरूपेण प्रवर्तयति इति शतावर्तः ।

★शतम् आवर्ताः तदुपलक्षितजलव्यापाराः यस्मात् इति वा ।

श्री.– ★शतावर्तः = अनेकदुष्टजनवर्जितः ।



## ३४७. पद्मी

वि.– *पद्मं हस्तेऽस्तीति पद्मी ।

*यद्वा पद्मो ब्रह्मा, 'ब्रह्मा पद्मो समुद्दिष्टः पद्मा श्रीरपि चोच्यते' इत्यभिधानात् । सोऽस्य सर्गद्वारत्वेनास्तीति पद्मी ।

र.– *सवनत्रयानुगतः सोमः पद्मः, सः अस्य पेयत्वेन अस्ति इति पद्मी ।

स.– *पद्मम् अस्य अस्ति इति पद्मी ।

*पद्मः ब्रह्मा पुत्रत्वेन अस्य अस्ति इति वा ।

श्री.– *पद्मी = सवनत्रयानुगतसोमपानी ।



## ३४८. पद्मनिभेक्षणः

वि.– *पद्मनिभं तद्वत् विकसितमीक्षणं ज्ञानमस्येति पद्मनिभेक्षणः ।

र.– *सर्वैः अभिगम्यत्वात् पद्मं भर्म सुवर्णम् । तन्निभं तत्सदृशं ईक्षणं तथाविधं शरीरं अस्य अस्ति इति हिरण्यवर्ण-शरीरवान् पद्मनिभेक्षणः ।

स.– *पद्मनिभे ईक्षणे यस्य सः पद्मनिभेक्षणः ।

*पद्मानि सुहृत्त्वेन अस्य सन्ति इति पद्मः सूर्यः, 'अर्श आद्यच्' । नितरां भाः यस्य सः निभः चन्द्रः, तौ ईक्षणे यस्य इति वा । ''भास्वच्चन्द्रमसौ मदीयनयने'' इति स्मृतेः ।

श्री.– *पद्मनिभेक्षणः = हिरण्यवर्णशरीरवान् ।



पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ३८ ॥

## ३४९. पद्मनाभः

वि.– ★पद्मस्य नाभौ कर्णिकायां स्थितः पद्मनाभः ।

★पद्यन्त इति पद्मानि वेदप्रतिपाद्यानि । तेषु श्रेष्ठ इति वा ।

र.– ★पद्मः सोमः सः नाभौ कुक्षौ यस्य सः पद्मनाभः (सोमपानकर्ता इति यावत्) ।

★पद्मानि नयति इति पद्मनः सूर्यः, तस्य आभा इव आभा यस्य सः पद्मनाभः ।

श्री.– ★पद्मनाभः = सोमपानकर्ता ।



## ३५०. अरविन्दाक्षः

वि.– ★अरविन्दसमानाक्षत्वादरविन्दाक्षः ।

र.– ★अर्यते गम्यते इति अरं द्रविणं, विन्दयति प्रापयति इति विन्दः, आ सम्यक् पुरोडाशादेः आश्रयः स्थापनाश्रयः आक्षः । तथा च अरस्य द्रविणस्य विन्दः प्रापकः अरविन्दः । पुरोडाशादेः प्रक्षेपभूमिः आक्षः, अरविन्दश्चासौ आक्षश्च अरविन्दाक्षः ।

स.– ★अराः विन्दति इति अरविन्दं, तदिव अक्षिणी यस्य सः अरविन्दाक्षः । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ।

★रविन्दम् अन्धकारः तन्न भवति इति अरविन्दः प्रकाशः ज्ञानं इति यावत् । तदात्मकानि अक्षीणि यस्य इति वा ।

"अन्धकारो रविन्दान्धतिमिरं तमः उच्यते" इति उत्पलमालोक्तेः ।

**श्री.– ★अरविन्दाक्षः = द्रविणप्रापकः, पुरोडाशादिप्रक्षेपभूमिश्च ।**



## ३५१. पद्मगर्भः

**वि.– ★जगत्कारणं पद्मं प्रळये सूक्ष्मतया गर्भे यस्य सः पद्मगर्भः ।**

"अन्तर्गतोऽर्थो रजसा तनीयान्" इत्यादि भागवते ।

"उदकं वायुना शुष्कं भिन्नं पद्ममभूद्धरेः" इति च पाद्मे ।

**★चतुर्मुखोत्पत्त्यर्थं गर्भवत् पद्मान्तर्हितत्वाद्वा पद्मगर्भः ।**

"पद्मस्थस्य हरेस्तत्र ब्रह्माऽजनि चतुर्मुखः" इति पाद्मे ।

**र.– ★पद्माः गमनागमनवन्तः प्राणिनः, ते गर्भे कुक्षौ यस्य असौ पद्मगर्भः ।**

**स.– ★पद्मं गर्भे यस्य सः पद्मगर्भः ।**

**★पद्मः चतुर्मुखः गर्भः अन्नं यस्य स इति वा ।**

"भ गर्भो ष नरकेऽन्नेऽग्नौ" इत्यभिधानात् ।

**श्री.– ★पद्मगर्भः = प्राणिगर्भः ।**



## ३५२. शरीरभृत्

**वि.– ★शरीरं प्रकृत्यादि तद् बिभर्तीति शरीरभृत् ।**

"हिंसाहेतुश्च जीवस्य परेण प्रेर्यते च यत् ।
अव्यक्तादि शरीरं तत् क्षेत्रं च क्षीयतेऽत्र यत्' ॥

इति नारायणश्रुतेः ।

''पृथिव्यादि प्रकृत्यन्तं भूतं भव्यं भवच्च यत् ।

विष्णुरेको बिभर्तीदं नान्यस्तस्मात् क्षमो धृतौ'' ॥ इति स्कान्दे ।

र.– ★शरवत् पराधीनप्रवृत्तित्वात् शरः जीवः । यद्वा शीर्यते नित्यं एव अस्मात् इति शरः जीवः । तेन ईरितं स्तोत्रम् ईरम् । तत् बिभर्ति स्वीकरोति इति भृत् । सञ्जीवकृतो-क्थादिस्तोत्रग्रहणपटुः शरीरभृत् यद्वा अस्तोतुः शत्रुजनस्य शरीरं हरति इति शरीरभृत् ।

स.– ★'शीर्यते नित्यमेव' इति स्मृतेः, शरीरं जगत् तत् बिभर्ति इति शरीरभृत् ।

★शरी अमोघशरी ईरः प्रेरकः भृत् धारकश्चेति शरीरभृत् इति वदन्ति ।

श्री.– ★शरीरभृत् = जीवेरितस्तोत्रस्वीकारी ।



## ३५३. महर्द्धिः

वि.– ★महती ऋद्धिर्विभूतिरस्येति महर्द्धिः ॥

र.– ★महती विद्यादिप्राप्तिरूपा ऋद्धिः समृद्धिः यस्मात् सः महर्द्धिः ।

स.– ★महती ऋद्धिः यस्य इति वा ।

★महैः यज्ञाद्युत्सवैः ऋद्धिः यस्य इति वा ।

★महे वलिकृतयज्ञोत्सवे त्रिविक्रमरूपेण अभिवृद्धिः यस्य इति वा महर्द्धिः ।

श्री.– *महर्द्धिः = महाविद्याप्राप्त्यादिरूपसमृद्धिकर्ता ।



### ३५४. ऋद्धः

वि.– *परिपूर्णत्वादृद्धः ।

र.– *ऐहिकामुष्मिकादिसकलाभीष्टप्रदातृत्वादिगुणैः समृद्धः इति ऋद्धः ।

स.– *ऋद्धः ज्ञानानन्दादिगुणैः अभिवृद्धः ।

श्री.– *ऋद्धः = सकलाभीष्टदातृत्वादिगुणसमृद्धः ।



### ३५५. वृद्धात्मा

वि.– *वृद्धः परिपूर्ण आत्मा देहोऽस्येति वृद्धात्मा ।

र.– *वृद्धाः दयालुत्वादिगुणसमृद्धाः आत्मानः ब्रह्माद्याः देवाः सेवकत्वेन यस्य सः वृद्धात्मा ।

*यद्वा वृद्धेषु समृद्धेषु वाजाद्यभीष्टेषु, वाजाद्यभीष्टं दातुम् इति यावत् आत्मा मनः यस्य सः वृद्धात्मा ।

स.– *वृद्धः आत्मा देहो यस्य सः ।

*वृद्धानां गुणवृद्धानां ब्रह्मादीनाम् आत्मा अन्तर्यामी इति वा ।

श्री.– *वृद्धात्मा = दयालुत्वादिगुणयुग्ब्रह्मादिसेव्यः ।



### ३५६. महाक्षः

वि.– *महती चाक्षिणी महान्त्यक्षाणि वाऽस्येति महाक्षः ॥

र.– *महान्ति सुदानशीलानि अक्षाणि मनआदीन्द्रियाणि यस्य सः महाक्षः ।

स.– *महाक्षः महत्यौ अक्षिणी यस्य सः ।

*महान्ति अक्षाणि वा यस्य इति महाक्षः ।

श्री.– *महाक्षः = दानशीलेन्द्रियः ।



### ३५७. गरुडध्वजः

वि.– *गरुडाङ्को ध्वजोऽस्येति गरुडध्वजः ।

र.– *गच्छति अवगच्छति इति गः ज्ञानी, स्वस्मात् अतिशयित-ज्ञानवान्, तेन रुः युद्धम् । रुर्ना युद्धे भवेत् ध्वनिः । डः ध्वनिः, ध्वनिरेव ध्वजं चिह्नं यस्य सः गरुडध्वजः ।

तथा च स्वापेक्षया गुणाधिकेन पुरुषेण युद्ध्यति तज्जयेन नादं करोति, स्वाधिकपुरुपासहिष्णुः इति यावत् । (गरुडध्वजः) ।

स.– *गरुडध्वजः गरुद्भिः डीयत इति गरुडः । 'डीङ् विहायसा गतौ' । अन्येभ्योऽपीति डः । पृषोदरादित्वात् तलोपः ।

*सर्पान् गिलति इति वा गरुडः वैनतेयः ध्वजः यस्य सः गरुडध्वजः ।

श्री.– *गरुडध्वजः = युद्धे ध्वनिचिह्नवान् ।



अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः ॥ ३९ ॥

## ३५८. अतुलः

वि.– *तुला उपमा न विद्यतेऽस्येत्यतुलः ।
"न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुतेः ।

र.– *न विद्यते तुलः सदृशः यस्य सः अतुलः ।

स.– *न विद्यते तुला यस्य इति अतुलः ।

श्री.– *अतुलः = असदृशः ।



## ३५९. शरभः

वि.– *शृणातीति शरभः ।
*शीर्यमाणत्वाच्छरेषु शरीरेपु भातीति वा ।
*श्रेष्ठः शरोऽस्यास्तीति वा शरभः ।
*"शरो ह्यात्मा" इति श्रुतेः
मनः शरं तत्र भातीति वा ।

र.– *शरः सोमरसः तस्मिन् भः भावः यस्य सः इति शरभः ।
यद्वा सोमसारं भुङ्क्ते इति शरभः ।

स.– *शरे प्रलयोदके भाति इति शरभः ।
शरे त्रिपुरघ्नशरे भाति इत्यपि वदन्ति ।

श्री.– *शरभः = सोमसारभुक् ।



## ३६०. भीमः

वि.– *यस्माद् यस्य रूपं दृष्ट्वा सर्वे देवाः सर्वाणि भूतानि च भीत्या पलायन्ते । स्वयं यतः कुतश्चन न विभेति तस्माद् भीमः ।

"भीषाऽस्माद् वातः पवते" इत्यादिश्रुतेः ।

*मुक्तानामानन्ददत्वाद् भीम इति वा ।

र.– *भा दीप्तिः, अतिशयेन दीप्तिः भीः, भीं दीप्तिं दीपनं नियमनं माति निर्माति इति भीमः ।

*सर्वप्राणिनियामक इति भीमः ।

स.– *भृताः माः प्रमाणानि येन व्यासादिरूपेण इति भीमः ।

*बिभेति अस्मात् जन इति वा ।

*भियं भक्तभयं मिनाति हिनस्ति इति वा भीमः ।

श्री.– *भीमः = सर्वप्राणिनियामकः ।



## ३६१. समयज्ञः

वि.– *सृष्ट्यादिसमयं जानातीति समयज्ञः ।

*समः समत्वाख्योपायवान् । "समत्वं योग उच्यते" इति वचनात् । तादृशो यज्ञो यत्पूजार्थः स समयज्ञ इति वा ।

र.– *समं सर्वम् अभीष्टजातं नृम्णः संसिद्ध्यादिरूपं साधुवस्तु-जातं वा यजति ददाति इति समयज्ञः ।

स.– *मया रमया सहितः समः, यदस्ति तज्जानाति इति यज्ञः, समश्चासौ यज्ञश्च इति समयज्ञः ।

*सं सम्यक् अयं भक्तशुभावहविधिं जानाति इति समयज्ञः ।

*समयं भक्ताभीष्टदानकालं जानाति इति वा ।

*समयान् शास्त्राणि जानाति इति वा ।

श्री.– *समयज्ञः = साधुवस्तुदाता ।



## ३६२. हविर्हरिः

वि.– *यज्ञेषु हविर्भागं हरतीति हविर्हरिः ।

''हरत्यघं हि स्मर्तॄणां हविर्भागं क्रतुष्वपि ।
सर्वदेवमयस्तस्माद्धविर्हरिरिति स्मृतः'' ॥ इति भगवद्वचनात् ।

र.– *हूयते एभिः इति हवींषि उक्थादिस्तोत्राणि तानि आत्मनि सुखसाधनतया हरति आहरति इति हरिः, उक्थादिस्तोत्राणि स्वात्मनि सुखसाधकतया अङ्गीकरोति इति यावत् । हविर्हरिः ।

स.– *हवींषि हरति इति तथा ।

श्री.– *हविर्हरिः = आह्वानसाधनस्तोत्रहारी ।



## ३६३. सर्वलक्षणलक्षण्यः

वि.– *सर्वाणि लक्षणानि असाधारणधर्माः यस्य तत् सर्वलक्षणम् । तथाविधं लक्ष्यत इति लक्षणं स्वरूपम्, तत्र साधुः सर्वलक्षणलक्षण्यः ।

*यद्वा सर्वैर्लक्षणैर्ज्ञानम्, तत्र साधुः, सर्वाणि लक्षणान्यस्येति वा सर्वलक्षणः, स चासौ लक्षण्यश्चेति सर्वलक्षणलक्षण्यः ।

र.– *सर्वाणि वस्तूनि लक्षणानि चिह्नानि येषां तानि सर्वलक्षणानि सर्वजगत्सर्जनादिकर्माणि (तैः लक्षिण्यः लक्षणं असाधारणो धर्मः तेन तज्जन्यप्रतीतिः लक्ष्यते) । सर्वजगद्विषयकसर्जनादिबहुकर्माख्यलक्षणजन्यप्रतीतिविपयः बहुकर्मा इति यावत् सर्वलक्षणलक्षिण्यः ।

स.– *सर्वाणि लक्षणानि यानि जगज्जन्मादिकारणत्वादीनि तैर्लक्षण्यः, लक्षितुं योग्यः लक्षण्यः, सर्वेपां लक्षणानि चिह्नानि यस्य असौ सर्वलक्षणः 'सर्वकर्मा सर्वलिङ्गः' इति श्रुतेः । लक्षणे साधुः इति लक्षण्यः । सर्वलक्षणश्चासौ लक्षण्यश्च इति वा सर्वलक्षणलक्षण्यः ।

श्री.– *सर्वलक्षणलक्षण्यः = सर्वजगद्विपयकसर्जनादिबहुकर्माख्य लक्षणजन्यप्रतीतिविपयः ।



## ३६४. लक्ष्मीवान्

वि.– *विभूत्यादिः लक्ष्मीः ।

''स्वतो महत्त्वं तु महो विशेषप्राप्तिशक्तिता ।
विभूतिर्लक्षणोन्नाहो लक्ष्मीशब्देन भण्यते'' ॥ इति ब्रह्मतर्के ।

सा नित्यमस्यास्तीति लक्ष्मीवान् ।

र.– *शोभा सम्पद्वा लक्ष्मीः सा अस्य अस्ति इति लक्ष्मीवान् ।

स.– *मया रमया सहितः समः, यदस्ति तज्जानाति इति यज्ञः, समश्चासौ यज्ञश्च इति समयज्ञः ।

*सं सम्यक् अयं भक्तशुभावहविधिं जानाति इति समयज्ञः ।

*समयं भक्ताभीष्टदानकालं जानाति इति वा ।

*समयान् शास्त्राणि जानाति इति वा ।

श्री.– *समयज्ञः = साधुवस्तुदाता ।



## ३६२. हविर्हरिः

वि.– *यज्ञेषु हविर्भागं हरतीति हविर्हरिः ।

"हरत्यघं हि स्मर्तॄणां हविर्भागं क्रतुष्वपि ।
सर्वदेवमयस्तस्माद्धविर्हरिरिति स्मृतः" ॥ इति भगवद्वचनात् ।

र.– *हूयते एभिः इति हवींषि उक्थादिस्तोत्राणि तानि आत्मनि सुखसाधनतया हरति आहरति इति हरिः, उक्थादिस्तोत्राणि स्वात्मनि सुखसाधकतया अङ्गीकरोति इति यावत् । हविर्हरिः ।

स.– *हवींषि हरति इति तथा ।

श्री.– *हविर्हरिः = आह्वानसाधनस्तोत्रहारी ।



## ३६३. सर्वलक्षणलक्षण्यः

वि.– *सर्वाणि लक्षणानि असाधारणधर्माः यस्य तत् सर्वलक्षणम् । तथाविधं लक्ष्यत इति लक्षणं स्वरूपम्, तत्र साधुः सर्वलक्षणलक्षण्यः ।

*यद्वा सर्वैर्लक्षणैर्ज्ञानम्, तत्र साधुः, सर्वाणि लक्षणान्यस्येति वा सर्वलक्षणः, स चासौ लक्षण्यश्चेति सर्वलक्षणलक्षण्यः ।

र.– *सर्वाणि वस्तूनि लक्षणानि चिह्नानि येषां तानि सर्वलक्षणानि सर्वजगत्सर्जनादिकर्माणि (तैः लक्षिण्यः लक्षणं असाधारणो धर्मः तेन तज्जन्यप्रतीतिः लक्ष्यते) । सर्वजगद्विषयकसर्जनादिबहुकर्माख्यलक्षणजन्यप्रतीतिविषयः बहुकर्मा इति यावत् सर्वलक्षणलक्षिण्यः ।

स.– *सर्वाणि लक्षणानि यानि जगज्जन्मादिकारणत्वादीनि तैर्लक्षण्यः, लक्षितुं योग्यः लक्षण्यः, सर्वेषां लक्षणानि चिह्नानि यस्य असौ सर्वलक्षणः 'सर्वकर्मा सर्वलिङ्गः' इति श्रुतेः । लक्षणे साधुः इति लक्षण्यः । सर्वलक्षणश्चासौ लक्षण्यश्च इति वा सर्वलक्षणलक्षण्यः ।

श्री.– *सर्वलक्षणलक्षण्यः = सर्वजगद्विषयकसर्जनादिबहुकर्माख्य लक्षणजन्यप्रतीतिविषयः ।



## ३६४. लक्ष्मीवान्

वि.– *विभूत्यादिः लक्ष्मीः ।

''स्वतो महत्त्वं तु महो विशेषप्राप्तिशक्तिता ।
विभूतिर्लक्षणोत्साहो लक्ष्मीशब्देन भण्यते'' ।। इति ब्रह्मतर्के ।

सा नित्यमस्यास्तीति लक्ष्मीवान् ।

र.– *शोभा सम्पद्वा लक्ष्मीः सा अस्य अस्ति इति लक्ष्मीवान् ।

स.– *लक्षयति पश्यति भक्तान् इति लक्ष्मीः । ''लक्ष दर्शनाङ्क-नयोः'' ''लक्षे मुट् च'' इति ईप्रत्ययः तस्य च मुडागमः ।

*लक्ष्मीः रमा सम्पत्तिः शोभा वा अस्य अस्ति इति ।

श्री.– *लक्ष्मीवान् = जयादिशब्दितशोभावान् ।



## ३६५. समितिञ्जयः

वि.– *समितिं युद्धं जयतीति समितिञ्जयः ।

*मितेर्जयेन सहितो वा ।

र.– *समितिं वाजादिसमूहं जयति ददाति इति समितिञ्जयः ।

स.– *समितिं युद्धं जयति इति समितिञ्जयः ।

श्री.– *समितिञ्जयः = वाजादिभोग्यसमूहदः ।



विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥ ४० ॥

## ३६६. विक्षरः

वि.– *विगतः क्षरो विनाशः क्षरणं वा यस्य स विक्षरः ।

*विशेषतो ददाति इति विक्षरः ।

र.– *क्षरः क्षरणं विनाशः विगतः क्षरः यस्मात् सः विक्षरः ।

स.– *विगतः क्षरः नाशः यस्य असौ ।

*विशेषेन क्षरः भक्ताभिलषितदानं यस्य इति वा ।

श्री.–*विक्षरः = अविनाशी ।



## ३६७. रोहितः

वि.– *स्वच्छन्दतया रोहितां मूर्तिं वहन् रोहितः ।

*प्रादुर्भवतीति वा ।

*लोहितवर्णो वा ।

र.– *रक्तवर्णत्वात् रोहितः ।

स.– *रोहितः लोहितवर्णः ।

श्री.–*रोहितः = रक्तवर्णः ।



## ३६८. मार्गः

वि.– *मुमुक्षवो यं मार्गयन्ति स मार्गः ।

*परमानन्दो येन प्राप्यते स मार्ग इति वा ।

र.– *मुमुक्षूणां मार्ग इव मार्गः स्वात्मप्रापकः स्वयम् एव इति मार्गः ।

स.– *मृगयन्ति शास्त्रादिना विचारयन्ति इति मृगाः ज्ञानिनः तेषां अयं मार्गः ।

*मारयति लिङ्गशरीरं गमयति अपवर्गं इत्यप्याहुः ।

श्री.–*मार्गः = स्वात्मप्रापकः ।



स.– *लक्षयति पश्यति भक्तान् इति लक्ष्मीः । "लक्ष दर्शनाङ्कनयोः" "लक्षे मुट् च" इति ईप्रत्ययः तस्य च मुडागमः ।

*लक्ष्मीः रमा सम्पत्तिः शोभा वा अस्य अस्ति इति ।

श्री.– *लक्ष्मीवान् = जयादिशब्दितशोभावान् ।



## ३६५. समितिञ्जयः

वि.– *समितिं युद्धं जयतीति समितिञ्जयः ।

*मितेर्जयेन सहितो वा ।

र.– *समितिं वाजादिसमूहं जयति ददाति इति समितिञ्जयः ।

स.– *समितिं युद्धं जयति इति समितिञ्जयः ।

श्री.– *समितिञ्जयः = वाजादिभोग्यसमूहदः ।



विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ।। ४० ।।

## ३६६. विक्षरः

वि.– *विगतः क्षरो विनाशः क्षरणं वा यस्य स विक्षरः ।

*विशेषतो ददाति इति विक्षरः ।

र.– *क्षरः क्षरणं विनाशः विगतः क्षरः यस्मात् सः विक्षरः ।

स.– *विगतः क्षरः नाशः यस्य असौ ।

*विशेषेन क्षरः भक्ताभिलषितदानं यस्य इति वा ।

श्री.–★विक्षरः = अविनाशी ।



## ३६७. रोहितः

वि.– ★स्वच्छन्दतया रोहितां मूर्तिं वहन् रोहितः ।

★प्रादुर्भवतीति वा ।

★लोहितवर्णो वा ।

र.– ★रक्तवर्णत्वात् रोहितः ।

स.– ★रोहितः लोहितवर्णः ।

श्री.–★रोहितः = रक्तवर्णः ।



## ३६८. मार्गः

वि.– ★मुमुक्षवो यं मार्गयन्ति स मार्गः ।

★परमानन्दो येन प्राप्यते स मार्ग इति वा ।

र.– ★मुमुक्षूणां मार्ग इव मार्गः स्वात्मप्रापकः स्वयम् एव इति मार्गः ।

स.– ★मृगयन्ति शास्त्रादिना विचारयन्ति इति मृगाः ज्ञानिनः तेषां अयं मार्गः ।

★मारयति लिङ्गशरीरं गमयति अपवर्गं इत्यप्याहुः ।

श्री.–★मार्गः = स्वात्मप्रापकः ।



## ३६९. हेतुः

वि.– ★सर्वजगन्निमित्तकारणत्वात् हेतुः ।

र.– ★दुष्टसंहारहेतुः अभीष्टदानहेतुः इति हेतुः ।

स.– ★हेतुः जगत्कारणम् ।

श्री.– ★हेतुः = दुष्टसंहारहेतुः ।



## ३७०. दामोदरः

वि.– ★दमादिसाधनेन उदारया गत्या गम्यत इति दामोदरः ।

''दमाद् दामोदरं विदुः'' इति व्यासवचनात् ।

★यशोदया दाम्ना उदरे बद्ध इति वा दामोदरः ।

''दामानि लोकनामानि तानि यस्योदरान्तरे ।
तेन दामोदरो देवः श्रीधरः श्रीधरान्वितः'' ॥ इति वा दामोदरः ।

★दमेन प्राप्य उद्गतदोप इति वा ।

र.– ★द्यति खण्डयति इति दः, शत्रूणां व्यथाकरः इति यावत् । आ सम्यक् मा ज्ञानं येपां ते आमाः सर्वज्ञाः ब्रह्मादि-चेतनगणाः । तेपु उत् उत्कृष्टम् अन्तर्नियामकतया गतः अरः । ब्रह्मादिदेवेपु नियामकतया स्थितः आमोदरः । दश्चासौ आमोदरश्च दामोदरः ।

स.– ★दम्यन्ते अस्मिन् इति दमः प्रलयः । दमस्य इदं दामं लयादिकं तच्च तत् उदं च दामोदं तस्मिन् रमत इति दामोदरः ।

*अथवा 'दम इन्द्रियनिग्रहः,' दमस्य इमे अधिकत्वेन दामाः मुनयः, तेषां उदेन उदकेन रमत इति दामोदरः ।

*ददति इति दाः दानशीलाः तेभ्यः आमोदं राति ददाति इति वा दामोदरः ।

*द्यन्ति खण्डयन्ति इति दाः दैत्याः, तेभ्यः अमोदं दुःखं राति ददाति इति वा ।

*दाम उदरे यस्य इति वा ।

*उत् उत्कृष्टः अः नारायणः एषां ते उदाः जीवाः, "अ इत्युक्तः परो विष्णुः एभ्य उच्चः स एव तत् । त उदाः जीवसङ्घास्स्युः" इति 'तैत्तिरीयभाष्योदाहृतप्रमाणात्, दामाः दमयुक्ताश्च ते उदाश्च दामोदाः, दामोदेषु रमत इति दामोदरः ।

श्री.– *दामोदरः = शत्रुव्यथाकारी, सर्वज्ञब्रह्मादिषु उत्कर्षेणान्तर्गतश्च ।



## ३७१. सहः

वि.– *सर्वानभिभवति क्षमत इति वा सहः ।

र.– *यजमानस्य शत्रून् सहते इति सहः ।

स.– *सर्वं सहते इति सहः ।

श्री.– *सहः = षड्शत्रुमर्षणः ।



### ३७२. महीधरः

वि.– *मही महतीं पूजां वा धत्त इति महीधरः ।

र.– *सर्वधारकत्वेन प्रसिद्धमहीं धरति इति महीधरः ।

स.– *धरति इति धरः, मह्याः धरः महीधरः ।

महीं गिरिरूपेण धत्ते इति व्याख्यानं तु कर्मण्यणि प्राप्ते महीधाररूपापत्या भगवतः जडगिरिरूपत्वानुपपत्या च उपेक्ष्यम् ।

श्री.– *महीधरः = भूधर्ता ।

### ३७३. महाभागः

वि.– *महान् भागो भाग्यं यज्ञभागो वाऽस्येति महाभागः ।

र.– *भगः योद्धृत्वसमीचीनत्वानिन्द्रियत्वपदच्युतिराहित्य-सोमपानकर्तृत्वनाशादिराहित्य-अवार्य-क्रतुत्वादि-महा-माहात्म्यं भगः एव भागः, महान् भागः माहात्म्यम् यस्य सः महाभागः ।

स.– *भगा ऐश्वर्यादिषड्गुणाः तेषां आधारत्वेन अयं भागः, महांश्चासौ भागश्चेति महाभागः ।

*महेषु यज्ञेषु आ सम्यक् भागः यस्य इति वा ।

*महती भाः यस्य सः महाभः, महाभः अगः गोवर्धनः मन्दरो वा यस्य इति वा ।

श्री.– *महाभागः = सातिशयमाहात्म्यः ।



## ३७४. वेगवान्

वि.– *वेगो जवस्तद्वान् वेगवान् ।

"अनेजदेकं मनसो जवीयः" इति श्रुतेः ।

र.– *ऋक्प्रतिपाद्यगुणप्रवाहः वेगः तद्वान् इति वेगवान् ।

स.– *गजेन्द्रादिभक्तरक्षणे वेगोऽस्य अस्ति इति वेगवान् ।

श्री.– *वेगवान् = वेदोक्तगुणप्रवाहवान् ।



## ३७५. अमिताशनः

वि.– *प्रलये सर्वमश्नातीत्यमिताशनः ।

*अनन्तजीवेन्द्रियस्थः सन् अमितं यथेष्टं अश्नाति इति अमिताशनः ।

*अमितं जीवैरननुभूतं सारभूतं अशनमस्येति वा ।

"भुङ्क्ते हरिः शुभान् भोगान् इन्द्रियेषु व्यवस्थितः ।
पूर्णानन्दोऽपि भगवान् क्रीडया भुङ्क्त एव तु" ॥

इति नारायणाध्यात्मे ।

*बह्वाशावतो जीवान्नयतीति वा ।

र.– *अमितं बहुवस्तु अश्नाति विषयीकरोति इति अमिताशः प्रज्ञाविशेषः तं नयति प्रापयति इति अमिताशनः बहुप्रज्ञा-प्रापकः ।

स.– *मितम् अश्नाति इति मिताशनः, स न भवति इति अमिताशनः ।

*अमितम् अश्नाति इति वा ।

श्री.– *अमिताशनः = प्रज्ञाविशेषप्रापकः ।



उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ४१ ॥

### ३७६. उद्भवक्षोभणः (उद्भवः क्षोभणः)

वि.– *जगदुद्भवत्यस्मादिति उद्भवः ।

*सर्गकाले प्रकृतिपुरुषक्षोभकत्वात् क्षोभणः ।

"प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः ।
क्षोभयामास भगवान् सृष्ट्यर्थं जगतो विभुः" ॥ इति कौर्मे ।

*उद्गतः भवः संसारो यस्मादिति वा उद्भवः ।

र.– उद्भवं जननादिक्लेशं क्षोभयति निवारयति इति उद्भवक्षोभणः ।

स.– *उद्गतः भवः यस्मात् उद्भवः ।

*उत्कृष्टः पार्वत्यादिभ्यो भवः येन इति वा ।

*उद्गतो भवात् संसारात् इति वा ।

*प्रकृतिपुरुषक्षोभकत्वात् क्षोभणः ।

श्री.–*उद्भवक्षोभणः = जन्मादिक्लेशनिवारकः ।



### ३७७. देवः

वि.– *सृष्ट्यादिक्रीडादिमान् देवः ।

''एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा'' इति श्रुतेः ।

र.– ***अभीष्टजातं गमयति इति देवः ।**

स.– ***क्रीडादिकर्तृत्वात् स्तुत्यत्वात् गम्यत्वाच्च देवः ।**

'दिवु क्रीडा–विजिगीषा–व्यवहार–द्युति–स्तुति–मोद– मद–स्वप्न–कान्ति–गतिषु' ।

क्रीडाद्यर्थात् कर्तरि पचाद्यच्, स्तुत्यर्थात् गत्यर्थाच्च कर्मणि घञ् ।

तदुक्तं ऋग्भाष्ये–

'द्योतनात् विजयात् कान्त्या स्तुत्या व्यवहृतेरपि ।
गत्या रत्या च देवाख्यम्' इति ।

श्री.– ***देवः = अभीष्टप्रापकः ।**



## ३७८. श्रीगर्भः

वि.– ***श्रीर्गर्भे यस्य स श्रीगर्भः ।**

''यतः प्रसूता जगतः प्रसूती'' इति श्रुतेः ।

र.– ***श्रीः जगद्रचनानुकूलप्रेरणा सा एव गर्भे यस्य सः, जगत्-निर्माणप्रेरणावान् ।**

***यद्वा श्रीः उद्रिक्तानन्दरूपा सम्पत् सा एव गर्भे यस्य सः श्रीगर्भः ।**

स.– ***श्रियः गर्भः यस्मात् इति श्रीगर्भः ।**

श्री.– ***श्रीगर्भः = जगन्निर्माणप्रेरणोदरः ।**



### ३७९. परमेश्वरः

वि.– ★उत्कृष्टश्चासौ ईशनशीलश्चेति परमेश्वरः ।

र.– ★परमश्चासौ ईश्वरश्च इति वा, परमस्य पारमार्थिकस्य सत्यस्य ईश्वरः कर्ता इति वा परमेश्वरः ।

स.– ★परमश्चासौ ईश्वरश्च परमेश्वरः ।

★पाति इति पः, पश्चासौ रमेश्वरश्चेति वा ।

श्री.– ★परमेश्वरः = पारमार्थिकसत्यजगत्कर्ता ।



### ३८०. करणम्

वि.– ★क्रियतेऽनेनेति करणम् ।

र.– ★कः सूर्यः पावकश्च रः कामः णं ज्ञानम् । कश्च रश्च करौ सूर्याग्निकामाः तयोः णं ज्ञानम् यस्मात् तत् करणम् ।

★सूर्यादीन् ज्ञानप्रदानादिना अधिकान् करोति इति करणम् ।

स.– ★करेण सुखं बलं वा यस्य तत् करणम् ।

''णः बलं, णश्च निर्वृतिवाचकः'' इत्युक्तेः ।

श्री.–★करणं = सूर्याग्निज्ञानदः ।



### ३८१. कारणम्

वि.– ★कार्यतेऽनेनेति कारणम् ।

र.– ★सुखवत्त्वात् कं सवनत्रयम् । आ सम्यक् रणः शब्दः तथा

च केषु त्रिकद्रुकेषु सवनेषु आ सम्यक् अध्वर्युहोत्रादि-सप्तसंसत्सु कृतः रणः शब्दः यस्मिन् तत् कारणम् ।

स.– ★कार्यते जगत् अनेन इति कारणम् ।

★कं जलं अरणम् आश्रयः यस्य इति वा ।

★कयोः वायुब्रह्मणोः अरणम् इति वा ।

श्री.– ★कारणं = सवनत्रयसम्यक्शब्दस्थानरूपः ।



## ३८२. कर्ता

वि.– ★करोति कारयतीति वा कर्ता ।

र.– ★स्वतन्त्रः कर्ता (त्वम् एव स्वतन्त्रः)

स.– ★करोति सर्वम् इति कर्ता ।

★बन्धच्छेत्ता वा, ''कृती छेदने'' इति धातोः ।

श्री.– ★कर्ता = स्वातन्त्र्येण कर्तृत्वयुक्तः ।



## ३८३. विकर्ता

वि.– ★विचित्रं वा विशिष्टं वा विविधं वा विशेषतो वा करोति कारयति वा छिनत्तीति वा विकर्ता ।

र.– ★अल्पेनापि सोमादिना विशेषेण तेजोबलादिकार्यस्य कर्ता इति विकर्ता ।

स.– ★विविधं करोति इति वा विकर्ता ।

*विगतः कर्ता यस्य इति वा ।

समासविधेः अनित्यत्वात् नद्यृतश्चेति कबभावः ।

श्री.– *विकर्ता = विशेषात्तेजोबलादिकर्ता ।



## ३८४. गहनः

वि.– *केनापि ज्ञातुमशक्यत्वाद् गहनः ।

र.– *गच्छति इति गम् अश्वादिकं, हं रोचिर्धाम तेजः, गं च हं च गहे, गवाश्वादितेजोधामादिकं नयति प्रापयति इति गहनः ।

स.– *ज्ञातुम् अशक्यत्वाद् गहनः ।

श्री.– *गहनः = गवाश्वादेः तेजोधामादेश्च प्रापकः ।



## ३८५. गुहः

वि.– *प्राणिनां ज्ञानं गूहयतीति गुहः ।

र.– *गूहितः इति गुहः ।

स.– *गूहति आवृणोति स्वरूपम् इति गुहः ।

श्री.– *गुहः = गुप्तः ।



व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥ ४२ ॥

## ३८६. व्यवसायः

वि.– *विशिष्टज्ञानरूपत्वाद् विशिष्टोत्साहसारत्वाद्वा व्यवसायः ।

र.– *वीरप्राप्यत्व-शूरत्वमनःपूर्णत्वलोकपालोपजीव्यत्वविषयकः व्यवसायः निश्चयः यस्मिन् सः व्यवसायः ।

स.– *व्यवसायः निश्चयः तद्वान् तद्रूपो वा ।

श्री.– *व्यवसायः = लोकेशोपजीव्यविपयनिश्चयस्थानरूपः ।



## ३८७. व्यवस्थानः

वि.– *सर्वधर्मव्यवस्थापकत्वाद् व्यवस्थानः ।

र.– *इन्द्रियादीनां व्यवस्थापनं तत्तत्स्थानविपययोः नियमनं तत् यस्मात् भवति सः व्यवस्थानः ।

स.– *विविधा अवस्थाः जाग्रत्–स्वप्न–सुपुस्याद्याः नयति इति व्यवस्थानः । नयतेः डः ।

*दैत्यान् प्रति विरुद्धतया अवस्थानं यस्य इति वा ।

*देवान् प्रति स्थानम् अवस्थानं यस्य इति वा ।

श्री.– *व्यवस्थानः = इन्द्रादीनां तत्तत्स्थानविपयनियमनकर्ता ।



## ३८८. संस्थानः

वि.– *जगदत्र स्थितं दृश्यत इति संस्थानः ।

र.– *तत्तदिन्द्रियदेवेपु संस्थानं स्वरूपाणाम् अवस्थानं यस्य सः संस्थानः ।

स.– ★सम्यक् तिष्ठन्ति इति संस्थाः, अनस्य इमे अनाः, संस्थाः अनाः यस्मात् सः इति वा संस्थानः ।

श्री.–★संस्थानः = इन्द्रियदेवेषु स्थितिकर्ता ।



### ३८९. स्थानदः

वि.– ★अधिकारियोग्यतानुगुणं स्थानं ददातीति स्थानदः ।

र.– ★वागादिदेवानां मुखादिस्थानप्रदत्वात् स्थानदः ।

स.– ★भक्तेभ्यो वैकुण्ठादिस्थानं ददाति इति स्थानदः ।

★अयोग्यानां स्थानं द्यति खण्डयति इति वा ।

श्री.–★स्थानदः = वागादिदेवानां मुखादिस्थानदाता ।



### ३९०. ध्रुवः

वि.– ★अविनाशित्वाद् ध्रुवः ।

र.– ★नित्यत्वात् निश्चलत्वात् च ध्रुवः ।

स.– ★(अस्य नाम्नः अर्थः मूले न दृश्यते ।)

श्री.–★ध्रुवः = निश्चलः ।



### ३९१. परर्द्धिः

वि.– ★परा ऋद्धिर्विभूतिरस्येति परर्द्धिः ।

र.– ★परस्य अश्वगवादिवस्तुजातस्य ऋद्धिः समृद्धिः यस्मात् सः परर्द्धिः ।

स.– ★परेषां वृद्धिः यस्मात् सः परर्द्धिः ।

श्री.– ★परर्धिः = गवाश्वादिसमृद्धिकर्ता ।



## ३९२. परमस्पष्टः

वि.– ★अनन्याधीनसंविदात्मतया परमस्पष्टः ।

र.– ★परं स्वात्मानं जननमरणादिदोषराहित्येन मन्यते इति परमः । पूर्वम् अस्पष्टम् एव यज्ञेषु सोमग्रहणाय स्पष्टः भवति इति स्पष्टः ।

स.– ★परमस्पष्टः परमश्चासौ स्पष्टश्च इति वा ।

★परमेण स्वेनैव स्पष्ट इति वा ।

श्री.– ★परमः = आत्मानं जरादिराहित्येन मन्यमानः ।

स्पष्टः = यज्ञे व्यक्तः ।



## ३९३. तुष्टः

वि.– ★परमानन्दरूपत्वात् तुष्टः ।

र.– ★सदा तुष्यति इति तुष्टः ।

स.– ★भक्तकृतसेवया तुष्यति इति तुष्टः ।

श्री.– ★तुष्टः = सदा तोषयुक्तः ।



## ३९४. पुष्टः

वि.– *सकलगुणसम्पूर्णत्वात् पुष्टः ।

र.– *बलेन सहितः बलादिना पुष्टः ।

स.– *पुष्णाति इति पुष्टः ।

श्री.–*पुष्टः = बलादिना पुष्टः ।



## ३९५. शुभेक्षणः

वि.– *शुभं शुभकारकं संसारनिवर्तकं परमानन्दप्रापकं चेक्षणं ज्ञानं यस्य स शुभेक्षणः ।

''भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'' ।। इति श्रुतेः ।

र.– *शुभं देवादिभिः अप्रतिहतम् ईक्षणम् आज्ञा आदेशः यस्य सः शुभेक्षणः ।

स.– *शुभे ईक्षणे यस्य सः शुभेक्षणः ।

*शुभम् ईक्षणम् अस्य कर्तुः कर्मणः वा इति वा ।

श्री.–*शुभेक्षणः = देवाद्यप्रतिहताज्ञः ।



रामो विरामो विरजो मार्गो नेयो नयोऽनयः ।
वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ।। ४३ ।।

## ३९६. रामः

वि.– *योगिनोऽस्मिन् रमन्त इति रामः ।

*रमणीयत्वाद् वा रामः ।

*आनन्दरूपत्वात् पूर्णत्वाल्लोकरमणत्वाच्च वा ।

"आनन्दरूपो निष्परीमाण एष लोकश्चैतस्माद् रमते तेन रामः" ।

इति शाण्डिल्यशाखायाम् ॥

र.– *रमते अनेन इति रं शुष्मं बलं, तेन अमः अमितः द्यावापृथिव्यादि- उपजीव्यबलवान् । अथवा रः घृतं तत्करणं पयः । तत् आ समन्तात् नीलरोहिण्यादिगोव्यक्तिषु निर्माति इति रामः ।

*रश्चासौ आमश्च रामः इति वा, रस्य आमः इति वा रामः ।

स.– *रमायाः पतिः अयं रामः ।

*रमन्ते अस्मिन् योगिनः इति वा ।

*रमते इति रः, न विद्यते मा मतिः यस्य असौ अमः, रश्चासौ अमश्चेति वा ।

*आनन्दरूपत्वात्, पूर्णत्वात्, लोकरमणत्वाच्च रामः ।

"आनन्दरूपः निष्परिमाण एषः लोकः एतस्मात् रमते तेन रामः" । इति शाण्डिल्यशाखायाम्' इति गीताभाष्योक्तेः ।

श्री.– *रामः = बलामितः ।



## ३९७. विरामः

वि.– *विशिष्टानन्दरूपत्वाद् विरामः ।

*विरमन्ति भूतानि यस्मिन्नवसानं प्राप्नुवन्ति वा ।

र.– *वि विशिष्टाः राः अग्न्यादयः चेतनगणाः तेभ्यः आ सम्यक् नितराम् अमः स्वामी वरः इति विरामः ।

स.– *विशिष्टा रामा रमा यस्य सः विरामः ।

*विविधाः रामाः गोपिकादिस्त्रियः यस्य इति वा ।

*विरामयति प्रलये जनान् इति वा ।

श्री.– *विरामः = विशिष्टाग्न्यादिस्वामी ।



## ३९८. विरजः

वि.– *स्वानन्दपूर्णत्वेन विषयाभिनिवेशाभावाद् विरजः ।

र.– *वि विगतं रजः रजोगुणउपलक्षितपापलेपादिकं यस्मात् सः विरजः ।

स.– *विगतं रजः तदुपलक्षितगुणत्रयं यस्मात् तत् ब्रह्म विरजः ।

*विगतः रजो दोषः यस्मात् सः इति वा ।

*विरजानदीति प्रयोगात्, 'रजं तु रजसा सह' इति कोशात् 'विरजः ब्रह्मलोकः' इति श्रुतेश्च अकारान्तोऽपि रज-शब्दोऽस्ति ।

श्री.– *विरजः = निष्पापः ।



### ३९९. मार्गः

वि.– ★यं विदित्वाऽपवर्गाय कल्पन्ते हि मुमुक्षवः स एव पन्था मार्गः ।

''नान्यः पन्था विद्यते अयनाय'' इति श्रुतेः । विरजोमार्ग इति पाठे त्वेकं नाम ।

र.– ★मृग्यते इति मृगो वेदः प्रतिपाद्यतया तत्सम्वन्धित्वात् मार्गः ।

स.– ★मृगस्य इदं मार्गं सिंहमुखं तत् अस्ति इति मार्गः । अर्श आद्यच् ।

श्री.– ★मार्गः = शोध्यवेदप्रतिपाद्यः ।



### ४००. नेयः

वि.– ★गुरुणा शिष्येषु नेतुं योग्यो नेयः ॥

र.– ★आदरवता भक्तेन नीयते इति नेयः ।

स.– ★शिष्येषु उपदेशेन नेतुं योग्यः नेयः ।

श्री.– ★नेयः = आदरवन्नीयमानः ।



### ४०१. नयः

वि.– ★नयतीति नयः ।

र.– ★रयिं नयति इति नयः ।

स.– ★नयति इति (नयः) स्वस्यैव उत्तमत्वाद् अन्यस्मिन् न विद्यते नयो यस्य सः ।

*अनं वायुं भुवं प्रापयति इति प्राश्वः ।

श्री.– *नयः = द्रव्यप्रापकः ।



## ४०२. अनयः

वि.– *नास्ति नयः नियामकोऽस्येति अनयः ।

र.– *अनम् अपां प्रस्रवणादिरूपचेष्टां यापयति इति अनयः ।

श्री.– *अनयः = चेष्टाप्रापकः ।



## ४०३. वीरः

वि.– *वीरशब्दार्थस्तापनीये उक्तः "अथ कस्मादुच्यते वीर इति यस्मात् स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि विरमयति विरोमयति, अजस्रं सृजति विसृजति वा श्रयति यतो वीरः कर्मण्यः" इत्यादि ।

र.– *जगद्भर्तृत्वात् उत्तमः वीरः ।

स.– *वीं ज्ञानं 'वी गति–व्याप्ति–प्रजन–कान्ति–आसन–खादनेषु' इति धातुव्याख्यानात् तेन रमते इति वीरः ।

*विक्रान्तो वा अजति इति वीरः । 'अज गति–क्षेपणयोः' तस्मात् रक् तस्य वीत्यादेशः ।

श्री.– *वीरः = जगद्भर्तृत्वादुत्तमः ।



### ४०४. शक्तिमतांश्रेष्ठः

वि.– ★विरिञ्चादिभ्योऽप्यपरिमितशक्तित्वात् शक्तिमतांश्रेष्ठः ।

र.– ★स्तवनादिशक्तिमतां श्रेष्ठः शक्तिमतांश्रेष्ठः ।

स.– ★शक्तिशब्दात् अतिशायने मतुप् षष्ठ्या अलुक्, शक्तिमतांश्रेष्ठः ।

श्री.– ★शक्तिमतांश्रेष्ठः = स्तवनादिशक्तिमद्वरिष्ठः ।



### ४०५. धर्मः

वि.– ★सर्वजगद् धरतीति धर्मः ।

"धर्मो वा इदमग्र आसीन्न पृथिवी न वायुर्नाऽकाशो न ब्रह्मा न रुद्रो नेन्द्रो न देवा नर्षयः सोऽध्यायत्" इति सामवेदे बाभ्रव्यशाखायाम् ।

र.– ★रत्नानि यजमाने आदधातीति धर्मः ।

स.– ★धारकत्वाद् धर्मः ।

★प्राप्यतया धर्मवत्त्वात् वा ।

श्री.– ★धर्मः = यजमाने रत्नधारकः ।



### ४०६. धर्मविदुत्तमः (धर्मवित्, उत्तमः)

वि.– ★धर्मविदामुत्तम इति धर्मविदुत्तमः ।

र.– ★ध्रियते इति धर्मः अभीष्टसमूहः तं वेदयति प्रापयति इति वित् धर्मवित् । परमैश्वर्यात् उत्कृष्टतमः उत्तमः ।

स.– ★धर्मं वेत्ति इति धर्मवित्, तदुत्तमत्वात् धर्मविदुत्तमः ।

★धर्माः तद्वन्तः विदुत्तमाः यस्मात् सः ।

श्री.– ★धर्मवित् = अभीष्टसमूहप्रापकः ।

★उत्तमः = उत्कृष्टतमः ।



वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ४४ ॥

## ४०७. वैकुण्ठः

वि.– ★विकुण्ठापत्यत्वाद् वैकुण्ठः ।

★विविधा कुण्ठा गतेः प्रतिहतिः विकुण्ठा, तस्याः कर्तेति वा ।

★जगदारम्भे विशिष्टानि भूतानि परस्परं संश्लेषयन् तेषां गतिं प्रतिबध्नातीति वा ।

''मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना ।
वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम'' ॥

इति शान्तिपर्वणि ।

र.– ★कुण्ठनं प्रतिहतिः कुण्ठः, वि विगतः कुण्ठः कुण्ठनं सर्वलोकसञ्चारप्रतिहतिः यस्मात् सः विकुण्ठः । विकुण्ठः एव वैकुण्ठः ।

स.– ★विकुण्ठाया अपत्यं वैकुण्ठः ।

★वैकुण्ठलोकस्थत्वात् वा ।

श्री.– *वैकुण्ठः = अप्रतिहतगतिः ।



## ४०८. पुरुषः

वि.– *पुरुषु बहुषु सीदतीति वा ।

*पुरूणि फलानि सनोति ददातीति वा ।

*पुरूणि भूतानि स्यति क्षिपतीति वा पुरुषः ।

*सर्वपापदाहकत्वात् पुरुषः ।

र.– *पुरून् सोमरसान् सनोति सम्भजते लभते इति पुरुषः ।

स.– *सर्वेभ्यः पुरा सदनात् सर्वदोषसादनाद्वा पुरुषः ।

*पुरि शयनाद् वा ।

'सर्वासु पूर्षु पुरिशयः' इति श्रुतेः ।

'पुरुसंज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः ।
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते ।
भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ।। इति स्मृतेश्च ।

*पूर्णत्वात् पालकत्वात् पुरुषः इति वा ।

''पॄ पालनपूरणयोः'' इत्यतः विदिपुरोश्चेति कुषन् ।

श्री.– *पुरुषः = बहुसोमरसान् लभमानः ।



## ४०९. प्राणः

वि.– *प्रकृष्टानन्दबलरूपत्वात् प्राणः । “............प्राण-नामकः । प्रकृष्टानन्दबलतः” इति च ॥

र.– *प्रकृतान् सोमरसान् आनयति यम् इति प्राणः ।

*यद्वा प्र प्रकृष्टान् प्राणान् शत्रूणाम् आनयति अपहरति इति प्राणः ।

स.– *आणा येषां ते मुक्ताः तेभ्यः प्रकृष्टः इति प्राणः ।

*प्रकृष्टे नाम्नि चेष्टते इति वा ।

श्री.– *प्राणः = शत्रुप्राणापहर्ता ।



## ४१०. प्राणदः

वि.– *प्रकृष्टानन्दबलं ददातीति प्राणदः ।

र.– *प्रकर्षेण अनः अननं गमनं प्राणः नद्यादीनां समुद्रगमनं, तत् ददाति इति प्राणदः ।

★यद्वा प्र प्रकृष्टासु बहुसंख्याकयोनिषु गमनं प्राणः तत् द्यति खण्डयति निवारयति इति प्राणदः ।

स.– *णः सुखं तद्विरुद्धत्वात् अणः शोकः, प्रकर्षेण तं द्यति खण्डयति इति प्राणदः ।

छान्दोग्यभाष्ये तु–

‘....प्रकृष्टानां च नायकः ।

प्राणनामा ण इत्येव ह्यानन्दः समुदीरितः ।

आणा सरस्वती प्रोक्ता तत्प्रकृष्टसुखत्वतः ।
प्राण इत्युच्यते वायुः' इत्युक्तेः,

★गुरुत्वेन भक्तानां प्राणं ददाति इति वा ।

श्री.– ★प्राणदः = नानाजन्मनिवारकः ।



## ४११. प्रणवः

वि.– ★"चतूरूपस्यास्य विष्णोर्नाम प्रणव इत्यपि ।
जाग्रदादेः प्रणयनात् स एव ब्रह्म बृंहणात्" ॥

इति प्रणवः ।

★"प्रणमन्ति हि यं देवास्तस्मात् प्रणव उच्यते" इति वा ।

★प्रकर्षेण स्तूयमानत्वाद्वा ।

र.– ★णः सुखं वः बलम्, णश्च वश्च णवौ, प्रकर्षेण णवौ यस्मात् भवतः सः सुशिप्रो मन्दसानश्च प्रणवः ।

स.– ★प्रकर्षेण नयति इति प्रणवः ।

'णु स्तुतौ' इति धातोः कर्मण्यच् ।

★आत्मानं प्रणोति इति प्रणवः ।

तदुक्तं गीतातात्पर्ये–

'वेदस्थः प्रणवाख्योऽसौ आत्मानं प्रणवो ह्यत' इति ।

★प्रकर्षेण नूतनत्वाद्वा ।

'प्रणमन्ति इह यं वेदाः तस्मात् प्रणव उच्यते' । इति सनत्कुमारवचनात् ।

★प्रकर्षेण नम्यत्वात् प्रणव इत्यप्याहुः ।

श्री.– *प्रणवः = प्रकृष्टवलसुखोत्पादकः ।



## ४१२. पृथुः

वि.– *प्रथितत्वात् पृथुः ।

र.– *भक्तदत्तहविरादिषु मनः प्रथयति विस्तारयति इति पृथुः ।

स.– *'प्रथ प्रख्याने' इति धातोः प्रख्याततत्वात् पृथुः ।

श्री.– *पृथुः = भक्तदत्तहविषि मनोविस्तारकः ।



## ४१३. हिरण्यगर्भः

वि.– *"हितत्वाद् रमणीयत्वाद्धिरण्यं वर्णतोऽपि च ।
जगतो गरणाद् भानाद् गर्भो विष्णुरुदाहृतः" ॥

इति हिरण्यगर्भः ।

र.– *हि हितं रूपादिकं रणति गच्छति विषयीकरोति इति हिरण्यं चक्षुः तत् गृह्णाति ददाति इति गर्भः, हिरण्यस्य चक्षुषोऽन्नस्य वा गर्भो दाता हिरण्यगर्भः ।

स.– *हिरण्यं तदात्मकं ब्रह्माण्डं गर्भे यस्य सः हिरण्यगर्भः ।

श्री.– *हिरण्यगर्भः = हितरूपादिग्राहि चक्षुरादिदाता ।



## ४१४. शत्रुघ्नः

वि.– *सुरशत्रून् हन्तीति शत्रुघ्नः ।

*शातयतीति शत्रुः संसारस्तं हन्ति इति वा ।

र.– ★शं श्रेयोरूपं द्रविणं गवाश्वादिकं च, श्रेयःसाधनद्रविणादि-विस्तारघटनाप्राप्तिमत्वात् घटनाप्रापकत्वात् वा शत्रुघ्नः ।

स.– ★शत्रून् हन्ति इति शत्रुघ्नः ।

श्री.– ★शत्रुघ्नः = श्रेयःसाधनद्रविणादिविस्तारघटनाप्राप्तिमान् ।



## ४१५. व्याप्तः

वि.– ★देशतः परिच्छेदाभावाद् व्याप्तः ।

र.– ★जगद्धारणाय स्वयं व्याप्नोति इति व्याप्तः ।

स.– ★विशिष्टत्वात् देवादयः ब्रह्मादयः तेषां आप्तः व्याप्तः ।
★विं गरुडं आप्तः व्याप्तः ।

श्री.– ★व्याप्तः = जगद्धारणव्याप्तिमान् ।



## ४१६. वायुः

वि.– ★वायुशब्दार्थं ऋग्भाष्ये–

“बलत्वादयनाच्चैव वायुरित्यभिधीयते ।
वात्यायुरिति वा ज्ञानाद्धरणादाश्रयत्वतः ।
वय बन्धन इत्यस्मात् संसारादेर्व्ययादपि ।
व्येत्यस्मिन्निति वा वायुर्वय श्रेष्ठत्व इत्यपि” ॥ इति ॥

र.– ★वाति गच्छति, अन्तः स्थित्वा रमणकृत् वः, जगत् स्वात्मनि गमयति बिभर्ति इति अयुः, वश्चासौ अयुश्च इति वायुः जगदन्तस्थितः रमणहेतुः जगद्धारकश्च इति वायुः ।

स.– *वशब्दो बलवाची बलरूपत्वात् वः, गमनकर्तृत्वात् आयुः, वश्चासौ आयुश्च इति वायुः ।

*वाति गच्छति, आयुश्च प्राणधारणहेतुत्वात् वायुः ।

*गत्यर्थानां ज्ञानार्थत्वात् वाति जानाति इति वायुः ।

*अथवा वृणोतेः कर्तरि कर्मणि वा वृणोति व्रियते इति वायुः ।

*यद्वा वान्ति गच्छन्ति प्रवर्तन्ते अस्मिन् इति वायुः ।

*'वयः श्रेष्ठत्वे' इत्यतः उणि श्रेष्ठत्वात् वायुः ।

*अथवा 'वय बन्धने' इत्यस्मात् धातोः बन्धकत्वात् वायुः ।

*संसारात् व्ययते विनश्यति अनेन इति वायुः ।

तदुक्तं ऋग्भाष्ये–

''बलत्वात् अयनाच्चैव वायुरित्यभिधीयते ।
वात्यायुरिति वा ज्ञानात् वरणादाश्रयत्वतः ।
वय बन्धन इत्यस्मात् संसारादेः व्ययादपि ।
वेत्त्यस्मिन् इति वा वायुः वयः श्रेष्ठत्व इत्यपि'' ॥ इति ।

श्री.– *वायुः = जगदन्तःस्थित्वा रमणहेतुर्जगद्धारकश्च ।



## ४१७. अधोक्षजः

वि.– *अधःकृताक्षाणां योगिनां जायते प्रादुर्भवतीत्यधोक्षजः ।

*''अधो न क्षीयते जातु यस्मात् तस्मादधोक्षजः'' इति वा ।

*''द्योरक्षा पृथिवी चाधस्तयोर्यस्मादजायत ।
मध्ये वैराजरूपेण प्रोक्तस्तस्मादधोक्षजः'' ॥ इति वा ।

र.– *सर्वं जगत् स्वाधः करोति नियम्यतया अधः करोति इति अधः आयन्ता इति यावत् । क्षः क्षयः विनाशः न विद्यते क्षः विनाशः यस्य इति अक्षः, श्रवःशब्दोदितान्नादेः जेता अपहर्ता, अधश्चासौ अक्षश्चासौ जश्च इति अधोक्षजः ।

स.– *अधः अक्षः अक्षकुमारः यस्य सः अधोक्षः हनूमान्, तेन जायते व्यज्यत इति अधोक्षजः ।

*सः (हनूमान्) जातः यस्मात् इति वा अधोक्षजः ।

*अथवा अधोक्षाः इन्द्रियनिग्रहवन्तः वसुदेवादयः तेभ्यः जातत्वात् अधोक्षजः ।

*अधःकृतप्रत्यक्षो वा ।

श्री.–*अधोक्षजः = जगत्स्वाधःकारी, अनाशीः, अन्नादिनेता च ।



ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ४५ ॥

### ४१८. ऋतुः

वि.–*गन्तृत्वात् ज्ञातृत्वात् ज्ञापकत्वात् पूर्वावगतवत् स्थितत्वाद्वा ऋतुः ।

र.– *अर्यते बुद्ध्यादिप्रेरकपुरुषान्तराभाववत्तया ज्ञायते निश्चीयते इति ऋतुः ।

स.– *मोक्षसाधनत्वात् ऋतुः ।

''ऋ गतौ'' इत्यतः अर्तेश्च तुरिति तुप्रत्ययः ।

*किञ्च स्वस्वरूपमर्पयति ज्ञापयति इति वा ऋतुः ।

श्री.– *ऋतुः = प्रेरकपुरुषान्तराभाववत्तया ज्ञेयः ।



## ४१९. सुदर्शनः

वि.– *शोभनं दर्शनं ज्ञानं, शोभने नेत्रे वा यस्य स सुदर्शनः ।

*सुखेन करुणया दृश्यत इति वा ।

*वेदादिवैष्णवसिद्धान्तवेद्यो वा ।

*चक्रायुधो वा ।

र.– *सु सम्यक् दर्शः ज्ञानम्, तं नयति इति सुदर्शनः ।

*यद्वा सुष्ठु दर्शनं ज्ञानं यस्मात् इति सुदर्शनः ।

स.– *सुदर्शनं चक्रं अस्य अस्ति इति सुदर्शनः । 'अर्श आद्यच्'

*अथवा सुष्ठु दर्शनं यस्मात् (इति सुदर्शनः) ।

*शोभनं दर्शनं यस्य इति वा । (सुदर्शनः)

*सुष्ठु दृश्यत इति वा । (सुदर्शनः) ।

श्री.– *सुदर्शनः = सम्यग्ज्ञानदाता ।



## ४२०. कालः

वि.– *ज्ञानादिसकलगुणपूर्णत्वात् कालः ।

*"कालः कलितसम्पूर्णगुणत्वाच्च जनार्दनः ।
संहारात् सर्ववित्त्वाद्वा सर्वविद्रावणेन वा" ॥

इति महावराहे ।

र.– *छिनत्ति अभक्तानां वाज्यादिसम्पदम् इति कालः । यद्वा भक्ताय वाज्यादिसम्पदं ददाति इति कालः ।

स.– *कालः जगतः बन्धकत्वात्, छेदकत्वात्, ज्ञानात् कालः ।

"कल बन्धने छेदने ज्ञाने कामधेनौ" ।

*कं सुखम् आलयति तत्तद्योग्यतानुसारेण पर्याप्तं करोति वा ।

*कं सुखं आ सम्यक् लाति आददाति इति वा कालः ।

'कल–भूषण–पर्याप्ति–वारणेषु' इति धातुव्याख्यानात् 'आदाने ला' इति च ।

श्री.– *कालः = अभक्तवाज्यादिसम्पच्छेदकः ।



## ४२१. परमेष्ठी

वि.– *परमे प्रकृष्टे स्वे महिम्नि, हृदयाकाशे वैकुण्ठादिस्थाने वा स्थातुं शीलमस्येति परमेष्ठी ।

"परमे स्थितः" इति वचनबलात् ।

र.– *परमेश्वरभक्ततद्वंश्ययोः गृहे तदीयदधिपयआदि पातुं तिष्ठति इति परमेष्ठी ।

स.– *परमेष्ठी परमे हृदयाकाशे तिष्ठति इति स तथा ।

श्री.– *परमेष्ठी = स्वभक्तादिगृहे दध्यादि पातुं तिष्ठन् ।



## ४२२. परिग्रहः

वि.– ★शरणार्थिभिः परितो गृह्यते ।

★सर्वगतत्वात् परितो ज्ञायत इति वा ।

★भक्तान् स्वीयत्वेन परिगृह्णाति ।

★तदर्पितं पत्रपुष्पादिकं परिगृह्णातीति वा परिग्रहः ॥

र.– ★इतरान् परित्यज्य स्वभक्तान् एव परिगृह्णाति इति परिग्रहः ।

स.– ★परः परमात्मा येषां अस्ति इति परिणः हरिभक्ताः, तान् गृह्णाति अनुगृह्णाति इति परिग्रहः ।

श्री.–★परिग्रहः = स्वभक्तैकग्राही ।



## ४२३. उग्रः

वि.– उग्रशब्दार्थ उक्तस्तापनीये–

★"अथ कस्मादुच्यते उग्रमिति यस्मात् स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि अनुगृह्णाति अजस्रं सृजति विसृजति वासयत्युद्गृह्णात्युद्गृह्यते । - स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम्" इत्यादि ।

★उं रुद्रं ग्रसतीति वा ।

र.– ★भक्तगिरः उचन्ति समवयन्ति अत्र इति उग्रः ।

स.– ★उं रुद्रं ग्रसति इति उग्रः ।

★उच्चान् ब्रह्मादीन् रमयति इति उग्रः इत्यप्याहुः ।

★उचति इति उग्रः । 'उच समवाये' ।

श्री.– *उग्रः = भक्तगीर्मेलनस्थानरूपः ।



## ४२४. संवत्सरः

वि.– *संवसन्ति भूतान्यस्मिन्निति संवत्सरः ।

*"सरणात् सर्वगत्वेन सर्वज्ञो वा सरो हरिः । सरसः सरतित्वाद्वा" सरः । सम्यग् वर्तत इति संवत् । संवच्चासौ सरश्चेति वा संवत्सरः ।

*सम्यग् भक्तवत्सलो वा ॥

र.– *सं सम्यक् वत्साः सुतादिवत् प्रीतिविषयाः गङ्गादिनदीः समुद्रसंयोजनेन रमयति इति संवत्सरः ।

स.– *सं सम्यक् वत्सभूतान् ब्रह्मादीन् रमयति इति संवत्सरः ।

*वत्सेषु कृष्णरूपेण सम्यक् रमत इति वा ।

*संवत् सामीचीन्यवत् सरः स्वामिपुष्करिण्यादिकं स्थानं यस्य इति वा । ब्रह्मविशेष्यत्वात् नपुंसकत्वम् ।

*संवत्सरप्रवर्तकत्वात् इति वा ।

श्री.– *संवत्सरः = सम्यक् सुतवत्प्रीतिपात्रनदीसमुद्रसंयोजन-सुखकारी ।



## ४२५. दक्षः

वि.– *वर्धमानत्वात् क्षिप्रकारित्वाद्वा गमनाद्वा दक्षः ।

★ददाति क्षपयति चेति वा दक्षः ।

र.– ★ऋजीषवत् अतिदृढत्वात् दक्षः ।

★यद्वा क्षदिः पाकार्थः तथा च गोषु स्थित्वा तृणादीन् पयआदिरूपेण पचति इति क्षदः, सः एव वर्णविपर्ययेन दक्षः ।

स.– ★दक्षः पटुः द्यन्ति खण्डयन्ति जनान् इति दाः, तेषां क्षं क्षयः यस्माद् इति वा ।

श्री.– ★दक्षः = ऋजीषवत् अतिदृढः ।



## ४२६. विश्रामः

वि.– ★संसारश्रान्तानां विश्रान्तिहेतुत्वाद् विश्रामः ॥

र.– ★संहर्ता विश्रामः ।

स.– ★विश्रामः श्रमरहितः ।

★श्रमाणां समूहः श्रामम् । समुदायार्थे अण् । विगतं भक्तानां श्रामं यस्मात् इति वा ।

श्री.– ★विश्रामः = विशिष्टशत्रुहिंसकः ।



## ४२७. विश्वदक्षिणः

वि.– ★विश्वस्माद् दक्षिणः शक्तः ।

★प्रवीणो वा ।

★विश्वेषु कर्मसु दाक्षिण्याद्वा विश्वदक्षिणः ।

द.– *विश्वस्मिन् देवादिचेतनेषु दक्षिणः छन्दानुवर्ती स्वेच्छया वर्तते इति विश्वदक्षिणः ।

स.– *विश्वस्मिन् कार्ये जगत्सर्जनादौ दक्षिणः कुशल इति विश्वदक्षिणः ।

*विश्वः वायुः दक्षिणः यस्मात् इति वा ।

श्री.– *विश्वदक्षिणः = देवादिषु छन्दवृत्तिः ।



विस्तारः स्थावरस्थाणु प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥ ४६ ॥

### ४२८. विस्तारः

वि.– *विस्तार्यन्ते समस्तानि जगन्त्यस्मिन्निति विस्तारः ।

र.– *यज्ञेन बर्हिः विस्तारयन्ति यं (उद्दिश्य) सः विस्तारः ।

स.– *विस्तीर्यन्ते लोकाः अनेन इति विस्तारः ।

श्री.– *विस्तारः = वर्हिर्विस्तरणोद्देश्यः ।



### ४२९. स्थावरस्थाणुः (स्थावरः, स्थाणुः)

वि.– *स्थितिशीलः स्थावरः । पृथिव्यादीनि तिष्ठन्त्यस्मिन्निति स्थाणुः । स्थावरश्चासौ स्थाणुश्चेति स्थावरस्थाणुः ।

स्थावरः

र.– *युद्धे तिष्ठन्ति प्रसक्ताः वर्तन्ते इति स्थाः भक्तजनाः, तान् वलदानादिना वृणोति इति वरः स्थावरः ।

स.– ★स्थाः सत्यलोकादिषु स्थिताः देवा अवराः यस्मात् सः स्थावरः ।

★स्थितिशीलत्वाद्वा ।

श्री.– ★स्थावरः = युद्धप्रसक्तभक्तबलादिदाता ।

स्थाणुः

र.– ★तिष्ठन्ति भगवति भक्त्यादिना इति स्थाः भक्तजनाः, तान् अणति बलादिप्रदानेन गच्छति इति स्थाणुः ।

स.– ★रुद्रान्तर्यामित्वात् स्थाणुः । 'स्थः अणुः' इति धातोः णुप्रत्यये रूपं तात् स्थ्यात् ताच्छब्द्यम् । 'समर्थः पदविधिः' इत्यत्र समर्थपदाश्रितत्वात् पदविधिरुपचारेण समर्थपदेन उच्यत इति महाभाष्योक्तेः । ब्राह्मणो वै सर्वा देवता इत्यत्र दर्शनात् ।

श्री.–★स्थाणुः = भक्तवलादिदानेन गन्ता ।



## ४३०. प्रमाणम्

वि.– ★संविदात्मकत्वात् प्रमाणम् ।

र.– ★प्र प्रकर्षेण माणः सुखाभावः अधःपातादिदुःखं वा यस्मात् भवति तत् प्रमाणम् ।

स.– ★प्रकृष्टं मानं वेदादिप्रमाणं यस्मिन् इति प्रमाणम् ।

★प्रकृष्टं मानं शरीरादिपरिमाणं त्रिविक्रमादिरूपेण यस्य इति वा ।

*प्रकृष्टौ माणौ सुखे यस्य इति वा ।

श्री.– *प्रमाणं = शत्रुप्रकृष्टदुःखकारी ।



## ४३१. बीजमव्ययम् (बीजम्, अव्ययम्)

वि.– *जगद्व्यञ्जनाद् बीजम् । बीजवद् विकारप्राप्तौ विशेष्यते अव्ययमिति ।

र.– *विशेषेण भक्तानां सुखोत्पादकः इति बीजम् ।

*अवेः रक्षणस्य अयः करणम् उपायः यस्मात् तत् अव्ययम् । यद्वा न विद्यते व्ययः अपगमः अस्मदीयरथस्य यस्मात् तत् अव्ययम् ।

स.– *गत्यर्थात् वीधातोः विचिः वीः ज्ञानं जायते अस्मात् व्यासादिरूपात् इति बीजम् ।

*"व्यञ्जनाच्चैव बीज इत्युच्यते प्रभुः" इति गीतातात्पर्योक्तेः व्यञ्जकं वा ।

*अवगमार्थात् अवतेः भावे अचि अवः ज्ञानम् तत् एषां अस्ति इति अविनः तैः अव्यते गम्यते इत्यव्ययम् ।

*विगतः अयः यस्मात् तत् व्ययं तन्न भवति इति वा ।

श्री.– *बीजं = विशेषतो भक्तसुखोत्पादकः ।

*अव्ययं = अस्मद्रथानपगमकारी ।



## ४३२. अर्थः

वि.– ★सर्वशब्दमुख्याभिधेयत्वादर्थः ।

'मुख्याभिधेयस्त्वर्थः स्याद्वाच्यमन्यच्च भण्यते ।
अमुख्येष्वर्थशब्दस्तु नीचोपरिहितो भवेत्' ॥ इति ब्रह्मतर्के ।

★अर्यते ज्ञायत इति वाऽर्थः ।

★सर्वैः प्राप्यत इति वा ।

★सर्वैः याच्यत इति वा अर्थः ॥

र.– ★न विद्यते रं रमणं रतिः भगवति येषां ते अराः भगवद्द्वेषिणः, तेभ्यः तत्सङ्गजनितभयात् भक्तानां निवारणं थं यस्मात् भवति स अर्थः ॥ मिथ्याज्ञानिसंसर्गदोषपरिहाराय मिथ्याज्ञानिनः अस्माभिः वर्जनीयाः ।

स.– ★अर्थ्यते ज्ञायते भक्तैः इति अर्थः ।

★अरं थं अन्नं यस्य इति वा निर्वचनात् रेफः न अकारलोपः ।

★भक्तैः अर्थ्यते इति वा ।

श्री.–★अर्थः = हरिद्विट्सङ्गभयनिवारणः ।



## ४३३. अनर्थः

वि.– ★न विद्यते प्रयोजनमाप्तकामत्वादस्येत्यनर्थः ।

र.– ★अनेषु प्राणेषु रमते इति अनरः आदरयोग्यः मुख्यप्राणः, सः थं अन्नं भोग्यं प्रवर्तनीयः यस्य स अर्थः । अनरः अर्थः अनर्थः ।

स.– ★अनः मुख्यप्राणः यस्य इति अनर्थः । अनतेः विच् ।

★अना मुख्यप्राणेन अर्थ्यत इति वा ।

★अयोग्यानां अनर्थप्रदातृत्वाद्वा अनर्थः ।

श्री.–★अनर्थः = प्राणादरयोग्यमुख्यप्राणप्रवर्तकः ।



## ४३४. महाकोशः

वि.– ★सर्वाश्रयत्वात् कोशः ।

★"क इत्यानन्द उद्दिष्ट उश इच्छा प्रकीर्तिता ।
आनन्देच्छास्वरूपोऽसौ कोशो विष्णुः प्रकीर्तितः" ॥
इति वा कोशः ।

महांश्चासौ कोशश्चेति महाकोशः ।

र.– ★महान् कोशः अर्थसमूहः यस्य इति महान् । महान् कोशः अण्डं यस्य वशे अभेद्यत्वादिना अस्ति इति महाकोशः ।

स.– ★महत् कं यस्याः सा महाका रमा तया उश्यते काम्यते इति महाकोशः ।

★कस्य ब्रह्मण उत्कृष्टं शं सुखं यस्मात् सः कोशः, महांश्चासौ कोशश्च इति वा ।

श्री.–★महाकोशः = महाधनसमूहवान् ।



## ४३२. अर्थः

वि.– ★सर्वशब्दमुख्याभिधेयत्वादर्थः ।

'मुख्याभिधेयस्त्वर्थः स्याद्वाच्यमन्यच्च भण्यते ।
अमुख्येष्वर्थशब्दस्तु नीचोपरिहितो भवेत्' ॥ इति ब्रह्मतर्के ।

★अर्यते ज्ञायत इति वाऽर्थः ।

★सर्वैः प्राप्यत इति वा ।

★सर्वैः याच्यत इति वा अर्थः ॥

र.– ★न विद्यते रं रमणं रतिः भगवति येषां ते अराः भगवद्द्वेषिणः, तेभ्यः तत्सङ्गजनितभयात् भक्तानां निवारणं थं यस्मात् भवति स अर्थः ॥ मिथ्याज्ञानिसंसर्गदोषपरिहाराय मिथ्याज्ञानिनः अस्माभिः वर्जनीयाः ।

स.– ★अर्थ्यते ज्ञायते भक्तैः इति अर्थः ।

★अरं थं अन्नं यस्य इति वा निर्वचनात् रेफः न अकारलोपः ।

★भक्तैः अर्थ्यते इति वा ।

श्री.– ★अर्थः = हरिद्विट्सङ्गभयनिवारणः ।



## ४३३. अनर्थः

वि.– ★न विद्यते प्रयोजनमाप्तकामत्वादस्येत्यनर्थः ।

र.– ★अनेषु प्राणेषु रमते इति अनरः आदरयोग्यः मुख्यप्राणः, सः थं अन्नं भोग्यं प्रवर्तनीयः यस्य स अर्थः । अनरः अर्थः अनर्थः ।

स.– ★अनः मुख्यप्राणः यस्य इति अनर्थः । अनतेः विच् ।

★अना मुख्यप्राणेन अर्थ्यत इति वा ।

★अयोग्यानां अनर्थप्रदातृत्वाद्वा अनर्थः ।

श्री.–★अनर्थः = प्राणादरयोग्यमुख्यप्राणप्रवर्तकः ।



## ४३४. महाकोशः

वि.– ★सर्वाश्रयत्वात् कोशः ।

★"क इत्यानन्द उद्दिष्ट उश इच्छा प्रकीर्तिता ।
आनन्देच्छास्वरूपोऽसौ कोशो विष्णुः प्रकीर्तितः" ॥
इति वा कोशः ।

महांश्चासौ कोशश्चेति महाकोशः ।

र.– ★महान् कोशः अर्थसमूहः यस्य इति महान् । महान् कोशः अण्डं यस्य वशे अभेद्यत्वादिना अस्ति इति महाकोशः ।

स.– ★महत् कं यस्याः सा महाका रमा तया उश्यते काम्यते इति महाकोशः ।

★कस्य ब्रह्मण उत्कृष्टं शं सुखं यस्मात् सः कोशः, महांश्चासौ कोशश्च इति वा ।

श्री.–★महाकोशः = महाधनसमूहवान् ।



## ४३५. महाभोगः

वि.– ★महांश्चासौ भोग आनन्दश्चेति महाभोगः ।

“महान् भोगः प्रजापतेः” इति श्रुतेः ।

र.– ★महान् सोमपानजनितः भोगः सुखं यस्य सः महाभोगः ।

स.– ★पूर्णानन्दत्वात् महाभोगः ।

श्री.– ★महाभोगः = सोमपानजन्यमहासुखवान् ।



## ४३६. महाधनः

वि.– ★महद् धनं आनन्दादिकमस्येति महाधनः ।

र.– ★महान्ति धनानि यस्मात् इति महाधनः ।

स.– ★महद् धनं यस्य सः महाधनः ।

★महात् पूजादिलक्षणात् उत्सवात् आ धनं यस्मात् इति वा ।

श्री.– ★महाधनः = पुष्कलधनधाता ।



अनिर्विण्णः स्थविष्ठो(ऽ)भूर्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥ ४७ ॥

## ४३७. अनिर्विण्णः

वि.– ★अवाप्तसर्वकामत्वान्निर्वेदोऽस्य न विद्यत इत्यनिर्विण्णः ॥

र.– ★वाधिर्यादिदोषैः निर्विण्णः न भवति इति अनिर्विण्णः ।

स.– *ग्लानिशङ्कारहितत्वात् अनिर्विण्णः ।

'निर्वेदो ग्लानिशङ्कयोः' इत्यभिधानम् ।

*निष्क्रान्तः विण्णाभ्यां ज्ञानसुखाभ्यां निर्विण्णः स न भवति इति अनिर्विण्ण इति वा ।

श्री.– *अनिर्विण्णः = बाधिर्यादिदोषनिर्वेदहीनः ।

## ४३८. स्थविष्ठः

वि.– *स्थूलतमत्वात् स्थविष्ठः ।

र.– *अतिशयेन स्थूलः जगत् व्याप्य तिष्ठति इति स्थविष्ठः ।

स.– *स्थविष्ठः स्थूलतमः ।

श्री.–*स्थविष्ठः = अतिस्थूलः ।



## ४३९. अभूः (भूः)

वि.– *अजत्वादनन्याश्रयत्वाद्वा अभूः ।

*सर्वाश्रयत्वाद् भूरिति वा ।

र.– *भवति इति भूः । सत्तावान् इति भूः ।

स.– *न विद्यते भूः आधारः यस्य इति अभूः निराधारः ।

*भवतेः भावे क्विपि न विद्यते भवनं यस्य इति वा ।

*अथवा 'भूः' इति पदच्छेदः । पूर्णत्वाद् भूः ।

'भू बहौ' 'बहुः पूर्णतायाम्,' इत्युक्तेः भवतेः क्विप् ।

*भावयति इति भूः, सर्वोत्पादकः इति वा ।

*सर्वाश्रयत्वात् इति वा ।

श्री.– *भूः = सत्तावान् ।



## ४४०. धर्मयूपः

वि.– *धर्मपशूनां बन्धनस्तम्भत्वाद् धर्मयूपः ।

र.– *ध्रियते अनेन इति धर्मः । धर्मः सोमः तं यौति (तेन) संसृज्यते इति युः । पिबति इति पः । धर्मं सोमं यौति पिबति रक्षति च इति धर्मयूपः ।

स.– *धारकत्वात् धर्मः, युवन्ति बध्नन्ति अस्मिन् मनः भक्ता इति यूपः, धर्मश्चासौ यूपश्चेति धर्मयूपः ।

*धर्मसाधनं यूपः स्तम्भविशेषः यस्माद् इति वा ।

श्री.–*धर्मयूपः = सोमसंसर्गपानकर्ता ।



## ४४१. महामखः

वि.– *यस्मिन्नर्पिता मखा महान्तो भवन्ति स महामखः ।

र.– *महमानां ब्रह्मद्विषां खः विदारकः इति महामखः ।

स.– *महान्तो मखाः यद्विषये स महामखः ।

*न विद्यते मा मतिर्यस्य तदमं, अमं खं यस्य इति अमखः, महांश्चासौ अमखश्चेति वा ।

श्री.–*महामखः = महार्हिंसकदारकः ।



## ४४२. नक्षत्रनेमिः

वि.– *ज्योतिश्चक्राधारत्वान्नक्षत्रनेमिः ।

र.– *नक्षत्राणाम् अविनश्वराणां कर्मणां कर्ता नक्षत्रनेमिः ।

स.– *शिंशुमाररूपेण ज्योतिश्चक्राधारत्वात् नक्षत्रनेमिः ।

*क्षत्रभिन्नाः क्षत्रसदृशाः ब्राह्मणाः नक्षत्राः तेषां नेमिरिव आधार इति वा ।

श्री.– *नक्षत्रनेमिः = अनश्वरकर्मकर्ता ।



## ४४३. नक्षत्री

वि.– *क्षतात् त्राणं क्षत्रम् । तद्वान् क्षत्री, स न भवतीति नक्षत्री ।

र.– *नक्षत्राणि अबाधितानि यदुतुर्वसादिराजसाहाय्यकरणादीनि कर्माणि यस्य सः नक्षत्री ।

स.– *परशुरामरूपेण क्षत्रहन्तृत्वात् क्षत्री, सः न भवति इति नक्षत्री, नियामकतया नक्षत्रवत्त्वात् इति वा । (नक्षत्री)

श्री.– *नक्षत्री = अबाधितकर्मा ।



## ४४४. क्षमः

वि.– *सर्वकार्येषु शक्तत्वात् सर्वसहत्वाद् वा क्षमः ।

र.– *शक्तः समर्थः क्षमः ।

स.– *क्षं नाशं मिनाति नाशयति इति क्षमः ।



*क्षाः नरकाः तान् मवते बध्नाति, 'मव वन्धने' इत्यतः डः ।

*सर्वकार्यदक्षो वा

श्री.– *क्षमः = समर्थः ।



## ४४५. क्षामः

वि.– *प्रळये सर्वभूततनूकरणात् क्षामः ।

र.– *क्षं गवां संरोधविशेपम् आमिनोति कृन्तति इति क्षामः ।

स.– *क्षमाया अयं धारकः वराहादिरूपेण इति क्षामः ।

*वामनरूपेण क्षमाप्रतिग्रहीता वा ।

श्री.– *क्षामः = गोसंरोधनछेदकः ।



## ४४६. समीहनः

वि.– *सृष्ट्यर्थं सम्यगीहत इति समीहनः ।

र.– *सं सम्यक् भक्तानां हितकरणाभीष्टदानतत्कृतस्तुतिश्रवणादिरूपम् ईहनं चेष्टा यस्य सः समीहनः ।

स.– *समानि रूपाणि सर्वत्र अस्य इति समी, ईहते चेष्टते इति ईहनः, समी चासौ ईहनश्चेति समीहनः ।

*समीचीना ईहा भगवत्पूजादिरूपा येपां ते समीहाः, तान् नयति वैकुण्ठादिकं इति वा ।

श्री.– *समीहनः = सम्यक्भक्ताभीष्टकरणादिचेष्टावान् ।



यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः ।
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ४८ ॥

## ४४७. यज्ञः

वि.– ★यद् विद्यते तज्जानातीति यज्ञः ।

"यज्ञः सार्वज्ञ्यात् पुरुषोत्तमः" इति च ।

र.– ★यज्ञे इज्यः स्तुत्यः पूज्यः इति यज्ञइज्यः ।

स.– ★यज्ञभोक्तृत्वात् यज्ञः ।

श्री.– ★यज्ञइज्यः = यज्ञे पूज्यः ।



## ४४८. इज्यः

वि.– ★यज्ञफलदातृत्वेन यष्टुं योग्यत्वादिज्यः ।

स.– ★"ब्राह्मे मुहूर्ते चोत्थाय वार्युपस्मृश्य माधवः ।
दध्यौ प्रसन्नकरमात्मानं तमसः परम्" ॥
-इति भागवतोक्तेः ।

कृष्णरूपेण स्वात्मानं यजत इति वा ।

★रामरूपेण अहल्यां गौतमेन संयोजयति इति वा ।

★"यज देवपूजा–सङ्गतिकरण–दानेपु" इति धातोः, इज्यः यजनीयः ।

★इज्या पूजा सा अस्य अस्ति इति इज्यः ।

'अर्श आद्यच्' । एवं च न क्लेशलेशोऽपि ।



## ४४९. महेज्यः

वि.– ★सर्वदेवतान्तर्यामित्वेन सर्वयज्ञभोक्तृत्वात् सर्वयज्ञफलदातृत्वाच्च महेज्यः ।

"ये यजन्ति मखैः पुण्यैर्दैवतानि पितॄनपि ।
आत्मानमात्मना नित्यं विष्णुमेव यजन्ति ते" ॥

इति हरिवंशेषु ।

र.– ★महता बहुना अपराधेन इज्यः । सङ्गतिकरणीयः महेज्यः । महापराधिनम् अपि भक्तं स्वात्मनि सङ्गमयति एव न तु परित्यजति इति महेज्यः ।

स.– ★महेज्यः महेषु उत्सवेषु यज्ञादिषु इज्या पूजा यस्यासौ महेज्यः ।

★महे सीताविवाहोत्सवे सीताप्राप्त्यै ज्या यस्य इति वा ।

★ई श्रीश्च ज्या भूमिश्च ईज्ये, महत्यौ ईज्ये श्रीभूमी यस्यासौ तथा श्रीभूमिसहितः इति वा ।

श्री.– ★महेज्यः = महापराधिनोऽपि भक्तस्यात्यागी, अभक्तस्य त्यागी चेति चार्थः ।



## ४५०. क्रतुः

वि.– ★कृतिस्वरूपत्वात् क्रतुः ।

"क्रतुः कृतिस्वरूपत्वात्" इत्युक्तेः ।

★ज्ञानस्वरूपत्वाद्वा ।

"सः क्रतुर्ज्ञानरूपत्वात्" इति च ।

र.– *करोति भक्तजनस्य सुखम् इति क्रतुः ।

स.– *करोति सृष्ट्यादिकं इति क्रतुः ।

*कृतिरूपत्वाद्वा ।

"कृतिः स्वरूपत्वात्" इत्युक्तेः ।

*ज्ञानरूपत्वाद्वा क्रतुः ।

सः क्रतुः ज्ञानरूपत्वात् इत्युक्तेः ।

श्री.–*क्रतुः = भक्तसुखकर्ता ।



## ४५१. सत्रम्

वि.– *सतस्त्रायत इति सत्रम् ।

र.– *सीदति प्राप्नोति पूर्णायुष्यं अनेन इति सत्रम् ।

स.– *सतः त्रायते इति सत्रम् ।

"शद्‌लृ विशरणगत्यवसादनेषु" इति सदेः ष्टन् ।

*सतो रमयतीति वा, निर्वचनत्वात् जश्त्वाभावः ।

श्री.–*सत्रं = पूर्णायुःकर्ता ।



## ४५२. सतांगतिः

वि.– *सतां मुमुक्षूणां नान्या गतिरिति सतांगतिः ॥

र.– *सतां सद्भ्यः गतिः दानविषयिणी बुद्धिः यस्य सः सतांगतिः ।

स.– ★सतां अवसादनयुक्तानां गतिः प्राप्यः ।

★सतां नक्षत्राणां गतिः गमनं यस्मादिति वा ।

उभयत्र षष्ठ्याः अलुक् ।

श्री.–★सतांगतिः = सद्भ्यो दानविपयबुद्धिमान् ।



## ४५३. सर्वदर्शी

वि.– ★सर्वं साक्षात् करोतीति सर्वदर्शी ।

र.– ★सर्वः समस्तः दर्शः वसुसमूहः परकीयः, सः अस्य भक्तेभ्यः, दातृतासम्बन्धेन अस्ति इति सर्वदर्शी ।

स.– ★सर्वदर्शी दर्शोपलक्षितयज्ञविशेषाः अस्य सन्तीति सर्वदर्शी ।

★सर्वं पश्यतीति वा ।

श्री.–★सर्वदर्शी = भक्तेभ्यो दानार्थं सर्वद्रव्यवान् ।



## ४५४. विमुक्तात्मा

वि.– ★सर्वदा स्वत एव वन्धाभावाद् विमुक्तात्मा ॥

र.– ★विशेषेण मुक्तस्य लाभयुक्तस्य द्रविणस्य दाता विमुक्तात्मा ।

स.– ★विमुक्ताः आत्मानः जीवाः येन इति विमुक्तात्मा ।

★विशेषेण मुक्तानां स्वामीति वा ।

श्री.–★विमुक्तात्मा = विशेपलाभयुक्तद्रव्यदाता ।



## ४५५. सर्वज्ञः

वि.– *सर्वं जानातीति सर्वज्ञः ।

र.– *सर्वं जानाति इति सर्वज्ञः ।

स.– *जानातीति ज्ञः सर्वस्य ज्ञः सर्वज्ञः । सर्वं जानातीति विग्रहस्तु न, तथात्वे सर्वज्ञाय इति स्यात्, आतो युक् निण् कृतोरित्युक्तेः इति केचित् । वस्तुतस्तु कर्मण्यणः अपवादकतया "आतोऽनुपसर्गे कः" इति कस्य विधानात् सर्वं जानातीत्येव विग्रहः ।

*सर्वज्ञाः जीवाः भवन्त्यस्मादिति वा सर्वज्ञः । 'ज्ञोऽत एव' इति सूत्रात् ।

श्री.– *सर्वज्ञः = सर्ववेत्ता ।



## ४५६. ज्ञानमुत्तमम् (ज्ञानं उत्तमम्)

वि.– *अवबोधरूपत्वाज्ज्ञानम् । तस्यैव विशेषणमुत्तममिति ।

र.– *जानाति इति ज्ञः ब्रह्मादिः तम् अनयति चेष्टयति इति ज्ञानम् । उत् उत्कृष्टं राधः श्रेयः तमयति इति उत्तमम् ।

स.– *ज्ञानेन स्वविषयेण मुत् यस्मात्तत् ज्ञानमुत्, अतिशयेन ज्ञानमुत् ज्ञानमुत्तमम् ।

*ज्ञानेन मुत् मोदः येषान्ते ज्ञानमुदः देवाः, तैः तम्यते अभिकाङ्क्ष्यते इति वा ।

"तमु अभिकाङ्क्षायाम्" इति धातुव्याख्यानात् ।

*ज्ञानमुदे तम्यते यस्मादिति वा ।

श्री.– *ज्ञानं = सर्वज्ञब्रह्मादिचेष्टकः ।

उत्तमं = उत्कृष्टश्रेयःप्रापकः ।



सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ४९ ॥

### ४५७. सुव्रतः

वि.– *"सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम" ॥
इत्यादि शोभनं व्रतमस्येति सुव्रतः ।

र.– *सव्यतः दक्षिणतश्च धनानि आहृत्य भक्तेभ्यः दातुं शत्रु-गृहगमनादिरूपं सु समीचीनं व्रतं कर्म यस्य सः सुव्रतः ।

स.– *शोभनं व्रतं यस्मिन् विषये सः सुव्रतः ।

*शोभनं जगद्रक्षणादिकं व्रतं यस्येति वा ।

श्री.– *सुव्रतः = शोभनकर्ता ।



### ४५८. सुमुखः

वि.– *शोभनं मुखमस्येति सुमुखः ।

र.– *सु सम्यक् मुखं प्रधानं वाजादिभोग्यजातं यस्मात् सः सुमुखः ।

स.– *शोभनं मुखं यस्य इति सुमुखः ।

श्री.– *सुमुखः = सम्यक्प्रधानवाजादिभोग्यदाता ।



## ४५९. सूक्ष्मः

वि.– *सूक्ष्मशब्दार्थोऽथर्वशिरसि–

"सूक्ष्मो भूत्वा परशरीराण्यधितिष्ठति तस्मात् सूक्ष्मम्" इति ।

र.– *क्षः क्षेमः । उत्कृष्टं क्षं मङ्गलं वेगशालित्वादिगुणजातं येषां ते उक्षाः अश्वाः, सु शोभनाश्च ते उक्षाश्च सूक्षाः ते अस्य सन्ति इति सूक्ष्मः ।

स.– *सूक्ष्मरूपत्वात् सूक्ष्मः । "सूक्ष्मन्तु तदर्हत्वात्" इत्युक्तेः ।

*शोभना उत्कृष्टा क्ष्मा यस्येति वा ।

श्री.– *सूक्ष्मः = सम्यगुत्कृष्टवेगादिमङ्गलगुणाश्ववान् ।



## ४६०. सुघोषः

वि.– *शोभनो घोषो वेदात्मकोऽस्येति सुघोषः ।

मेघगम्भीरनिर्घोषत्वाद्वा सुघोषः ।

र.– *घुष्यन्ति इच्छन्ति इति घोषाः सोमरसाः सु समीचीना घोषाः यस्य सः सुघोषः ।

स.– *शोभनः घोषः वेदादिरूपः पाञ्चजन्यघोषः यस्येति सुघोषः ।

श्री.– *सुघोषः = काम्यसोमरसवान् ।



## ४६१. सुखदः (सुहृदः)

वि.– *सतामसतां च सुखं ददाति द्यतीति च सुखदः ।

र.– *सु सुखपूर्णं हृत् हृदयम् अस्य अस्ति इति सुहृदः ।

स.– *सुखं मौक्तिकं ददातीति सुखदः ।

*सुखं अयोग्यानां द्यति खण्डयति इति वा ।

श्री.– *सुखदः (सुहृदः) = सुखपूर्णहृदयः ।



## ४६२. सुहृत्

वि.– *अप्राकृतान्तःकरणत्वादनिमित्तस्नेहवत्त्वाद्वा सुहृत् ।

र.– *सु सम्यक् भक्तकृतस्तुतिं हरति गृह्णाति शृणोति इति सुहृत् ।

स.– *शोभनं हृत् मनः यस्यासौ सृहृत् ।

*शोभनं भक्तकृतकर्मफलं हरति स्वीकरोतीति वा ।

स.– *अनिमित्तोपकारकृद्वा ।

श्री.– *सुहृत् = सम्यक्भक्तस्तुतिग्राही ।



## ४६३. मनोहरः

वि.– *निरतिशयानन्दरूपत्वात् मनो हरतीति मनोहरः ।

''यो वै भूमा तत् सुखम् । नाल्पे सुखमस्ति'' इति श्रुतेः ।

र.– *मनःसोमयोरेकदैवत्यत्वात् मनः सोमः तं हरति पिवति इति मनोहरः ।

स.– ★मनो गोपीनां हरतीति मनोहरः ।

★मन्यत इति मनः हरति हविरादिकं इति हरः । मनश्चासौ हरश्चेति वा ।

★भक्तानां मनसा ह्रियत इति वा मनोहरः ।

श्री.– ★मनोहरः = सोमपाता ।



## ४६४. जितक्रोधः

वि.– ★जितः क्रोधो येन स जितक्रोधः ।

''कामं दहन्ति कृतिनो ननु रोषदृष्ट्या
रोषं दहन्तमुत ते न दहन्त्यसह्यम् ।
सोऽयं यदन्तरमलं निविशन् बिभेति
कामः कथं नु पुनरस्य मनः श्रयेत'' ॥ इति भागवते ।

र.– ★क्रुध्यति इति क्रोधः श्येनपक्षी । जितः क्रोधः श्येनाख्यपक्षी यस्य सः जितक्रोधः ।

स.– ★जितः क्रोधः येन इति वा,

★जिताः क्रोधरूपाः दैत्याः येन इति वा जितक्रोधः ।

श्री.– ★जितक्रोधः = सोमघातकपक्षिजेतृश्येनवान् ।



## ४६५. वीरबाहुः

वि.– ★वीरो विक्रमशाली बाहुरस्येति वीरबाहुः ।

र.– *वीरबाहुः उत्तमः वेदमन्त्रादिः ग्राहकत्वेन अस्य अस्ति इति वीरबाहुः सोमः मन्त्रैः सोमः गृह्यते वीरबाहुः सोमः पेयत्वेन अस्य अस्ति इति वीरबाहुः ।

स.– *वीरा राजन्या बाहुभ्यां यस्येति वीरबाहुः । "बाहू राजन्य" इति श्रुतेः ।

श्री.– *वीरबाहुः = उत्तमवेदमन्त्रग्राह्यसोमवान् ।



## ४६६. विदारणः

वि.– *दुष्टान् विदारयतीति विदारणः ।

र.– *दार्यते हिंस्यते इति दारणः, न दारणः इति विदारणः ।

स.– *विशेषेण दाराणां गोपीनां णः सुखं यस्मात् सः विदारणः ।

*नृसिंहरूपेण हिरण्यकशिपुविदारणो वा ।

*विद्वद्भिः ज्ञानिभिः आ सम्यक् अर्यते गम्यते इति वा ।

*वेत्तीति वित्, आ समन्तात् रणो जरासन्धादिभिः यस्येत्यारणः, अरणे अयम् अग्न्यन्तर्गतरूपेण इत्यारणः, विच्चासावारणश्चेति वा ।

*विगतो दारको यस्येति वा ।

*विदा आ सम्यक् रमयतीति वा ।

*विदाराः भार्यारहिताः सन्न्यासिनः तेषां णः सुखं यस्मादिति वा ।

श्री.– *विदारणः = अहिंस्यः ।

स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ५० ॥

### ४६७. स्वापनः

वि.– ★असुप्त एव जीवस्य सुप्त्यादिनेता स्वापनः ।

"स्वप्नेन शारीरमभिप्रहत्यसुप्तः सुप्तानभिचाकशीति" इति श्रुतेः ।

र.– ★सम्यक् जनैः आप्यते इति स्वापः सुखं तं भक्तान् नयति इति स्वापनः ।

स.– ★स्वापयतीति स्वापनः ।

★स्वापं नयति इति वा ।

★अपां समूहः आपं, सुष्ठु आपं नयतीति स्वापनः ।

श्री.– ★स्वापनः = भक्तसुखप्रापकः ।



### ४६८. स्ववशः

वि.– ★स्वतन्त्रः स्ववशः ।

र.– ★स्वस्य एव वशः, न अन्यस्य, स्वतन्त्रः इति स्ववशः ।

स.– ★स्वं धनं वशे यस्येति वा ।

★स्वस्य वशः इति वा ।

★सुष्ठु अवन्ति स्वात्मानं गच्छन्ति जानन्ति वा याचन्ते आलिङ्गन्ति वा, प्राज्ञरूपं प्रलये प्रविशन्ति उदरमिति स्ववाः तेषां शं सुखं यस्मात् सः स्ववशः ।

श्री.– ★स्ववशः = स्वतन्त्रः ।

## ४६९. व्यापी

वि.– *व्यापिशब्दार्थोऽथर्वशिरसि– "सर्वान् लोकान् व्याप्नोति" स्नेहो यथा पलालपिण्डं शान्तमूलमोतप्रोतमनुप्राप्य व्यतिशिष्ट-स्तस्मादुच्यते सर्वव्यापीति ।

र.– *बहूनि रूपाणि अस्य सन्ति इति व्यापी ।

स.– *व्याप्नोतीति व्यापी ।

श्री.–*व्यापी = नानारूपवान् ।



## ४७०. नैकात्मा

वि.– *विशेषशक्त्या निर्भेदानेकस्वरूपत्वान्नैकात्मा ।

"एकं रूपं हरेर्नित्यमचिन्त्यैश्वर्ययोगतः ।
बहुसङ्ख्यागोचरं च विशेषादेव केवलम्" ॥ इति ब्रह्मतर्के ।

र.– *आत्मा दाता प्रत्युपकर्ता । एकः मुख्यः एकोऽपि वा प्रत्युपकर्ता अस्य न अस्ति इति नैकात्मा ।

स.– *नैकात्मा अनेकशरीरो अनेकस्वामी वा ।

श्री.–*नैकात्मा = प्रत्युपकर्तृरहितः ।



## ४७१. नैककर्मकृत् (अनेककर्मकृत्)

वि.– *सृष्ट्याद्यनेककर्मकर्तृत्वान्नैककर्मकृत् ।

र.– *अनेकेषां भक्तसम्बन्धिपितृभ्रात्रादीनां सुखन्यासं करोति इति अनेककर्मकृत् ।

स.– *नैककर्मकृत् सृष्टिस्थित्याद्यनेकव्यापारकृत् ।

श्री.– *अनेककर्मकृत् = भक्तपित्रादीनां सुखवासकारी ।



## ४७२. वत्सरः

वि.– *वसत्येवाखिलमस्मिन्निति वत्सरः ।

*वासयति रमयति वा ।

र.– *समम् एव वसति इति वत्सरः ।

स.– *वत्सैः रमते कृष्णावतारे इति वा ।

*वत्सं वत्सासुरं रेपयति नाशयति "रीङ् क्षये" इति धातु-व्याख्यानात् वत्सरः ।

श्री.– *वत्सरः = समवासी ।



## ४७३. वत्सलः

वि.– *भक्तस्नेहवत्त्वाद् वत्सलः ।

र.– *वदति भगवद्गुणजातम् इति वत्सः गायत्रादिसामविशेषः । वत्सं गायत्रादिसामादि लाति आदत्ते गृह्णाति इति वत्सलः ।

स.– *भक्तेषु दयावान् ।

श्री.– *वत्सलः = गायत्रिसामादिग्राही ।



## ४७४. वत्सी

वि.– *ब्रह्मादयो वत्सा अस्येति वत्सी ।

*वत्सपालकत्वाद्वा वत्सी ।

र.– *वत्सः सुतादिपरिवारः सः अस्य अस्ति इति वत्सी ।

स.– *श्रीवत्सवान् ।

श्री.–*वत्सी = सुतादिपरिवारवान् ।



## ४७५. रत्नगर्भः

वि.– *रत्नानि (वेदरत्नैः) गर्भभूतान्यस्येति रत्नगर्भः ।

*वेदरत्नानां (वेदरत्नैः) प्रतिपाद्यो वा ।

र.– *रमते अनेन इति रत्नं काम्यं पुरुपार्थजातं तत् गर्भे कुक्षौ यस्य सः रत्नगर्भः (भक्तानाम् अभीष्टजातं दातुं सकलाभीष्टं स्वकुक्षौ धारयति इति अर्थः) ।

स.– *रत्नानि गर्भे यस्य सः रत्नगर्भः ।

श्री.–*रत्नगर्भः = भक्तेच्छितदातुमनाः ।



## ४७६. धनेश्वरः

वि.– *धनानामीश्वरो धनेश्वरः ।

र.– *स्वभक्तान् कुत्सादीन् धनेशान् वृणोति करोति इति धनेश्वरः ।

स.– *धनस्वामी ।

श्री.–*धनेश्वरः = कुत्सादीनां धनेशत्वकारी ।



धर्मकृद् धर्मगुब् धर्मी सदसत् क्षरमक्षरम् ।
अविज्ञाता सदस्रांशुर्विधाता कृतलक्षणः ॥ ५१ ॥

## ४७७. धर्मकृत्

वि.– ★कृतकृत्योऽपि लोकसङ्ग्रहार्थं धर्मं करोतीति धर्मकृत् ।

★दैत्यानां धर्मं छिनत्तीति ।

र.– ★ध्रियते अनेन इति धर्मः सन्धिः संयोगः तं करोति इति धर्मकृत् ।

स.– ★धर्मं करोतीति धर्मकृत् ।

★अभक्तकृतधर्मं कृन्ततीति वा ।

श्री.–★धर्मकृत् = संयोगकर्ता ।



## ४७८. धर्मगुप्

वि.– ★धर्मान् गोपायति रक्षतीति धर्मगुप् ।

र.– ★धत्ते ज्ञानभक्त्यादिकम् इति धर्मः भक्तः तं गोपायति इति धर्मगुप् ।

स.– ★धर्मं भीमाग्रजं पुण्यं वा गोपयतीति धर्मगुप् ।

★धर्मसाधनभूताः गावः वेदादिरूपाः यस्य सः धर्मगुः तं पातीति वा ।

श्री.–★धर्मगुप् = भक्तरक्षकः ।



## ४७८. धर्मी

वि.– ★धर्माधारकत्वाद् धर्मी ।

र.– ★धार्यते महत् राधः मोदः वा अनेन इति धर्मः स्तोमः माहात्म्यं वा, तत् अस्य अस्ति इति धर्मी ।

स.– ★नियामकतया धर्मः यमः अस्य अस्तीति धर्मी ।

श्री.– ★धर्मी = माहात्म्यवान् ।



## ४८०. सत् (सदसत्क्षरम्)

वि.– ★साधुगुणपरिपूर्णत्वात् सत् ।

र.– ★तिष्ठति इति सत्, द्रोणकलशे आसादितम् । न तिष्ठति इति असत् वेगवत् गृहेषु आसादितम् । तदुभयोः सोमरसाख्य-द्रव्ययोः क्षं निवासस्थानम् । गृहीतागृहीतभेदेन द्विविध-सोमरसवान् यज्ञः सदसत्क्षम् । तेन मोदते रमते इति रः इति सदसत्क्षरम् । (यज्ञवाटस्थितसोमेन मोदते इति सदसत्क्षरम्)

स.– ★सीदतीति सत् ।

"शद्लृ विशरणगत्यवसादनेषु" इति धातुव्याख्यानात् ।

श्री.– ★सदसत्क्षरं = यज्ञवाटस्थसोममोदी ।



## ४८१. असत्

वि.– ★न विद्यतेऽस्मादन्यो गुणाधिक इत्यसत् ।

"सत् साधुगुणपूर्णत्वादस्मान्नान्यो गुणाधिकः ।
यतोऽतोऽसदिति प्रोक्तं विष्ण्वाख्यं परमं पदम्" ॥
इति शब्दनिर्णये ।

★यद्वाऽऽसाद्यत्वात् सत् । अनासाद्यत्वादसत् ।

"अनासाद्यो ह्यसन्नामा पूर्वं नारायणाभिधः ।
आसाद्यत्वात्तु सन्नामा वासुदेवोऽभवत् प्रभुः" ॥
इति यजुःसंहितायाम् ।

स.– ★असत् अविशीर्णम् अनवसन्नं वा ।



## ४८२. क्षरम्

वि.– ★सर्वदेशेषु क्षरणाद् गमनात् क्षरम् ।

स.– ★सततं दातृत्वात् क्षरम् ।

★क्षरयति जगदिति वा । "क्षर विनाशसन्ततदानयोः" ।



## ४८३. अक्षरम्

वि.– ★अन्यथाभावराहित्यादक्षरम् ।

र.– ★भक्तकृतस्तुतिं स्वीकरोति इति अक्षरम् ।

स.– ★अक्षरेषु रमते इत्यक्षरम् ।

★नाशरहितं वा ।

★"अशू व्याप्तौ" इत्यतो अक्षरं व्याप्तम् ।

श्री.– ★अक्षरं = भक्तकृतस्तुत्यङ्गीकारी ।



## ४८४. अविज्ञाता

वि.– ★विपर्यासेन ज्ञाता न भवतीत्यविज्ञाता ।

★यद्वा विज्ञाता जीवः, स न भवतीत्यविज्ञाता ।

र.– ★अविना गोपयआदिना शुद्धः सोमरसः अविज्ञः । तम् आतनोति स्वीकरोति इति आता । गोपयआदिना सम्यक् परिशोधितसोमरसग्राही अविज्ञाता ।

स.– ★न विद्यते विज्ञाता यस्यासौ अविज्ञाता । समासान्तविधेः अनित्यत्वात् नद्यृतश्चेति कबभावः ।

श्री.– ★अविज्ञाता = गोपयसादिना सुशोधितसोमरसग्राही ।



## ४८५. सहस्रांशुः

वि.– ★सहस्रशव्दोऽनन्तवाची, अनन्ततेजस्त्वात् सहस्रांशुः ।

र.– ★हस्रेण सहितः सहस्रः द्युलोकः पृथिवीलोकश्च तौ अश्नुते व्याप्नोति इति सहस्रांशुः ।

स.– ★सहस्रं अंशवः यस्य सूर्यान्तर्गतस्य सः सहस्रांशु ।

श्री.– ★सहस्रांशुः = प्रसिद्धियुग्द्यावाभूमीव्यापकः ।



## ४८६. विधाता

वि.– ★समस्तजगद्विधानाद् विधाता ।

र.– ★वि विशेषेण सोमम् आदधाति पाति पिबति इति विधाता ।

स.– ★विशेषेण धाता धारकः विधाता ।

★विः गरुडः धाता यस्येति वा विधाता ।

श्री.– ★विधाता = विशेषेण सोमपाता ।



## ४८७. कृतलक्षणः (अकृतलक्षणः)

वि.– ★नित्यसिद्धानन्दादिलक्षणवत्त्वात् कृतलक्षणः ।

★कृतानि लक्षणानि समस्तानि शास्त्राण्यनेनेति वा ।

★कृतं लक्षणं सर्वभावानामसाधारणधर्मो येनेति वा ।

★आत्मनः श्रीवत्सलक्षणं वक्षसि स्वेन कृतमिति वा ।

र.– ★कृतम् अनादिकालतः क्लृप्तं सर्वयाचनीयत्वादिलक्षणम् अस्य अस्ति इति कृतलक्षणः ।

स.– ★कृतानि पूर्णानि लक्षणानि यस्य सः कृतलक्षणः ।

★कृतं भक्तकृतं कर्म तस्यादाने, "ला आदाने" भावे डः, क्षणः उत्सवः यस्येति वा ।

★कृतानि पूर्णानि लक्षणानि अनन्तानि णशब्दवाच्यसुखानि यस्य इति वा ।

★अकृतानि स्वाभाविकानि लक्षणानि यस्य इत्यपि वदन्ति ।

श्री.– ★कृतलक्षणः = क्लृप्तसर्वप्रार्थ्यत्वलक्षणः ।



गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ५२ ॥

## ४८८. गभस्तिनेमिः

वि.– ★गभस्तिचक्रमध्यस्थत्वात् सूर्यमण्डलमध्यवर्ती गभस्तिनेमिः ।

र.– ★भर्त्सयति दुःखम् इति गभस्तिः सुखं, तं नयति प्रापयति इति गभस्तिनेमिः ।

स.– ★गभस्तयः नेमिवत् यस्य सः गभस्तिनेमिः

श्री.– ★गभस्तिनेमिः = सुखप्रापकः ।



## ४८९. सत्त्वस्थः

वि.– ★सत्त्वशब्दार्थः शब्दनिर्णये–

"सत्त्वं जीवः क्वचित् प्रोक्तः क्वचित् सत्त्वं जनार्दनः ।
सत्त्वं नाम गुणः क्वापि क्वचित् साधुत्वमुच्यते" ॥ इति ।

तत्र जीवे सत्त्वगुणे साधुत्वे स्वे महिम्नि तिष्ठतीति वा सत्त्वस्थः ।

र.– ★सत्वं धनं तत् भक्तेषु स्थापयति ददाति इति सत्वस्थः ।
★सत्वं स्वान्तं मनः तस्मिन् तिष्ठति इति सत्वस्थः । (भक्तमनोगोचरः तद्ध्यानविषयः)

स.– ★"सत्त्वं जीवः क्वचित् प्रोक्तः" इत्युक्तेः सत्त्वे जीवे अन्तर्यामितया तिष्ठतीति सत्त्वस्थः ।

*सत्त्वं तिष्ठत्यस्मिन्निति वा ।

*सत्त्वेन बलेन तिष्ठतीति वा सत्त्वस्थः ।

श्री.– *सत्त्वस्थः = भक्तमनस्थः ।



## ४९०. सिंहः

वि.– *हिनस्तीति सिंहः, अतिसहनशीलत्वाद्वा ।

र.– *रथे संयुक्ताः शतं सहस्रं च हयाः यस्य सः सिंहः ।

स.– *सिंहः श्रेष्ठः ।

श्री.– *सिंहः = सङ्गतरथानेकाश्वः ।



## ४९१. भूतमहेश्वरः

वि.– *भूतानां महेश्वरः भूतमहेश्वरः ।

''यः सर्वान् लोकान् सम्भक्षयत्यजस्रं सृजति ।
विसृजति वा श्रयति तस्मादुच्यते महेश्वरः ॥'' इत्यथर्वशिरसि ।

*भूतः सदा संश्चासौ महेश्वरश्चेति ।

*भूतानां महान् ईश्वरश्चेति वा ।

''अनाद्यनन्तं परिपूर्णरूपमीशं वराणामपि देववर्यम्'' ॥

इति बाभ्रव्यशाखायाम् ।

र.– *भूतानि जन्तवः हयाः तैः महः उत्सवः यस्य सः भूतमहः रथः तस्य ईश्वरः स्वामी अधिष्ठाता । अश्वैः अलङ्कृतरथस्थः भूतमहेश्वरः ।

स.– *भूतः प्रभूतः महः उत्सवः यस्य सः भूतमहः, ई रमा श्वा वायुः, "श्वा वै वायुः श्वसनात्" इति ऋग्भाष्योक्तेः, ताभ्यां रमते इति ईश्वरः, भूतमहश्चासौ ईश्वरश्च तथा ।

*भूतानां प्राणिनां महेश्वरः इति वा ।

श्री.– *भूतमहेश्वरः = अश्वोत्सवरथेश्वरः ।



## ४९२. आदिदेवः

वि.– *सर्वभूतान्यादीयन्तेऽनेनेत्यादिः, क्रीडादिगुणसम्पन्नत्वाद्देवः, आदिश्चासौ देवश्चेत्यादिदेवः ।

र.– *व्यवहरति पिबति इति देवः । आदौ सोमं पिबति इति आदिदेवः ।

स.– *भक्तैरादीयत इत्यादिः, क्रीडादिगुणविशिष्टत्वात् देवः, आदिश्चासौ देवश्च इत्यादिदेवः ।

श्री.– *आदिदेवः = आदौ सोमपाः ।



## ४९३. महादेवः

वि.– *"यः सर्वान् भावान् परित्यज्य आत्मज्ञानयोगैश्वर्यैः महति महीयते वा तस्मादुच्यते महादेवः इति" इत्यथर्वशिरःश्रुतेर्महादेवः ॥

र.– *बहुकर्मकर्तृत्वात् महान्, सोमपानार्थं दीव्यति गच्छति इति देवः, महान् च असौ देवश्च इति महादेवः ।

स.– ★अत्तीत्यादः, महांश्चासौ आदश्चेति महादः, ईं लक्ष्मीं वर्तयतीति ईवः, महादश्चासौ ईवश्चेति महादेवः ।

श्री.–★महादेवः = बहुकर्मकर्ता ।



## ४९४. देवेशः

वि.– ★देवानां प्राधान्याद् देवानामीशो देवेशः ।

र.– ★शत्रूणां पुरं विजिगीषते इति देवः, ईः वाणी स्तुतिः तस्याः शः भूपः, (स्तुते राजा स्वामी ईशः) । देवश्चासौ ईशश्च इति देवेशः ।

स.– ★देवानां या रमायाः शं यस्मात् सः इति देवेशः ।

★देवानां ईशः इति वा ।

श्री.–★देवेशः = शत्रुपुरविजिगीषुः, स्तुतिस्वामी च ।



## ४९५. देवभृद्गुरुः

वि.–★देवान् बिभर्तीति देवभृद् ब्रह्मा, तस्य वेदोपदेष्टृत्वाद् देवभृद्गुरुः ।

★देवानां भरणात् सर्वविद्यानां गरणाद्वा देवभृद्गुरुः ।

र.– ★देवं द्युत्यादि बिभर्ति इति देवभृत् ।

★भक्तकृतान् स्तोत्रविशेषान् शिष्यजनान् वा गृणाति इति गुरुः ।

स.– *देवान् बिभर्तीति देवभृत् चतुर्मुखः, तस्य उपदेष्टृत्वात् देवभृद्गुरुः ।

श्री.– *देवभृत् = द्युत्यादिधारकः ।

*गुरुः = शिष्योपदेशकः ।



उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरभूतभृद् भोक्ता कपीन्द्रो भूरिदक्षिणः ॥ ५३ ॥

### ४९६. उत्तरः

वि.– *नित्यं जन्मसंसारबन्धनादुत्तीर्णत्वादुत्तरः ।

*विश्वस्मादुत्कृष्ट इति वा ।

''विश्वस्मादिन्द्र उत्तरः'' इति श्रुतेः ।

र.– *संसारात् उत्तारयति इति उत्तरः ।

स.– *अतिशयेन उत्कृष्टः उत्तरः ।

*उत्कृष्टान् योग्यान् तारयति संसारादिति वा ।

श्री.– *उत्तरः = संसारोत्तारकः ।



### ४९७. गोपतिः

वि.– *गवां स्वर्गादीनां पतिः गोपतिः ।

र.– *गावो वेदरूपा गिरः तेषां पतिः स्वामी इति गोपतिः ।

स.– *गोपतिः– गोः भूमेर्वा, गवां वा, वाक्यानां वा, पालनात् पतिः ।

श्री.– *गोपतिः = वेदवाक्स्वामी ।



## ४९८. गोप्ता

वि.– *गवां पालनाद् गोप्ता ।

र.– *ऋषिणां गोप्ता रक्षकः इति गोप्ता ।

स.– *रक्षकः ।

श्री.– *गोप्ता = ऋषिरक्षकः ।



## ४९९. ज्ञानगम्यः

वि.– *न कर्मादिना गम्यते, किन्तु ज्ञानेनैव गम्यत इति ज्ञानगम्यः ।

र.– *ज्ञानं ज्ञानिनः तैः गम्यते स्तूयते इति ज्ञानगम्यः ।

*ज्ञानं ज्ञानादिमाहात्म्यं तेन गम्यः युक्तः अबाधित-माहात्म्यः इति वा ज्ञानगम्यः ।

स.– *ज्ञानेन ज्ञानिभिर्वा गम्यत्वात् ज्ञानगम्यः ।

श्री.– *ज्ञानगम्यः = ज्ञानादिमाहात्म्ययुक्तः ।



## ५००. पुरातनः

वि.– *कालेनापरिच्छेदात् पुराऽपि भवतीति पुरातनः ।

र.– *पुरम् अग्रगम्यं पुरुपार्थेपु अग्रगण्यं सुखं तत् आतनोति

विस्तारयति इति आतनः । तथा च पुरं शवः सुखम् आतनोति विस्तारयति इति पुरातनः ।

स.– ★पुरेषु देहेषु वैकुण्ठादिषु वा अतनं गमनं यस्य सः पुरातनः ।

★प्राचीनो वा ।

श्री.– ★पुरातनः = अग्रगण्यसुखविस्तारकः ।



## ५०१. शरीरभूतभृत् (शरीरी भूतभृत्) (शरीरी भूतकृत्)

वि.– ★"शीर्यते नित्यमेवास्माद् विष्णोऽस्तु जगदीदृशम् ।
रमते च परो ह्यस्मिन् शरीरं तस्य तज्जगत्" ॥

इत्युक्तन्यायेन शरीरभूतानां भूतानां भरणाच्छरीरभूतभृत् ॥

र.– ★भुवनानि शरीशब्देन उच्यन्ते । रमन्ते इति रः । शर्यः भुवनानि रमन्ते अस्मिन् इति शरीरम् । शरीरम् एव शरीरी ।

★शर्यश्च ते शरीराः भुवनानि । तानि अस्य सन्ति इति शरीरी ।

★अनादिज्ञानादि अभिव्यक्तिकृत् इति भूतकृत् ।

स.– ★शरीराणि भूतानि च बिभर्तीति शरीरभूतभृत् ।

★प्रलये स्वशरीरे भूतानि बिभर्तीति वा ।

★शरीरी भूतभृत् इति पाठे तु, शरीरमस्यास्तीति शरीरी, भूतानि बिभर्तीति भूतभृत् इति भिन्ने पदे ।

★यद्वा, शरीरभूतान्, "यस्य पृथिवी शरीरं" इत्याद्यन्तर्यामिब्राह्मणोक्तपृथिव्यादिशब्दवाच्यगरुडादीन् बिभर्तीति वा अर्थः ।

श्री.– ★शरीरी = भुवनरमणस्थानम् ।

भूतकृत् = अनादिज्ञानव्यक्तिकृत् ।



## ५०२. भोक्ता

वि.– ★पालको भोक्ता ।

★स्वरूपानन्दसन्दोहभोगाद्वा भोक्ता ।

र.– ★समुद्रपूरकत्वादिस्वमहिमानं भोजयति पालयति न विनाशयति इति वा भुंक्त इति वा भोक्ता ।

स.– ★सर्वात्तृत्वात् भोक्ता ।

श्री.– ★भोक्ता = समुद्रपूरणादिस्वमहिमपालकः ।



## ५०३. कपीन्द्रः

वि.– ★कं सुखं पिबन्तीति कपयो मुक्ताः । तेषामिन्द्रः कपीन्द्रः ।

★कपीनां हनुमदादीनां वानराणामिन्द्र इति वा ।

★कपिः सुग्रीवः इन्द्रो राजा यस्माज्जातः स इति वा ।

र.– ★कं सुख, पं द्रविणं कं च पं च कपे ते अस्य स्तः इति कपी, इदं स्तुति-अनुकूल-शक्ति-शब्दितं सामर्थ्यं राति ददाति इति इन्द्रः, कपी च असौ इन्द्रश्च इति कपीन्द्रः ।

स.– ★कपेः वालिनः ईं श्रियं द्रावयतीति कपीन्द्रः । आधिक्ये बिन्दुः,

★कं सुखं पिबन्तीति कपयः मुक्ताः तेषां इन्द्रः इति वा ।

*कपिः हनूमान् इन्द्रः समर्थः येनेति वा कपीन्द्रः ।

श्री.– *कपीन्द्रः = सुखस्रविणवान्, स्तुतिसामर्थ्यदाता च ।



## ५०४. भूरिदक्षिणः

वि.– *भूरयो वह्वो दक्षिणाः समर्थाः धर्ममर्यादां दर्शयन्तो यज्ञं कुर्वन्तोऽस्य विद्यन्त इति भूरिदक्षिणः ।

र.– *भूरि बहुलम् अत्यन्तं दक्षिणः स्वतन्त्रः इति भूरिदक्षिणः ।

स.– "भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि ।
नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः ॥"
इति मेदिन्युक्तेः ।

*भूरि सुवर्णं दक्षिणा यस्यासौ भूरिदक्षिणः ।

*वहुदक्षिणो वा । वहुदाता वा । वहुकुशलो वा ।

*भूरिधनाभिमानिनी दक्षिणा दक्षभागस्थिता रमा यस्येति वा ।

*भूरयो दक्षाः यजमानाः यत्र भूरिदक्षी सत्रयागः तेन सुखं यस्य इति वा भूरिदक्षिणः ।

श्री.– *भूरिदक्षिणः = अतिस्वच्छन्दानुवर्ती ।



सोमपोऽमृतपः सोमः पुरुजित् पुरुसत्तमः ।
विनयो जयः सत्यसन्धो दाशार्हः सात्वतां पतिः ॥ ५४ ॥

## ५०५. सोमपः

वि.– ★यज्ञेष्विज्यत्वेन सोमं पिवतीति सोमपः ।

★सोममिन्दुं उमासहितं रुद्रं च पातीति वा सोमपः ।

र.– ★वाय्वादिदेवैः मन्वादिक्षत्रियैः राजर्षिभिः इतरैः मनुष्यैश्च साकल्येन अनवगतमाहात्म्यः सोमपः । सः वायुः । उः क्षत्रियः राजर्षिः । मः मरणशीलो मनुष्यः सश्च उश्च मश्च सोमाः । ते पाः आर्ताः साकल्येन तन्महिमाअवगतौ अशक्ता यस्मिन् सः सोमपः ।

स.– ★सोमं सोमरसं पिबतीति सोमपः ।

★उमया सहितः सोमः रुद्रः तं पातीति वा ।

★सोमं चन्द्रं पिवतीति वा सोमपः ।

श्री.– ★सोमपः = वायुमनुमनुष्याज्ञातसर्वमाहात्म्यः ।

## ५०६. अमृतपः

वि.– ★अमृतमानन्दं पिबतीति, अमृतान् मुक्तान् पातीति वाऽमृतपः ।

र.– ★मृतो न भवति इति अमृतं स्तोत्रं तत् पिवति श्रोत्रेन्द्रियेण इति अमृतपः ।

स.– ★अमृतं पिवतीति वा, दैत्येभ्यः पातीति वा अमृतपः ।

श्री.– ★अमृतपः = स्तोत्रश्रोता ।



## ५०७. सोमः

वि.– ★"सोमः सौम्यत्वतो हरिः" ।

उना मया च युक्तत्वादुमैर्युक्तत्वतोऽपि वा ।

सोमः स इति वा । इत्यादिना सोमः ।

र.– ★उः हरिः । मा लक्ष्मीः । उश्च मा च आसां प्रतिपाद्यतया अभिमानितया च स्तः इति वा, उ उत्कृष्टाः माः मानरूपाः इति वा उमाः गिरः, ताभिः प्रेरकाभिः सह वर्तते इति सोमः ।

स.– ★उश्च मा च उमे रुद्ररमे, ताभ्यां सहितः सोमः ।

★'भूतानि वै विश्व उमा' इति श्रुतेः, सह उमैः वर्तत इति वा ।

★सौम्यत्वाद्वा सोमः ।

★न विद्यते मा इयत्ता यस्यासौ अमः, सारत्वात् सः, सरतेः डः । सश्चासौ अमश्चेति वा । प्रथमायाः अलुक् । डसर्वोप्रत्ययः । तदुक्तं ऋग्भाष्ये–

"सोमः सौम्यत्वतो हरिः ।

उना मया च युक्तत्वात् उमैर्युक्तत्वतोऽथ वा ।

सोमः सः इति वा" इति ।

★उः क्लेशो न भवतीति सौख्यं तेन सहितः इति वा ।

★उत्कृष्टादनुभवत्वादानन्दानुभवः उमः, तद्युक्तत्वाद्वा सोमः ।

उक्तं च एकादशतात्पर्ये–

"आनन्दानुभवस्तूमः उत्कृष्टानुभवात् स्मृतः" । इति ।

श्री.–★सोमः = हरिरमाप्रतिपादकवाक्सह वर्तमानः ।

## ५०८. पुरुजित्

वि.– *पुरून् बहून् जयतीति पुरुजित् ।

र.– *पूर्यते आयुरजादिभिः ज्ञानिभिः वा आप्यते इति पुरः । शत्रून् जयति इति जित् । पुरुश्चासौ जिच्चेति पुरुजित् ।

स.– *पुरून् बहून् शत्रून् जयति अभिभवति, पुरून् पदार्थान् गुणान् वा जयति । धनजिते स्वर्जिते सत्ताजिते इति प्रयोगात् प्राप्नोतीति वा पुरुजित् ।

श्री.– *पुरुजित् = ज्ञानिप्राप्यः, शत्रुजेता च ।



## ५०९. पुरुसत्तमः

वि.– *पूर्णोऽतिशयेन संश्चेति पुरुसत्तमः ।

र.– *पुरुं वृत्रं सादयति विनाशयति इति पुरुसत् । अतिशयेन पुरुसत् इति पुरुसत्तमः ।

स.– *पुरुः पूर्णः सद्भिः ब्रह्मादिभिः तम्यते काङ्क्ष्यते । शद्लृ विशरणगत्यवसादनेषु इति धातोः भावे क्विप् । सत् अवसादनं सत्तामयति ग्लापयति वा सत्तमः । पुरुश्चासौ सत्तमश्च पुरुसत्तमः ।

*पुरुषु ब्रह्मादिषु अन्तर्यामितया सीदतीति पुरुसत्, अतिशयेन पुरुसत् पुरुसत्तमः इति वा ।

*पुरुः ब्रह्मादिभ्योप्यधिका सत्ता देशतः कालतो विद्यमानता यस्याः सा पुरुसत्ता, सा मा यस्येति ।

श्री.– *पुरुसत्तमः = अतिवृत्रनाशकः ।

### ५१०. विनियोज्यः (विनयः जयः)

वि.– *विनयते दण्डयतीति विनयः ।

*सर्वं जयतीति जयः ।

*केनापि नियोज़्यो न भवतीति विनियोज्य इति वा पाठः ।

र.– *अस्मद्धिंसादौ परप्रयोज्यः न भवति इति विनियोज्यः । (विनयं दण्डं प्रजानां करोति इति विनयः । समस्तानि भूतानि जयति इति जयः इति नामद्वयं व्याचख्युः)

स.– *विप्रियमित्यादिवत् विशब्दो नञर्थः । नियोज्यो न भवतीति विनियोज्यः ।

*विविधं जगत् नियोज्यं यस्येति वा ।

*केचित्तु विनयो जयः इति पाठमवलम्ब्य पदस्य नवाक्षरत्वेऽपि 'न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्,'' इति बह्वृचब्राह्मणोक्तेः । विनयति दण्डं करोतीति विनयः, जयतीति जयः इत्याहुः ।

श्री.– *विनियोज्यः = न परप्रेर्यः ।



### ५११. सत्यसन्धः

वि.– *सत्या सन्धा प्रतिज्ञाऽस्येति सत्यसन्धः ।

र.– *सत्यं गोव्रजं सन्दधति वलात् मोचयित्वा पोषयति इति सत्यसन्धः ।

स.– *सत्या सन्धा प्रतिज्ञा यस्येति सत्यसन्धः ।

★सत्यं सन्धयतीति वा ।

श्री.– ★सत्यसन्धः = चलद्गोव्रजपोषकः ।



## ५१२. दाशार्हः

वि.– ★दशार्हस्य अपत्यं पुमान् दाशार्हः ।

★दिशन्तीति दशा देवा तेषामर्हः पूज्यो वायुः, तस्यायं स्वामीति वा ।

र.– ★सूर्यादीनां प्रकाशवत्त्वादिधर्मजातं ददाति इति दाशं पौंस्यं सामर्थ्यं तदर्हति इति दाशार्हः ।

स.– ★दाशं सुखादिदानम् । "दाशृ दाने" इति धातोरच्, तदर्हतीति दाशार्हः ।

★यद्वा दाशार्हकुलोद्भवः ।

★दशार्हाणां यादवप्रभेदानामयं दाशार्हो वा ।

★दाशराजपुत्रीत्वात् दाशा सत्यवती तां अर्हति पुत्रत्वेनेति वा ।

श्री.– ★दाशार्हः = सूर्यादिप्रकाशदानसमर्थः ।



## ५१३. सात्वतांपतिः

वि.– ★सात्वतं नाम पञ्चरात्रम्, मन्त्रविशेषो वा । तस्मात् तत्करोति तदाचष्टे इति णिचि कृते क्विप्प्रत्यये तयोर्लोपे च कृते टिलोपे च सति सात्वत् इति पदं भवति । सात्वतः

**पञ्चरात्रविदः, तेषां पतिः योगक्षेमकर इति सात्वतां पतिः । सात्त्वतां यादवानां वा, सत्त्ववतां बलज्ञानसमाहारवतां देवानां वा पतिः ।**

र.– **★सत्वं बलं सत्वगुणो वा तत् अस्य अस्ति इति सात्वतः । सात्वताः यादवाः तेषां पतिः पालकः सात्वतां पतिः ।**

स.– **★सात् परमात्मा सात्वन्तो भक्ताः तेषां पतिः पालकः ।**

**★यद्वा सात्त्वतां पाञ्चरात्रिकाणां श्रियादिनवमूर्तीनां पतिः आदिमूर्तिः ।**

तदुक्तम् एकादशे भागवते–

"सात्वतां नवमूर्तीनां आदिमूर्तिरहं पुरा" । इति ।

तात्पर्ये च–

"विष्णोः श्रियो ब्रह्मणश्च वायोः सङ्कर्षणस्य च ।
सुपर्णस्य च सम्प्रोक्ताः प्रत्येकं नव मूर्तयः ।
पूज्याः सात्वततन्त्रेषु तत्राऽद्या मूर्तयो हरेः ।
प्रधानास्ता हि सर्वासां मूर्तीनां हरिमूर्तयः ।
अभेदादेव मूर्तीनां एकमूर्तिश्च सा स्मृता ॥" इति ।

"स्वरूपतश्च गुणतो न विशेषः कथञ्चन ।
विष्णोस्तु नवमूर्तीनां पूजा च नवधेष्यते ॥" इति च ।

नारायणः परं ब्रह्म वासुदेवादिकास्तथा ।
नरसिंहवराहौ च परंज्योतिः हरेर्नव ।
इन्दिरा च रमा लक्ष्मीः हिरण्या गगना तथा ।
रक्ता रक्ततरा भूतिः विभूतिश्च श्रियो नव ॥

ब्रह्मा चतुर्मुखो धाता विधाता विधिरेव च ।
कर्ता विरिञ्चो भूतेशः शतानन्दश्च ता नव ।
धनञ्जयमृते चैव वायोश्च नव मूर्तयः ॥
शेषोऽनन्तो नरश्चैव लक्ष्मणो बल एव च ।
सङ्कर्षणो नीलवासाः जगद्भक्षो जलेशयः ॥
सुपर्णो गरुडश्चैव वैनतेयो महाशनः ।
नववर्णः पञ्चवर्णः पन्नगाशोऽमृताकरः ।
तथैव सर्वदेवात्मा सुपर्णो नवधा स्मृतः ॥'' इति ।

**श्री.– *सात्वतांपतिः = बलवत्पतिः ।**



**जीवो विनयितासाक्षी मुकुन्दोऽमितविक्रमः ।**
**अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥ ५५ ॥**

## ५१४. जीवः

**वि.– *''प्राणान् धारयते यस्मात् स जीवः परमेश्वरः ।**
**अजीवोऽपि महातेजास्त्वथवा जीवयन् जगत्'' ॥**
इति स्कान्दवचनात् जीवः ।

''विष्णुर्जीव इति प्रोक्तः सततं प्राणधारणात् ।
स प्रविश्य शरीरं च स्थावरं जङ्गमं तथा'' ॥ इति च ।

''स जीवनामा भगवान् प्राणधारणहेतुतः ।
उपचारेण जीवाख्या संसारिणि निगद्यते'' ॥ इति च ॥

र.– *तुर्वश-रुम-रुशम-श्यावकादिपु स्थित्वा तदीयप्राणान् धारयति इति जीवः ।

*यद्वा जीवः वृहस्पतिः, तेन तदभिमन्यमानस्तोत्रात्मकशब्दः जीवः स्तोमः विपयतया अस्य अस्ति इति जीवः । (कण्वादिकृतस्तोत्रविपयः इति यावत्)

स.– *जीवयति जनान् इति जीवः ।

श्री.– *जीवः = वार्हस्पत्यस्तोत्रवान् ।



५१५. **विनयितासाक्षी (विनयिता, साक्षी)**

वि.– *प्रजानां विनयितां विनयवत्त्वं साक्षात्पश्यतीति विनयितासाक्षी ।

र.– *भक्तान् स्वप्राप्तव्यं नयति, भक्तान् स्वात्मानं प्रापयति इति विनयिता ।

अश्नाति अश्नोति वा अर्थान् अनेन इति अक्षं वलम्, अक्षेण सहितं साक्षं पानं, तत् अस्य अस्ति इति साक्षी । (वलसहितपानवान्, वलाभिवृद्धिकरसोमपानवान् । विनयितासाक्षी इति एकमेव विधाय विनयिता विनयित्वं तस्य साक्षी इति अपि योजयन्ति)

स.– *विनयितायाः विनयवत्तायाः साक्षी द्रष्टा विनयितासाक्षी ।

श्री.– *विनयिता = भक्तस्वात्मप्रापकः ।

साक्षी = वलवान् ।



## ५१६. मुकुन्दः

वि.– ★मुक्तिं ददातीति मुकुन्दः ।

र.– ★मुक्तिं ददाति इति मुक्तिदः मुक्तिदः एव मुकुन्दः ।

स.– ★मुक्तिं ददातीति मुकुन्दः ।

श्री.– ★मुकुन्दः = मुक्तिदाता ।



## ५१७. अमितविक्रमः

वि.– ★अमिता अपरिच्छिन्नाः विक्रमाः शौर्याणि वा अस्येति अमितविक्रमः ।

र.– ★अमिताः विक्रमाः यस्य सः अमितविक्रमः ।

स.– ★अमितः विक्रमः पराक्रमः यस्य सः अमितविक्रमः ।

★साकल्येन अविज्ञातः अमितः, विना गरुडेन क्रमः पाद-विक्षेपः यस्य सः विक्रमः, अमितश्चासौ विक्रमश्च इति ॥

श्री.– ★अमितविक्रमः = असङ्ख्यपराक्रमः ।



## ५१८. अम्भोनिधिः

वि.– ★देवादयोऽम्भांसि अस्मिन्निधीयन्त इत्यम्भोनिधिः ।

"तानि वा एतानि चत्वार्यम्भांसि देवा मनुष्याः पितरोऽसुराः" इति श्रुतेः ।

★अम्भसां द्युआद्युपरिलोकानामाश्रयो वा ।

"अदोऽम्भः परेण दिवं द्यौः" इत्यैतरेयश्रुतेः ।

र.– ★आप्नुवन्ति परमेश्वरमिति अम्भांसि यदुतुर्वस्वादिभक्त-जातानि निधीयन्ते अत्र इति निधिः अम्भोनिधिः ।

स.– ★अम्भोनिधिरिव अम्भोनिधिः गाम्भीर्येण ।

★अम्भांसि देवाः कर्माणि वा । अं विष्णुं बिभर्तीत्यम्भः विष्णुलोकः, दिवः परे महदादयश्च इत्यैतरेयभाष्योक्तेः, अम्भांसि विष्णुलोकादयो वा, नितरां धीयन्ते अस्मिन्निति वा अम्भोनिधिः । देवाश्च दिव्यानि च लोकाश्च लोकिनश्च आलोकाश्च आलोकिनश्च विष्णावोताश्च प्रोताश्च, तस्मिन्नपो मातरिश्वा दधाति इत्यादिश्रुतेः ।

श्री.–★अम्भोनिधिः = भक्ताधारः ।

## ५१९. अनन्तात्मा

वि.–★देशतः कालतो गुणतश्चापरिच्छिन्नरूपत्वादनन्तात्मा ।

र.– ★नाशहेतुत्वात् अन्तः रोपः । यद्वा वन्धनकर्मणः अन्तति वध्नाति इति वन्धकत्वात् अन्तः रोपः । न विद्यते भक्तेषु अन्तः रोपः यस्य सः अनन्तः । आत्मा दाता अनन्तश्चासौ आत्मा च इति अनन्तात्मा ।

स.– ★अनन्ताः अपरिमिताः आत्मानो देहाः यस्येति वा ।

★अन्तः अतिवन्धने, न विद्यते अन्तः वन्धः यस्य सः अनन्तः । (अवद्धश्चासौ) अनन्तश्चासौ आत्मा च इति वा ।

★अनन्तानां अनन्तसङ्ख्याकानां अवद्धानां वा मुक्तानां आत्मा स्वामीति वा अनन्तात्मा ।

*अनन्ते शेषे आत्मा देहो यस्येति वा ।

श्री.– *अनन्तात्मा = भक्तेष्वरोषः, दाता च ।



## ५२०. महोदधिशयः

वि.– *प्रळये महोदधिमध्ये शेत इति महोदधिशयः ।

र.– *उत् उत्कर्षेण अधि अधिकं शं सुखसाधनत्वात् द्रविणम्, उदधिशं यापयति प्रापयति इति उदधिशयः, महान् च असौ उदधिशयश्च महोदधिशयः ।

स.– *दधिशये हस्तो यस्य वामनकृष्णादिरूपेण इति दधिशयः, महांश्चासौ उत्कृष्टश्चासौ दधिशयश्चेति महोदधिशयः ।

*महोदधौ शेते इति वा ।

*उदधिः उत्कृष्टाः अधिकाः चतुर्मुखादयः शये इत्युदधिशयः, स्वाधीन इति यावत्, महांश्चासौ उदधिशयश्चेति वा ।

श्री.– *महोदधिशयः = महान्-उत्कृष्टाधिकसुखप्रापकः ।



## ५२१. अन्तकः

वि.– *सर्वसंहारकत्वादन्तकः ।

र.– *अन्तः निर्णयः अभीष्टवर्षणादिविषयः तं करोति इति अन्तकः ।

स.– *अन्तः बन्धः येषामस्तीति अन्ताः, अन्तानां जरासन्धादिभिः बद्धानां राज्ञां कं सुखं येनेति वा ।

*अन्तयति बन्धयति कं सामुद्रं जलं येन रामरूपेण इति वा।

*अन्तयति नाशयति सर्वमित्यन्तकः ।

श्री.– *अन्तकः = अभीष्टवर्षणादिनिश्चयकारी ।



अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥ ५६ ॥

## ५२२. अजः

वि.– *अजति गच्छति शोभते वेत्यजः ।

र.– *स्वरथे अश्वौ अजति गमयति योजयति इति अजः ।

स.– *अजः चतुर्मुखजनकः, "कार्यकारणयोः एकशब्दव्यवहृतिः भवेत्" इत्युक्तेः ।

श्री.– *अजः = स्वरथेऽश्वयोजकः ।



## ५२३. महार्हः

वि.– *पूज्येषु महत्त्वात् महार्हः ।

र.– *महत् पयआदिना संसिक्तत्वात् उत्तमं अर्हं सोमाख्यम् अन्नं यस्य सः इति महार्हः ।

स.– *महस्य पूजादिरूपोत्सवस्य अर्हः योग्यः इति महार्हः ।

श्री.– *महार्हः = उत्तमयोग्यसोमाख्यान्नवान् ।



## ५२४. स्वाभाव्यः

वि.– ★नित्यसिद्धत्वात् स्वाभाव्यः ।

★स्वकीयेन भावेन भक्त्या प्राप्यत्वाद्वा स्वाभाव्यः ।

र.– ★स्वेन भाव्यः प्रवर्तनीयः रथः स्वभाव्यः, स्वभाव्यरथ-सम्बन्धी स्वाभाव्यः (रथे स्थितः)

स.– ★नित्यनिष्पन्नफलकत्वेन न विद्यते भाव्यं यस्य इति अभाव्यः, स्वतन्त्रश्चासौ अभाव्यश्च इति स्वाभाव्यः ।

★स्वस्य आभा इव आभा येपान्ते ज्ञानानन्दादिगुणवत्तया स्वसदृशाः योग्यजीवाः, ते अव्याः रक्षणीयाः यस्य इति वा ।

★भव्यानां मङ्गलानां समूहो भाव्यम् । समूहार्थे अण्, आ समन्तात् भाव्यं यस्य इति आभाव्यः, स्वश्चासौ आभाव्यश्च इति वा ।

श्री.– ★स्वाभाव्यः = स्वप्रवर्त्यरथवान् ।



## ५२५. जितामित्रः

वि.– ★जिता अमित्रा रागद्वेपादयो बाह्या रावणादयश्चानेनेति जितामित्रः ।

र.– ★जितः आ सम्यक् मित्रः सूर्यः याभ्यां तौ जितामित्रौ तौ अस्य स्तः इति जितामित्रः । (सूर्यम् अपि उल्लङ्घ्य गच्छन्तौ अस्य अश्वौ इति)

स.– ★जिताः अमिताः शत्रवः येन इति जितामित्रः ।

श्री.– *जितामित्रः = सूर्यजिदश्ववान् ।



## ५२६. प्रमोदनः

वि.– *स्वभक्तान् प्रमोदयतीति प्रमोदनः ।

र.– *प्रकर्षेण मोदः सुखं प्रमोदः तं नयति इति प्रमोदनः ।

स.– *स्वयं प्रमोदत इति वा, प्रमोदयति जनान् इति वा, प्रमोदं नयति इति वा प्रमोदनः ।

*प्रकृष्टा मा रमा ज्ञानं वा यस्येति प्रमः, उत्कृष्टः अनः यस्येति उदनः, प्रमश्चासौ उदनश्च इति वा ।

श्री.– *प्रमोदनः = प्रकृष्टसुखनेता ।



## ५२७. आनन्दः

वि.– *सुखस्वरूप आनन्दः ।

र.– *नन्दयति इति नन्दः स्तोत्रम् । आ समन्तात् ऋत्विग्भिः क्रियमाणः नन्दः उक्थादिस्तोत्रं यस्मिन् सः आनन्दः ।

स.– *आनन्दस्वरूपत्वात् आनन्दः, आनन्दी वा, अर्श आद्यच् ।

श्री.– *आनन्दः = सर्वतः ऋत्विक्कृतस्तोत्राधारः ।



## ५२८. नन्दनः

वि.– *स्वसन्निधानेन सर्वभूतानि नन्दयतीति नन्दनः ।

र.– *नन्दः सुखं तं नयति प्रापयति इति नन्दनः सुखप्रापकः इति वा नन्दयति इति नन्दनः ।

स.– *नन्दयतीति नन्दनः ।

श्री.– *नन्दनः = सुखप्रापकः ।



## ५२९. नन्दः

वि.– *समृद्धत्वात् नन्दः ।

र.– *स्तुत्या नन्दति इति नन्दः ।

स.– *नन्दः समृद्धः ।

श्री.– *नन्दः = स्तुत्यानन्दवान् ।



## ५३०. सत्यधर्मा

वि.– *सत्याः धर्माः ज्ञानानन्दादयोऽस्येति सत्यधर्मा ।

र.– *ध्रियते जगत् एभिः इति धर्माः अवतारविशेपाः, सत्याः समीचीनाः वहवः धर्माः अवतारविशेपा अस्य सन्ति इति सत्यधर्मा ।

स.– *सत्याः ज्ञानादयः धर्माः यस्य इति वा ।

*सत्यं जगत् धारयति इति सत्यधर्मा ।

श्री.– *सत्यधर्मा = सम्यगनेकावतारः ।



## ५३१. त्रिविक्रमः (अत्रिविक्रमः)

**वि.– ★त्रयो विक्रमास्त्रिषु लोकेषु क्रान्ता यस्य स त्रिविक्रमः ।**

"त्रीणि पदा विचक्रमे" इति श्रुतेः ।

एवं वा–

"त्रिरित्येवं त्रयो वेदाः कीर्तिता मुनिसत्तमैः ।
क्रमन्नेतांस्तु सर्वांस्त्रिविक्रमोऽसि जनार्दनः" ॥

इति हरिवंशेषु ।

**र.– ★त्रिषु लोकेषु अध्यात्म–अधिभूत–अधिदैवाख्येषु त्रिषु स्थानेषु विक्रमः देहे स्थितस्यापि विकाराद्यभावादिरूपः सर्वभूतैः अनावृतत्वादिरूपः शत्रुषु भेदकत्वादिरूपश्च शौर्य-विशेषः यस्य सः त्रिविक्रमः ।**

**स.– ★त्रयः विक्रमाः पादविक्षेपाः यस्य इति वा ।**

**★त्रिषु लोकेषु विना गरुडेन पादविक्षेपः यस्य इति वा ।**

**★त्रीन् वेदान् कालान् वा गुणान् वा लोकान् वा देवमानुपदानवान् वा चेतनाचेतनसात्मकदेहमिश्रान् वा पदविक्रम इति वा । तदुक्तं ऋग्भाष्ये–**

"वेदान् कालान् गुणान् लोकान् देवमानुषदानवान् ।
चेतनाचेतनान् मिश्रान् त्रीणि पादा विचक्रमे" ॥ इति ।

**★अत्रे ऋषेः विक्रमः दत्तादिरूपेण यस्य इति अत्रिविक्रमः ।**

श्री.– ★त्रिविक्रमः = त्रैलोक्यशौर्यः ।



महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ५७ ॥

## ५३२. महर्षिः (कपिलाचार्यः)

वि.– ★महर्षिः कपिलाचार्य इति सविशेषणमेकं नाम कपिलाचार्यः महांश्चासौ ऋषिश्चेति महर्षिः, सर्वज्ञ ऋषिः ।

★सुखरूपः पालयते लीयते च जगदनेनेति कपिलः ।

''ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् ।
सुखादनन्तात् पालनाल्लालनाच्च यं वै देवं कपिलमुदाहरन्ति'' ॥
इति बाभ्रव्यशाखायाम् ।

★सुखं पिवति लीलयैवेति वा कपिलः ।

शुद्धात्मतत्त्वज्ञानलक्षणं साङ्ख्यमाचिनोतीति आचार्यः ।

कपिलश्चासावाचार्यश्चेति कपिलाचार्यः ।

र.– ★महान् निरुपचरितः ज्ञानी ऋषिः महर्षिः ।

स.– ★महांश्चासौ ऋषिश्च महर्षिः ।

श्री.– ★महर्षिः = महाज्ञानी ।



## ५३३. कपिलाचार्यः

र.– ★कं सुखं पिवति इति कपिः, लाति शिष्यान् अनुगृह्णाति इति लः, आचरणीयत्वात् आचार्यः, कपिश्चासौ लश्चासौ आचार्यश्च कपिलाचार्यः ।

स.– *संसारकम्पलयहेतुत्वात् कपिलः, यद्वा कं सुखं, पिवति इति, आनन्दानुभवात् लात् सर्वादानाच्च कपिलः । 'ला आदाने' इति धातुः । यद्वा कं ब्रह्माणं पिं पिनाकिनं रुद्रं च लालयति इति कपिलः, (स चासौ आचार्यश्च कपिलाचार्यः).

*'महर्षिकपिलाचार्यः' इत्येकं नाम इति सम्प्रदायविदः ।

श्री.– *कपिलाचार्यः=सुखप्रापकः, शिष्यानुग्रही, आचरणीयश्च ।



## ५३४. कृतज्ञः

वि.– *स्वकृतं सृष्ट्यादिकं जानातीति कृतज्ञः ।

र.– *कृतं हवं शृणोति जानाति इति कृतज्ञः ।

स.– *कृतं जानातीति कृतज्ञः ।

श्री.– *कृतज्ञः, आह्वानश्रोता ।



## ५३५. मेदिनीपतिः

वि.– *मेदिन्याः भूमेः पतिः मेदिनीपतिः ।

र.– *मेदः स्नेहनम् अभीष्टवर्पणं तत् अस्याः अस्ति इति मेदिनी जूतिः भक्ताभीष्टवर्पणाभिप्रायः, तस्याः पतिः पालकः आश्रयः । भक्ताभीष्टवर्पणशीलाभिप्रायवान् इति मेदिनीपतिः ।

स.– *मेदिनीपतिः भूपतिः ।

श्री.– *मेदिनीपतिः = भक्ताभीष्टवर्पणशीलाभिप्रायवान् ।



## ५३६. त्रिपदः

वि.– ★त्रीणि पदान्यस्येति त्रिपदः ।

''त्रिपादस्य'' इति श्रुतेः ।

र.– ★त्रीणि अश्वरथकशादीनि पदानि लक्षणानि चिह्नानि यस्य स त्रिपदः ।

स.– ★त्रीणि पदानि वैकुण्ठादिस्थानानि यस्य त्रिपदः ।

★त्रीणि पदानि गायत्रीपादाः प्रतिपादकाः यस्येति वा ।

★त्रिभ्यः पादेभ्यः पातीति त्रिपं ज्ञानं तद्ददातीति वा ।

श्री.– ★त्रिपदः = अश्वरथकशादिचिह्नः ।



## ५३७. त्रिदशाध्यक्षः

वि.– ★तिसृणां गुणत्रयावेशेन जातानां दशानामवस्थानां सृष्ट्यादीनां जाग्रदादीनां वा स्वामी त्रिदशाध्यक्षः ।

र.– ★तिस्रः दशाः श्रेष्ठाः यष्टृत्वाधिकार–यागकर्तृत्व–अश्वधानादानाख्या अवस्था येषां ते त्रिदशाः यागाधिकारिणः तेषाम् अध्यक्षः स्वामी इति त्रिदशाध्यक्षः ।

स.– ★तिसृणां दशानां जन्मसत्ताविनाशरूपाणां अध्यक्षः ।

★त्रीन् पादान् दशति इति वा । त्रिः त्रितीया दशा यौवनरूपा सदा येषमिति वा, त्रयो वा दश च इति त्रिदशाः देवाः, बुहव्रीहौ सङ्ख्येये डजबहुगणादिति डच्, तेषामध्यक्षः इति वा ।

श्री.– *त्रिदशाध्यक्षः = यागाधिकारिस्वामी ।



## ५३८. महाशृङ्गः

वि.– *महत् शृङ्गं महीमयनौकाबन्धनं यस्य स महाशृङ्गः ।

र.– *महत् उत्तमं शृङ्गं प्राधान्यं यस्य सः महाभृङ्गः ।

स.– *"भृङ्गं प्राधान्यसान्वोश्च" इति कोशात् महाभृङ्गं प्राधान्यं यस्य स महाभृङ्गः ।

*महाभृङ्गं ज्ञानं यस्येति वा, भृङ्गं ज्ञानं तद्वतश्चैव नित्यं इति ऋग्भाष्योक्तेः ।

*मत्स्यावतारे महाभृङ्गं यस्येति वा ।

श्री.– *महाभृङ्गः = उत्तमप्राधान्यः ।



## ५३९. कृतान्तकृत्

वि.– *कृतस्यान्तं संहारं करोतीति कृतान्तकृत् ।

*कृतान्तं सिद्धान्तं करोतीति वा ।

*मृत्युमपि च्छिनत्तीति वा ।

र.– *अन्तः निर्णयः, कृतः अन्तः येन सः कृतान्तः सिद्धान्तः, तस्मिन् क्रियते निर्णीयत इति कृत् कृतान्तकृत् ।

स.– *कृतस्य दुष्कर्मणः अन्तं नाशं करोतीति वा ।

*कृतस्य पौरुपेयस्य अन्तं निर्णयं करोतीति वा ।

*कृतेन कर्मणा अन्तं वन्धं करोतीति वा ।

*कृतान्तं ब्रह्मसूत्रादिनिर्माणेन सिद्धान्तं करोतीति वा ।

*कृतान्तं मृत्युं कृणोतीति वा, कृतान्तकृत् ।

श्री.– *कृतान्तकृत् = सिद्धान्तनिर्णयः ।



महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ५८ ॥

### ५४०. महावराहः

वि.– *महांश्चासौ वराहश्चेति महावराहः ।

*वरैरहेयत्वाद् वा वराहः ।

र.– महत् उत्कृष्टं वरं माहात्म्यं यस्य सः महावरः, सम्यक् स्तोत्राणि गच्छति हृदये गमयति इति आहः, महावरश्चासौ आहश्च महावराहः ।

स.– *वरान् दैत्यश्रेष्ठान् आहन्तीति वराहः, रुक्मिणीस्वयंवर-काले वरत्वेनागतं शिशुपालं आहन्तीति वा, वरैः अहेय-त्वाद्वा, महांश्चासौ वराहश्च महावराहः ।

*महाऽवराः अतिनीचाः कल्यादयः तान् आहन्ति तमसि प्रक्षेपेण इति महावराहः ।

श्री.– *महावराहः = उत्कृष्टमाहात्म्यः, स्तोत्रज्ञश्च ।



## ५४१. गोविन्दः

वि.– ★गोभिर्वाणीभिर्वेदरूपाभिर्वेद्यत इति गोविन्दः ।

"गोभिरेव यतो वेद्यो गोविन्दः स उदाहृतः"

इति विष्णुतिलके ।

★वलेः सकाशात् गां भूमिं विन्दत इति वा ।

र.– ★गच्छति अवगमयति इति गो वाक् स्तोत्रम्, गां विन्दति इति गोविन्दः ।

स.– ★गां समुद्रं जलं लभते इति गोविन्दः ।

★गां नेत्रं धृतराष्ट्रं विन्दतीति वा ।

श्री.– ★गोविन्दः = स्तोत्रलाभी ।



## ५४२. सुषेणः

वि.– ★सु शोभना सेना प्रकृतिर्महदादिरूपा यस्य स सुषेणः ।

र.– ★सिनोति बध्नाति इति सेनः, सु सम्यक् स्वात्मनि भक्तान् सिनोति बध्नाति स्थापयति इति सुषेणः ।

स.– ★शोभना सेना यस्य सः सुषेणः ।

★षीङ् दाने इति धातोः अतिशयेन दाता वा ।

श्री.– ★सुषेणः = सम्यक् स्वात्मनि भक्तस्थापकः ।



## ५४३. कनकाङ्गदी

वि.– *कनकेन निर्मितान्यङ्गदान्यस्य विद्यन्त इति कनाकाङ्गदी ।

र.– *कनकं गमनशीलं वेगवत् । अङ्गानि शत्रूणां विदारयति इति अङ्गदम् कनकं वेगवद् अङ्गदं शत्रुशरीरभेदकं वज्रं हस्ते अस्य अस्ति इति कनकाङ्गदी ।

स.– *सुवर्णमयाङ्गदवत्वात् कनकाङ्गदी ।

श्री.– *कनकाङ्गदी = वेगवच्छत्रुभेदकवज्रहस्तः ।



## ५४४. गुह्यः

वि.– *रहस्योपनिषदादिवोध्यत्वात्, गुहायां हृदयाकाशे निहित इति वा गुह्यः ।

र.– *संवरणीयः आच्छानदीयः अप्रकाश्यः इति गुह्यः ।

स.– *गोप्यत्वात् गुह्यः ।

*गुहनामकेन अर्चितत्वाद्वा गुह्यः ।

श्री.– *गुह्यः = आच्छादनीयः ।



## ५४५. गभीरः

वि.– *ज्ञानैश्वर्यवलादिभिर्गम्भीरो गभीरः ।

र.– *गभीराः अभिलापविपयाः सोमरसाः अस्य सन्ति इति गभीरः ।

स.– *गभीरो गम्भीरः ।

★गम्लृ गतौ, भा दीप्तौ आभ्यां डः, गभावस्यास्तीति गभी, तया लक्ष्म्या रमते इति ईरः, गभीचासावीरश्चेति गभीरः ।

★यद्वा न गच्छन्ति न जानन्तीत्यगाः अज्ञानिनो दैत्याः, तेभ्यो भियं राति ददातीति वा ।

★अगेन गोवर्धनपर्वतेन भियं वृष्टिभियं रेपयति नाशयतीति वा गभीरः ।

श्री.– ★गभीरः = अभिलापरसवान् ।



## ५४६. गहनः (अगहनः)

वि.– ★दुष्प्रवेशत्वाद् गहनः ।

★अवस्थात्रयभावाभावसाक्षित्वादगहनो वा ।

र.– ★न विलोडनीयः गहनः, यद्वा गहं तं नयति इति गहनः ।

स.– ★ज्ञातुमशक्यत्वात् गहनः ।

★अगान् पर्वतान् पक्षच्छेदादिना हन्तीत्यगहः इन्द्रः तं नयतीति वा अगहनः ।

श्री.– ★गहनः = गृहप्रापकः ।



## ५४७. गुप्तः

वि.– ★वाह्याक्षज्ञानागोचरत्वाद् गुप्तः ।

"एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते" इति श्रुतेः ।

र.– ★रक्षकः गुप्तः ।

स.– ★गुप्तः अयोग्यान् जनान् प्रत्याच्छादितः ।

श्री.–★गुप्तः = रक्षकः ।



## ५४८. चक्रगदाधरः

वि.– ★जगद्रक्षार्थं चक्रगदे धारयतीति चक्रगदाधरः ।

र.– ★करोति शत्रुजयादिकं धनदानादिकं च इति चक्रः । गदति भक्तान् प्रति वदति इति गदः । आ सम्यक् धाति (धरति) प्रजाः पोषयति इति आधरः । चक्रश्चासौ गदश्चासौ आधरश्च इति चक्रगदाधरः ।

स.– ★धरतीति धरः चक्रगदयोः धरः चक्रगदाधरः ।

★चक्रे सैन्ये तिष्ठन्तीति चक्रगाः नरकासुरादयः, तान् द्यति खण्डयतीति चक्रगदाः, न विद्यते धारकः यस्येत्यधरः, आ सम्यक् धरतीति वा, चक्रगदश्चासौ अधरश्चेति वा चक्रगदाधरः ।

श्री.–★चक्रगदाधरः = धनदानादिकर्ता, भक्तप्रतिवक्ता, प्रजापोषकश्च ।



वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ५९ ॥

## ५४९. वेधाः

वि.– ★विदधातीति विधाता वेधाः । सर्वज्ञो वा ।

र.– *भक्तगृहं प्रति गमनं विदधाति इति वा, भक्तकृतम् आह्वानं शृणोति जानाति इति वा वेधाः ।

स.– *विशेषेण धारणपोषणकर्ता वेधाः ।

श्री.– *वेधाः = भक्तगृहागमकर्ता ।



## ५५०. स्वाङ्गः

वि.– *स्वयमेव कार्यकरणे अङ्गं सहकार्यस्येति स्वाङ्गः । स्वरूपमेवाङ्गं न पृथगस्येति वा स्वाङ्गः ।

र.– *स्वशब्दः धनवाची कीर्तिः एव महतां धनं स्वकीर्तिरूपं धनं गमयति स्वात्मानं प्रापयति भूषयति इति स्वाङ्गः ।

स.– *स्वरूपभूतानि अङ्गानि यस्येति वा ।

*स्वतन्त्राणि अङ्गानि यस्येति वा ।

*स्वयमेव सृष्ट्यादावङ्गं यस्येति वा स्वाङ्गः ।

श्री.– *स्वाङ्गः = स्वात्मानं कीर्तिरूपधनप्रापकः ।



## ५५१. अजितः

वि.– *न केनाप्यवतारेषु जित इत्यजितः ।

र.– *केनापि जितः न इति अजितः ।

स.– *अजितः केनाप्यपराजितः ।

श्री.– *अजितः = अपराजितः ।



## ५५२. कृष्णः

वि.– ★कृष्णवर्णत्वात् कृष्णः ।

र.– ★कर्षति सज्जनानां मनः स्वात्मनि इति कृष्णः ।

स.– ★कृष्णरूपत्वात् पापमूलस्य अग्निरूपत्वाद्वा कृष्णः ।

''कृष्णः सीसादिलोहेषु कृष्णो नीले कले कलौ ।
शूद्रे काके पिके व्यासे ध्वांक्षे पक्षे अर्जुने हरौ ॥'' इति कोशात् ।

श्री.– ★कृष्णः = सज्जनमनोहरः ।



## ५५३. दृढः

वि.– ★स्वरूपसामर्थ्यादिः प्रच्युत्यभावाद् दृढः ।

र.– ★स्वभक्तं स्थूलं वलिनं वा करोति इति दृढः ।

स.– ★दृढः दार्ढ्यवान् ।

श्री.– ★दृढः = स्वभक्तबलवत्त्वकृत् ।

## ५५४. सङ्कर्षणः (अच्युतः)

वि.– ★संहारसमये युगपत् प्रजाः कर्षतीति सङ्कर्षणः ।
तस्यैव विशेषणमच्युत इति ।

र.– ★दुरितानि भक्तेभ्यः सङ्कर्षति अपकर्षति इति सङ्कर्षणः ।

स.– ★सङ्कर्षणोऽच्युतः इत्येकं नामेति सम्प्रदायविदः । सम्यक् कर्षणात् सङ्कर्षणः ।

श्री.– ★सङ्कर्षणः = भक्तदुरितापकर्षः ।

## ५५५. अच्युतः

र.– ★न च्यवते जगदैश्वर्यादिभ्यः इति अच्युतः ।

स.– ★अच्युतः न विद्यते च्युतं यस्य सः तथा ।

श्री.–★अच्युतः =' जगदैश्वर्याच्च्युतिरहितः ।



## ५५६. वरुणः

वि.– ★"आवृणोतीति वरुणस्तमसाऽज्ञानतोऽपि वा ।
वरमुन्नयतीत्यस्मात् वरानन्दत्वतोऽपि वा" ॥
इति वरुणः ।

र.– ★भक्तैः व्रियते इति वरुणः ।

स.– ★आवृणोतीति वरुणः ।

★वरं उत्तमं जीवं उन्नयत्यूर्ध्वं नयतीति वा ।

★"वर उत्तमो णो हि निवृत्तिवाचकः" इत्युक्तेः ण आनन्दो यस्येति वा ।

तदुक्तं ऋग्भाष्ये–

"आवृणोतीति वरुणः तमसाऽज्ञानतोऽपि वा ।
वरमुन्नयतीत्यस्मात् वरानन्दत्वतोऽपि वा ।" इति ।

★व्रियते भक्तैः वृणुते भक्तानिति वा ।

★वाति जानातीति वः, अरुणरूपत्वात् अरुणः वश्चासावरुणश्चेति वरुणः । "रक्तं रौग्ममिति" श्रुतेः ।

श्री.–*वरुणः = भक्तवरणीयः ।



## ५५७. वारुणः (वारणः)

वि.– *दैत्यादीन्, भक्तानामनिष्टं वा वारयतीति वारणः ।

र.– *वरुणस्य वसुनः दाता वारुणः ।

स.– *वरुणस्यायं वारुणः ।

*वारण इति पाठे वारयति भक्तान् इष्टमिति वा ।

*वारां समूहो वारं समुद्रः, तस्य णः सुखं यस्मादिति वा ।

*"सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः" इत्युक्तेः वारुणः श्रेष्ठः इति वा ।

श्री.–*वारुणः = वरणीयदाता ।



## ५५८. वृक्षः (अवृक्षः)

वि.– *जगदाधारत्वाद् वृक्षः ।

"वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः" इति श्रुतेः ।

*संहारकाले सर्वं वृश्चतीति वा वृक्षः ।

र.– *वृक्षते 'अहं धनं दास्यामि' इति एवम् उक्तप्रकारेण भक्तान् वृणोति इति वृक्षः ।

*यद्वा व्रश्चति भक्तानां आपदः छिनत्ति इति वृक्षः ।

स.– *भक्ताभीष्टदाने कल्पवृक्षसदृशत्वात् वृक्षः ।

★वृक्ष वरण इति धातोः वृणोतीति वा ।

★अवृक्ष इति च्छेदे छेदकरहित इत्यर्थः, ओ व्रश्चू छेदने इति धातोः ।

श्री.– ★वृक्षः = भक्तापच्छेदकः ।



### ५५९. पुष्कराक्षः

वि.– ★हृत्पुण्डरीके प्रकाशमानत्वात् पुष्कराक्षः ।

र.– ★पूर्णत्वात् पुष्करः । अश्यते मनसा इति अक्षः पुष्करश्चासौ अक्षश्च पुष्कराक्षः ।

★यद्वा भक्तमनसा अक्ष्यते व्याप्यते इति अक्षः ।

★यद्वा पुष्करं श्रवणादिपरिपुष्टं मनः, तेन व्याप्यते इति वा, तत् स्वयं व्याप्नोति इति वा पुष्कराक्षः ।

स.– ★पुष्कराक्षः पङ्कजनयनः ।

श्री.– ★पुष्कराक्षः = पूर्णो व्याप्तश्च ।



### ५६०. महामनाः

वि.– ★सृष्ट्यादिकर्माणि मनसैव करोतीति महामनाः ।

र.– ★महत् उदारं मनः यस्य सः महामनाः ।

स.– ★महन्मनः चित्तं वा यस्यासौ महामनाः ।

श्री.– ★महामनाः = उदारचित्तः ।



भगवान् भगहाऽऽनन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ ६० ॥

### ५६१. भगवान्

वि.– *भगवच्छब्दार्थोऽथर्वशिरसि– "यः सर्वान् भावानीक्षत्यात्मानं निरीक्षयति योगं गमयति तस्मादुच्यते भगवान्" इति ।

*यद्वा भग ऐश्वर्यादिः ।

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" ॥ इति स्मरणात् ।

सोऽस्यास्तीति भगवान् ।

*"उत्पत्तिं प्रळयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" ॥

इति वचनाद्वा भगवान् ।

"भगवानन्यो मुकुन्दात् को नाम लोके भगवत्पदार्थः" ॥

इति श्रीभागवते ।

र.– *ज्ञानविज्ञानादिषड्गुणाः अस्य सन्ति इति भगवान् ।

स.– *"भगवानन्यो मुकुन्दात् को नाम लोके भगवत्पदार्थः" इति भागवतोक्तेः ऐश्वर्यादिषड्गुणः ।

श्री.– *भगवान् = षड्गुणवान् ।



*वृक्ष वरण इति धातोः वृणोतीति वा ।

*अवृक्ष इति च्छेदे छेदकरहित इत्यर्थः, ओ व्रश्चू छेदने इति धातोः ।

श्री.– *वृक्षः = भक्तापच्छेदकः ।



## ५५९. पुष्कराक्षः

वि.– *हृत्पुण्डरीके प्रकाशमानत्वात् पुष्कराक्षः ।

र.– *पूर्णत्वात् पुष्करः । अश्यते मनसा इति अक्षः पुष्करश्चासौ अक्षश्च पुष्कराक्षः ।

*यद्वा भक्तमनसा अक्ष्यते व्याप्यते इति अक्षः ।

*यद्वा पुष्करं श्रवणादिपरिपुष्टं मनः, तेन व्याप्यते इति वा, तत् स्वयं व्याप्नोति इति वा पुष्कराक्षः ।

स.– *पुष्कराक्षः पङ्कजनयनः ।

श्री.– *पुष्कराक्षः = पूर्णो व्याप्तश्च ।



## ५६०. महामनाः

वि.– *सृष्ट्यादिकर्माणि मनसैव करोतीति महामनाः ।

र.– *महत् उदारं मनः यस्य सः महामनाः ।

स.– *महन्मनः चित्तं वा यस्यासौ महामनाः ।

श्री.– *महामनाः = उदारचित्तः ।



भगवान् भगहाऽऽनन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ ६० ॥

## ५६१. भगवान्

वि.– ★भगवच्छब्दार्थोऽथर्वशिरसि– "यः सर्वान् भावानीक्षत्यात्मानं निरीक्षयति योगं गमयति तस्मादुच्यते भगवान्" इति ।

★यद्वा भग ऐश्वर्यादिः ।

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" ॥ इति स्मरणात् ।

सोऽस्यास्तीति भगवान् ।

★"उत्पत्तिं प्रळयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" ॥

इति वचनाद्वा भगवान् ।

"भगवानन्यो मुकुन्दात् को नाम लोके भगवत्पदार्थः" ॥

इति श्रीभागवते ।

र.– ★ज्ञानविज्ञानादिषड्गुणाः अस्य सन्ति इति भगवान् ।

स.– ★"भगवानन्यो मुकुन्दात् को नाम लोके भगवत्पदार्थः" इति भागवतोक्तेः ऐश्वर्यादिषड्गुणः ।

श्री.– ★भगवान् = षड्गुणवान् ।



## ५६२. भगहा

वि.– *संहारकाले सर्वेषामैश्वर्यादिकं हन्त्यभिभवतीति भगहा ।

र.– *शत्रूणां श्रीकाममाहात्म्ययोः अयोगात् तान् हन्ति इति भगहा ।

स.– *दैत्यानामैश्वर्यं हन्तीति भगहा ।

*भारूपौ सूर्यचन्द्रौ गच्छतीति भगो राहुः, तं हन्तीति वा ।

श्री.– *भगहा = पराधीनशत्रुहन्ता ।



## ५६३. आनन्दी (नन्दी)

वि.– *सुखस्वरूपत्वात् आनन्दी ।

*सर्वाभिः समृद्धिभिः समृद्धत्वात् वा आनन्दी ।

र.– *आनन्दः=ज्ञान–धन–आयुरादीनां समृद्धिः, प्रदातव्यतया अस्य अस्ति इति आनन्दी ।

स.– *आनन्दः अस्यास्तीत्यानन्दी । नन्दीति पक्षेऽपि स एवार्थः ।

श्री.– *आनन्दी = ज्ञानधनादिसमृद्धिमान् ।



## ५६४. वनमाली

वि.– *वनमालाऽस्यास्तीति वनमाली ।

र.– *वनानि सेव्यानि दुष्टसंसर्गपरिहरणापारकर्मतारकत्वादीनि-कर्माणि, तेषां माला पंक्तिः अस्य अस्ति इति वनमाली ।

*यद्वा वनानां सद्भिः भजनीयानाम् उक्तभक्तरक्षकत्वादि-कर्मणां माला पंक्तिः अस्य अस्ति इति वनमाली ।

स.– *आपादलम्बायमानमालायुक्तः ।

"आपादपद्मं या माला वनमालेति सा स्मृता" । इत्युक्तेः ।

*वन पण सम्भक्ताविति धातोः, वना सम्भजका च सा मा रमा च वनमा, सा आलिः सखी च वनमालिः, सा अस्यास्तीति वा । उभयत्रापि वादिनोः शून्यमायिनोः परिस्फुरत्कुण्डलमौलिमालिनामित्यत्रेव तदन्तविधिस्वीकारात्, व्रीह्यादित्वादिनिः ।

*वनमुदकं भक्तं वा, 'मल धारण' इति धातोः णिनि प्रत्यये मलितुं धर्तुं शीलमस्यास्तीति वनमाली ।

श्री.–*वनमाली = भजनीयकर्मपङ्क्तिमान् ।



## ५६५. हलायुधः

वि.– *हलमायुधं अस्येति हलायुधः ।

र.– *युज्यते इति युधः । हलेन राधसा आ सम्यग् युज्यते इति हलायुधः । भक्तानाम् अभीष्टप्रदाता इति यावत् ।

स.– *हलं आयुधं यस्य शुक्लकेशस्य स हलायुधः ।

*रलयोरभेदात् हलस्य हरस्य रुद्रस्य त्रिपुरसंहारकाले आयुधरूपत्वाद्वा हलायुधः ।

श्री.– *हलायुधः = भक्ताभीष्टयोजकः ।

## ५६६. आदित्यः

वि.– ★"आदित्यस्थत्वात् स आदित्यः, आददानः प्रयाति वा । बहुरूपत्वतश्चैव" इत्यादिनाऽऽदित्यः ।

र.– ★बहुविदारकत्वात् आदित्यः ।

★अथवा बहुभोक्तृत्वात् आदित्यः ।

स.– ★आदिनी अनादिकालमारभ्य वर्तमाने त्ये आनन्दज्ञाने यस्य स तथा ।

★'अद भक्षण' इति धातोः, आदिनः प्रजाभक्षणशीलाः दैत्याः तान् त्यजतीति वा, त्यज विसर्गे इति धातोः कर्तरि डः ।

श्री.– ★आदित्यः = बहुभोक्ता ।



## ५६७. ज्योतिरादित्यः

वि.– ★ज्योर्तीष्यादत्त इति ज्योतिरादित्यः ।

र.– ★आदौ स्थितत्वात् आदित्यः, ज्योतिषः सोमस्य आदौ उद्देश्यतया स्थितत्वात् ज्योतिरादित्यः ।

स.– ★ज्योतिषामादिः ज्योतिरादिः सूर्यः, तस्मिन् तिष्ठतीति तथा ।

श्री.–★ज्योतिरादित्यः = दीप्यमानसोमस्यादौ उदेश्यतया स्थितः ।



## ५६८. सहिष्णुः

वि.– ★भक्तकृतमपराधं सहत इति सहिष्णुः ।

र.– ★सहते सोमरसान् इति सहिष्णुः, सोमरसान् पिबति इति यावत् ।

स.– ★सहते इति सहिष्णुः ।

श्री.– ★सहिष्णुः = सोमरससोढा ।



## ५६९. गतिसत्तमः

वि.– ★गतिश्च सत्तमश्चेति गतिसत्तमः ।

र.– ★गतिर्गमनं सीदति अत्र इति गतिसत् गतिमान् । सोमादिग्रहणाय अतिशयेन गतिमान् गतिसत्तमः ।

स.– ★गत्या ज्ञानेन सन्तो गतिसन्तः, गतिसद्भिः तम्यते आकाङ्क्ष्यते इति गतिसत्तमः ।

★गम्यते इति गतिः, अतिशयेन सन् सत्तमः, गतिश्चासौ सत्तमश्चेति गतिसत्तमः ।

श्री.– ★गतिसत्तमः = अतिगतिमान् ।



सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।
दिवःस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ६१ ॥

## ५७०. सुधन्वा

वि.– ★शोभनं धनुः शार्ङ्गमस्येति सुधन्वा ।

र.– ★धन्वति शत्रून् प्रति क्रूरः वर्तते इति सुधन्वा ।

स.– ★शोभनं धनुः यस्य सुधन्वा । धनुपश्चेनङ् ।

श्री.–★सुधन्वा = शत्रुपु क्रौर्यवान् ।



### ५७१. खण्डपरशुः (अखण्डपरशुः)

वि.– ★शत्रुखण्डनात् खण्डः परशुरस्येति खण्डपरशुः ।

★अखण्डः परशुरस्येति वा अखण्डपरशुः ।

र.– ★खण्डयति इति खण्डः वज्रायुधविशेपः । परम् अत्यन्तं परान् शत्रून् शृणाति हिनस्ति इति परशुः । खण्डैः वज्राद्यायुधैः शत्रुविदारणशीलैः शत्रून् विदार्य हिनस्ति इति खण्डपरशुः ।

स.– ★"अथ रुद्रविद्योतार्थं ईषिका नर उद्धरन् ।
मन्त्रं च संयुयोजाशु सोऽभवत्परशुर्महान् ॥
क्षिप्तश्च सहसा तेन खण्डनं प्राप्तवांस्तदा ।
ततोऽहं खण्डपरशुः स्मृतः परशुखण्डनात् ॥"
इति मोक्षधर्मोक्तेः ।

★खण्डः खण्डितः परशुः यस्य सः खण्डपरशुः ।

★अखण्डपरशुरिति छेदोऽपि ।

श्री.–★खण्डपरशुः = वज्राद्यायुधैः शत्रुविनाशकः ।



### ५७२. दारुणः

वि.– ★सन्मार्गविरोधिनां दारुणत्वाद् दारुणः ।

र.– *शत्रून् विदारयति इति दारुणः ।

स.– *दारुवत् काष्ठमयप्रतिमामिव नयति लोकमिति दारुणः ।

*शत्रुविदारकत्वाद्वा दारुणः ।

श्री.– *दारुणः = घोरः ।



## ५७३. द्रविणप्रदः

वि.– *द्रविणं वाञ्छितं भक्तेभ्यः प्रददातीति द्रविणप्रदः ।

र.– *द्रविणं हिरण्यं तत् प्रददाति इति द्रविणप्रदः ।

स.– *द्रविणं विद्याधनात्मकं वित्तं प्रददातीति द्रविणप्रदः ।

*द्रवः चित्तस्य येपामस्तीति द्रविणः हरिभक्ताः, तेभ्यो णप्रदः स्वरूपसुखप्रदः ।

श्री.– *द्रविणप्रदः = सुवर्णदः ।



## ५७४. दिवःस्पृक्

वि.– *दिवः स्पर्शनाद् दिवःस्पृक् ।

र.– *दिव् शब्देन मोदः तं स्पृशति ददाति इति स्पृक्, दिवः मोदस्य स्पृक् दाता दिवःस्पृक् ।

स.– *दिवः श्वेतद्वीपानन्तासनवैकुण्ठादीन् स्पृशतीति दिवस्स्पृक् । तदुक्तं छान्दोग्यभाष्ये–

"स्वरूपपादा विष्णोस्तु त्रयो हि दिवि संस्थिताः ।
नारायणो वासुदेवो वैकुण्ठ इति ते त्रयः ॥" इति ।

श्री.– *दिवस्स्पृक् = मोदस्य दाता ।



### ५७५. सर्वदृक् (सर्वदृग्व्यासः)

वि.– *सर्वासां दृशां ज्ञानानां विस्तारकरणात् सर्वदृग्व्यासः ।

*अथवा सम्पूर्णज्ञानत्वात् सर्वदृक् ।

र.– *सृतम् अनेन इति सर्वम् सर्वस्य दृक् ज्ञाता इति सर्वदृक् ।

स.– *सर्वं पश्यतीति सर्वदृक् ।

श्री.– *सर्वदृक् = अभीष्टज्ञानदाता ।



### ५७६. व्यासः

वि.– *वेदविभागकरणाद् व्यासः । विशिष्टः सर्वस्मात् आ समन्तात् स एवेति व्यासः ।

तथा चाऽग्नेयशाखायाम्–

*''स व्यासो वीति तमब् वै, सोऽधस्तात् स उत्तरतः स पश्चात् स पूर्वस्मात् स दक्षिणतः स उत्तरतः'' इति । विशिष्टत्वेनाऽस्ते आ समन्तात् सरतीति वा व्यास इति श्रुत्यर्थः ।

र.– *भक्ताभीष्टानि विस्तारयति इति व्यासः ।

स.– *विशिष्टः सर्वस्मादिति विः, आ समन्तात् स इत्यासः, विश्चासौ आसश्च व्यासः ।

''सृ–गतौ'' 'सृप्लृ गतौ'' इत्यतो वा डे रूपमेतत् । न तु तददः । व्यासमित्याद्यनुपपत्तेः । तथा च आग्नेयशाखायाम्–

"स व्यासो वीति तमवैहि सोऽधस्तात् स उत्तरतः स पश्चात् स पूर्वस्मात् स दक्षिणतः स उत्तरतः" इति ।

***सर्वदृग्व्यास इत्येकं पदमित्याहुः ।**

**श्री.– *व्यासः = भक्ताभीष्टविस्तारकः ।**



## ५७७. वाचस्पतिः (वाचस्पतिरयोनिजः)

**वि.– *वाचो विद्यायाः पतिर्वाचस्पतिः । जननयां न जायत इत्ययोनिजः । वाचस्पतेर्विशेषणमेतत् ।**

"न च गर्भेऽवसद् देव्या नचापि वसुदेवतः ।
न चापि राघवाज्जातो न चापि जमदग्नितः" इत्यादि पाद्मे ॥

र.– *उच्यते वेदैः विधीयते इति वाग् यज्ञः । पत्यते अत्र इति पतिः निधानस्थानम् । वाचो यज्ञस्य पतिः निधानस्थानं वाचस्पतिः ।

स.– *"षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेष्विति" षष्ठ्याः अलुक् । सकलवाङ्मनसदेवतायाः पतिः ।

श्री.– *वाचस्पतिः = यज्ञनिधानस्थानम् ।



## ५७८. अयोनिजः

र.– *योनिजः न भवति इति अयोनिजः । योनिसम्वन्धादिना न हिंस्यते इति यावत् ।

श्री.– *दिवस्स्पृक् = मोदस्य दाता ।



## ५७५. सर्वदृक् (सर्वदृग्व्यासः)

वि.– *सर्वासां दृशां ज्ञानानां विस्तारकरणात् सर्वदृग्व्यासः ।

*अथवा सम्पूर्णज्ञानत्वात् सर्वदृक् ।

र.– *सृतम् अनेन इति सर्वम् सर्वस्य दृक् ज्ञाता इति सर्वदृक् ।

स.– *सर्वं पश्यतीति सर्वदृक् ।

श्री.– *सर्वदृक् = अभीष्टज्ञानदाता ।



## ५७६. व्यासः

वि.– *वेदविभागकरणाद् व्यासः । विशिष्टः सर्वस्मात् आ समन्तात् स एवेति व्यासः ।

तथा चाऽग्नेयशाखायाम्–

*"स व्यासो वीति तमब् वै, सोऽधस्तात् स उत्तरतः स पश्चात् स पूर्वस्मात् स दक्षिणतः स उत्तरतः" इति । विशिष्टत्वेनाऽस्ते आ समन्तात् सरतीति वा व्यास इति श्रुत्यर्थः ।

र.– *भक्ताभीष्टानि विस्तारयति इति व्यासः ।

स.– *विशिष्टः सर्वस्मादिति विः, आ समन्तात् स इत्यासः, विश्वासौ आसश्च व्यासः ।

"सृ–गतौ" 'सृप्लृ गतौ" इत्यतो वा डे रूपमेतत् । न तु तददः । व्यासमित्याद्यनुपपत्तेः । तथा च आग्नेयशाखायाम्–

"स व्यासो वीति तमवैहि सोऽधस्तात् स उत्तरतः स पश्चात् स पूर्वस्मात् स दक्षिणतः स उत्तरतः" इति ।

***सर्वदृग्व्यास इत्येकं पदमित्याहुः ।**

**श्री.– *व्यासः = भक्ताभीष्टविस्तारकः ।**



## ५७७. वाचस्पतिः (वाचस्पतिरयोनिजः)

**वि.– *वाचो विद्यायाः पतिर्वाचस्पतिः । जनन्यां न जायत इत्ययोनिजः । वाचस्पतेर्विशेपणमेतत् ।**

"न च गर्भेऽवसद् देव्या नचापि वसुदेवतः ।
न चापि राघवाज्जातो न चापि जमदग्नितः" इत्यादि पाद्मे ॥

**र.– *उच्यते वेदैः विधीयते इति वाग् यज्ञः । पत्यते अत्र इति पतिः निधानस्थानम् । वाचो यज्ञस्य पतिः निधानस्थानं वाचस्पतिः ।**

**स.– *"षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेष्विति" षष्ठ्याः अलुक् । सकलवाङ्मनसदेवतायाः पतिः ।**

**श्री.– *वाचस्पतिः = यज्ञनिधानस्थानम् ।**



## ५७८. अयोनिजः

**र.– *योनिजः न भवति इति अयोनिजः । योनिसम्बन्धादिना न हिंस्यते इति यावत् ।**

स.– *"न च गर्भेऽवसद्देव्याः न चापि वसुदेवतः" । इत्युक्तेः योनिजो न भवतीत्ययोनिजः ।

*अयोनेः स्त्रीचिन्हरहितात् स्तम्भादेः जायत इति वा ।

*योनिभिन्ने नाभौ जनयति चतुर्मुखमिति वा ।

*अयःशृङ्खलादिरूपं अनिजानामभक्तानां यस्मात् स अयोनिजः ।

श्री.– *अयोनिजः = योनिसम्बन्धशून्यः ।



त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।
सन्यासकृच्छमः शान्तो निष्ठा शान्ति परायणम्(णः) ॥ ६२ ॥

## ५७९. त्रिसामा

वि.– *देवव्रतसमाख्यानैः त्रिभिः सामभिः स्तुतः त्रिसामा ।

र.– *स्यति इति साम । त्रिषु सोमस्तोत्रयज्ञेषु स्यति गच्छति इति त्रिसामा ।

स.– *त्रीणि सामानि निधनोद्गीथप्रतीहाराख्यानि यस्य सः त्रिधामा ।

श्री.– *त्रिसामा = सोमस्तोत्रयज्ञगन्ता ।



## ५८०. सामगः

वि.– *साम गायतीति सामगः ।

र.– *स्यति इति साम स्तुतिः तद्गच्छति अङ्गीकरोति इति सामगः ।

स.– *"सेति भार्या हि वाग्देवी प्राणो मः परिकीर्तितः ।
एवं तौ सामनामानौ ....." ।

इति छान्दोग्यभाष्योक्तेः सामशब्दाभिधेयभारतीवायुगतत्वात् सामगः ।

*"शुभाशुभानां दाहादौ साम्यात्सामाग्निरीरितः ।
अग्निः सामाभिमानी स्यात्...." ।

इति छान्दोग्यभाष्योक्तेः, सामगो अग्न्यन्तर्गतो वा ।

*साम्ना सामवेदेन गम्यते इति वा ।

श्री.–*सामगः = स्तुत्यङ्गीकारी ।



## ५८१. साम

वि.–*समत्वात् साम । "समत्वाच्च निजरूपेषु साम सः" इत्युक्तेः ।

र.– *अभीष्टानि स्यति ददाति इति साम ।

स.– *सर्वभूतेषु समत्वात् साम ।

श्री.–*सामः = अभीष्टदः ।



## ५८२. निर्वाणम्

वि.–*वाणं देहः । "एतद् वाणमवष्टभ्य" इति श्रुतेः । "कायो वाणं शरीरं च" इत्यभिधानाच्च । तद्रहितत्वात् निर्वाणं ब्रह्म ।

अभावाज्जडदेहस्य विष्णुर्निर्वाण उच्यते ।

भिन्नदेहाभावतो वा स सहस्रशिरा अपि ॥ इति च ॥

र.– *सुखरूपत्वात् निर्वाणम् ।

स.– *निर्वाणं प्राकृतशरीरशून्यम् ।

"कायो बाणं शरीरं च" इत्यभिधानात् ।

*निर्गता गणा बाणा वेद्धुमशक्या यस्मादिति वा ।

श्री.– *निर्वाणं = सुखरूपः ।



## ५८३. भेषजम्

वि.– *संसाररोगस्यौपधत्वाद् भेपजम् ।

र.– *भिपक् चिकित्सकः । भिपगेव भेपजं संसाररोगपरिहारकः ।

स.– *संसाररोगस्य औपधरूपत्वात् भेपजम् ।

*भेपयतीति भेपो रोगः तं जयतीति वा ।

*भिपजः इदं भेपजं अश्व्यन्तर्गतं औपधनियामकम् ।

श्री.–*भेपजं = संसाररोगपरिहारकः ।



## ५८४. भिषक्

वि.– *संसाररोगनिवर्तकविद्योपदेष्टृत्वाद् भिपक् ।

र.– *भी अध्वरः, भिनि यज्ञे कण्वादिकृते सचति समवैति इति भिषक् ।

स.– *भिषक् संसाररोगस्य वैद्यः ।

*भिषज्यतीति चिकित्सतीति भिषक् । "भिष् चिकित्सायाम्" इत्यतः कण्ड्वादिभ्यो यगिति यक्, ततः क्विप् ।

श्री.– *भिषक् = अध्वरसमेता ।



## ५८५. सन्न्यासकृत् (सन्न्यासकृच्छमः)

वि.– *"त्यागेनैके अमृतत्वमानशुः" इति । "तस्मान्यासं परमं वदन्ति" इत्यादिश्रुतिभ्यः आश्रमाणां सन्न्यासलक्षणं मोक्षाश्रमं चतुर्थं कृतवानिति सन्न्यासकृत् ।

र.– *नाहं कर्ता हरिः कर्ता इत्यादिना कर्मन्यासं कृतवतां दमूनो गोशर्यमनुसांवरणिप्रभृतीनां शमः तदुपलक्षितज्ञानभक्त्यादयः यस्मात् सः सन्न्यासकृच्छमः ।

स.– *संन्यासं काम्यकर्मत्यागं कारयतीति सन्न्यासकृत् ।

*सम्यक् न्यासं दोषत्यागं करोतीति वा ।

*अननुस्वारपाठपक्षे सतां भगवद्भक्तादीनां न्यासः येषान्ते सन्न्यासाः दैत्याः तान् कृन्ततीति ।

श्री.– *सन्न्यासकृच्छमः = कर्मन्यासकृच्छमादिदाता ।



## ५८६. शमः

वि.– *सर्वभूतानां शमयितेति शमः ।

*"शम आनन्दरूपत्वात्" इति वा शमः ।

स.– ★"शमः आनन्दरूपः" इति माण्डूकोक्तेः, शमः आनन्दरूपः ।

★शं ब्रह्मादिसुखं माति जानातीति वा ।



## ५८७. शान्तः

वि.– ★सुखस्य परा काष्ठा शान्तः । "शान्तः पूर्णसुखत्वतः" इति च ।

★"प्रियमेव यतः सर्वमप्रियं नास्ति कुत्रचित् ।
स्वयमेव यतः कर्ता शान्तोऽतो हरिरीश्वरः" ॥

इति ब्रह्मतर्कवचनाद्वा शान्तः ।

र.– ★नीपातिथि-मेध्यातिथि-पुष्टिगु-श्रुष्टिगु-प्रभृतिशमगोचरः शान्तः ।

स.– ★शस्य सुखस्य खज्ञात् प्रागन्तो वन्धो यस्मादिति शान्तः ।

★"शर्वः शंरोधनाद्धरिः" इत्युक्तेः, शस्य दैत्यसुखस्य अन्तो नाशो यस्मादिति वा ।

★सुखावधिरिति वा ।

श्री.– ★शान्तः = शमवर्ध्यः सोमप्रापकः ।



## ५८८. निष्ठा

वि.– ★निरन्तरं तत्रैव तिष्ठन्ति भूतानीति निष्ठा ।

र.– *निष्ठा नाशः तेन तत्कर्ता उपलक्ष्यते तथा च विनाशकः निष्ठा ।

स.– *नितरां स्थितिः यस्य सः निष्ठा ।

श्री.– *निष्ठा = दस्युनाशकः ।



## ५८९. शान्तिः

वि.– *उन्नतसुखत्वात् शान्तिः "शान्तिनामा सुखोन्नतेः" इति च ।

*सर्वेषां फलरूपत्वाद्वा शान्तिः ।

र.– *कल्याणरूपः शान्तिः ।

स.– *"शान्तिनामा सुखोन्नतेः" इत्युक्तेः, शान्तिः उन्नत-सुखः ।

*"अन्तिपद्भूत्तु वामन" इति वत् । शं सुखं अन्तिरन्तिके यस्येति वा ।

श्री.– *शान्तिः = कल्याणरूपः ।



## ५९०. परायणम् (परायणः)

वि.– *परमुत्कृष्टमयनं स्थानमिति, वैकुण्ठादिस्थानमस्येति वा परायणम् ।

र.– *परम् उत्तमं सत्याख्यं पदम् अयते प्राप्नोति अनेन इति परायणः ।

स.– *परायणं मुक्ताश्रयः ।

*परं अयनं यस्मादिति वा ।

श्री.– *परायणः = उत्तमपदप्रापकः ।



शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ६३ ॥

## ५९१. शुभाङ्गः

वि.– *शोभनान्यङ्गान्यस्येति शुभाङ्गः ।

र.– *शुभा अङ्गं मतिः यस्य सः शुभाङ्गः ।

स.– *शुभानि अङ्गानि यस्य सः शुभाङ्गः ।

*शुभस्य अङ्गभूतं ज्ञानं यस्मादिति वा ।

श्री.– *शुभाङ्गः = शोभनबुद्धिः ।



## ५९२. शान्तिदः

वि.– *शान्तिर्विषयोपरतिः, भगवन्निष्ठा बुद्धिर्वा ।

''शमो मन्निष्ठता बुद्धेः'' इत्युक्तेः ।

*मोक्षो वा शान्तिः । ''शान्तिर्मोक्षोऽथ निर्वाणम्'' इत्यभिधानात् । तां ददातीति शान्तिदः ।

*असतां तां खण्डयतीति वा ।

र.– *शान्तिं द्रव्यपोषणरूपां ददाति इति शान्तिदः ।

स.– *मोक्षदः ।

श्री.–*शान्तिदः = द्रव्यपोषदाता ।



## ५९३. स्रष्टा

वि.– *सर्वभूतानि ससर्जेति स्रष्टा ।

र.– *भक्तेभ्यः द्रविणं सृजति ददाति इति स्रष्टा ।

स.– *जगत्सर्जनात् स्रष्टा । सृज विसर्गे ।

श्री.–*स्रष्टा = भक्तेभ्यो द्रव्यदाता ।



## ५९४. कुमुदः

वि.– *कौ भूमौ मोदत इति कुमुदः ।

र.– *कौ प्रसिद्ध्या मोदते, प्रसिद्ध्या युक्तः इति कुमुदः ।

स.– *कौ मोदत इति वा, भूभारहरणात् कुं मोदयतीति वा कुमुदः ।

श्री.–*कुमुदः = भुवि प्रसिद्धिमोदी ।



## ५९५. कुवलेशयः

वि.– *कोः क्षितेः वलनात् कुवलं जलम् । तस्मिन् शेत इति कुवलेशयः ।

*भूमौ संविशतीति सर्पाणामुदरं कुवलं, तस्मिन् शेपोदरे शेत इति वा कुवलेशयः ।

र.– *का पृथिव्या संवलितं सहितं समस्तं जगत् कुवलम् तस्मिन् शेते अधितिष्ठति इति शयः कुवलेशयः ।

स.– *कुवले वदरिकाश्रमे शेते इति वा ।

*कोः भूमेः वले, तादर्थ्ये सप्तमी, वलार्थं श्वेतद्वीपे शेत इति वा।

*कोः भूमेः वले परिवर्तने शयः आशयः यस्येति वा ।

*कुः भूमिः कुश्च वलञ्च कुवले, प्रथमायाः अलुक्, ते शये हस्ते यस्येति वा।

*कौ भूमौ वलेशेन बलदेवतारूपहनुमता यायते प्राप्यते इति वा।

श्री.– *कुवलेशयः = जगति शायी ।



## ५९६. गोहितः

वि.– *गवां हितार्थं गोवर्धनं धृतवानिति गोहितः ।

*भूभारहारित्वाद् गोः भूमेर्हित इति वा ।

र.– *गम्यते इति गौः सोमो द्रविणं सुखं च । तत् हितं धृतं यत्र इति वा, तत् धार्यते अनेन इति वा गोहितः ।

स.– *गवां सास्नादिमतां वेदादिरूपवाचां वा कृष्णव्यासादिरूपेण हितकारित्वात् गोहितः ।

*गोषु नेत्रेषु जलेषु निहितत्वाद्वा । "य एपो अन्तरक्षिणि पुरुषो दृश्यते" इति श्रुतेः । 'अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः" इति स्मृतेश्च ।

श्री.– ★गोहितः = सोमादिधारकः ।



## ५९७. गोपतिः

वि.– ★गोर्भूमेः, गवां धेनूनां वा पतिः गोपतिः ।

र.– ★गोः छन्दसः पतिः पाता उपभोक्ता श्रोता इति यावत् गोपतिः ।

स.– ★गवां स्वर्ग–पशु–वाक्–वज्र–दिक्–नेत्र–भू–जलानां पतिः पालको गोपतिः ।

श्री.– ★गोपतिः = स्तोत्रोपभोक्ता ।



## ५९८. गोप्ता

वि.– ★स्वरूपगोपनाद् गोप्ता ।

र.– ★पृपध्रादीन् गोपायति इति गोप्ता ।

स.– ★सर्वरक्षकः ।

श्री.– ★गोप्ता = पृपध्रादिरक्षकः ।



## ५९९. वृषभाक्षः

वि.– ★सर्वान् कामान् वर्षुके अक्षिणी अस्येति वा, वृषभे धर्मे दृष्टिरस्येति वा वृषभाक्षः ।

र.– ★वृषो धर्मः, भः भावः अभिप्रायः, अक्ष्णोति व्याप्नोति

स्थानम् इति अक्षः, वृषे धर्मे भः अभिप्रायः यस्य सः वृषभः वृषभश्च असौ अक्षश्च इति वृषभाक्षः ।

स.– *वृषेण धर्मेण भान्तीति वृषभाः सज्जनाः, तेषु अक्षि कृपादृष्टिः यस्य सः वृषभाक्षः ।

*वृषभस्य अक्षिणीं इव अक्षिणी यस्य सः इति वा ।

*वर्षणात् भक्ताभिलषितसेचनात् वृषभः, न विद्यते क्षः क्षयः यस्य सः अक्षः, वृषभश्चासौ अक्षश्चेति वृषभाक्षः ।

श्री.– *वृषभाक्षः = धर्माभिप्रायः, व्यापकश्च ।



## ६००. वृषप्रियः

वि.– *वृषो धर्मः प्रियो यस्य, वृषश्चासौ प्रियश्चेति वा वृषप्रियः ।

र.– *वृषाः स्तोमाः प्रियाः अभीष्टाः यस्य सः वृषप्रियः ।

स.– *धर्मप्रियः ।

श्री.– *वृषप्रियः = इष्टवर्षकस्तोत्रप्रियः ।



अनिवर्ती निवृत्तात्मा सङ्क्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥ ६४ ॥

## ६०१. अनिवर्ती

वि.– *देवासुरसङ्ग्रामान्न निवर्तत इत्यनिवर्ती ।

*वृषप्रियत्वाद् धर्मान्न निवर्तत इति वा ।

*अनिषु प्राणिषु वर्तत इति वाऽनिवर्ती ।

र.– *वृत्तं विद्यमानं न भवति इति निवृत्तम् अनित्यं तन्न भवति इति अनिवृत्तम् । स्वभृत्यस्वरूपाभिव्यञ्जकत्वगवाश्वादिदानादि-नित्यधर्मजातम्, तत् अस्य अस्ति इति अनिवर्तीवृत्ती ।

स.– *अनिषु मुख्यप्राणदासेषु वर्तते इति अनिवर्ती ।

*कदाऽपि न निवर्तते इति वा ।

श्री.– *अनिवर्ती = नित्यसर्वधर्मः ।



## ६०२. निवृत्तात्मा

वि.– *स्वत एव विषयेभ्यो निवृत्त आत्माऽस्येति निवृत्तात्मा ।

र.– *नितरां वृत्तः निवृत्तः अमोघः आत्मा मनः यस्य सः निवृत्तात्मा । अमोघसङ्कल्पः ।

स.– *निवृत्ताः आत्मानः जीवाः प्रलये यस्मादिति वा ।

*निवृत्ताः आत्मानः मनांसि यस्मादिति वा । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'' इति श्रुतेः । ''यन्मनसा न मनुते'' इति च ।

श्री.– *निवृत्तात्मा = भक्तधनदाता ।



## ६०३. संक्षेप्ता

वि.– *विस्तृतं जगत् प्रळये संक्षिप्तवानिति संक्षेप्ता ।

र.– ★उत्पत्स्यमानजीवजातं पितुः शरीरात् उत्कृष्य मातृशरीरे संक्षिपति, मातृशरीरात् च भुवि संक्षिपति इति संक्षेप्ता ।

स.– ★सम्यक् क्षेप्ता ।

★अङ्गुष्ठेन दुन्दुभिशरीरस्य दूरे क्षेप्ता ।

★सम्यक् शरक्षेप्ता वा ।

★सृष्टौ विस्तृतस्य जगतः प्रलयेन सङ्कोचको वा ।

श्री.– ★सङ्क्षेप्ता = पित्राद्युदराज्जीवानां वहिः क्षेप्ता ।



## ६०४. क्षेमकृत् (अक्षेमकृत्)

वि.– ★उपात्तस्य रक्षणं क्षेमं करोतीति क्षेमकृत् ।

र.– ★क्षिणोति सुखं निवसति अनेन इति तदेव उपदेशरूपं मङ्गलं क्षेमं करोति इति क्षेमकृत् ।

स.– ★क्षेमं करोतीति क्षेमकृत् । ''योगक्षेमं वहाम्यहम्'' इत्युक्तेः ।

★अक्षेमं कृन्ततीति वा छेदः ।

श्री.– ★क्षेमकृत् = उपदेशरूपमङ्गलकर्ता ।



## ६०५. शिवः

वि.– ★स्मरणमात्रेण सर्वदुःखनिवारकत्वात् शिवः ।

र.– ★कल्याणरूपं ज्ञानं शिवं, तत् अस्य अस्ति इति शिवः । ज्ञानवान् ।

स.– *सुखात्मकत्वात् शिवः ।

*शिवं मङ्गलमस्यास्तीति शिवः । ''अर्श आद्यच्'' तत्करोतीति ण्यन्तात् 'पचाद्यच्' ।

*शिनो मुक्ताः तान् वर्तयतीति वा शिवः ।

श्री.– *शिवः = ज्ञानवान् ।



## ६०६. श्रीवत्सवक्षाः

वि.– *श्रीवत्सलक्षणं चिह्नमस्य वक्षसि स्थितमिति श्रीवत्सवक्षाः ।

र.– *श्रियं कान्तिं वहति इति श्रीवत्सः सूर्यः, तं वक्षति चालयति इति श्रीवत्सवक्षाः ।

*श्रयन्ते अत्र जना इति श्रीः क्षोणी तेजो वहति इति वत्सः सूर्यः तौ वक्षति कम्पयति इति वा श्रीवत्सवक्षाः ।

स.– *श्रिया युक्तः वत्सः महत्वलक्षणं श्वेतरोमावर्तविशेषः वक्षसि यस्य सः श्रीवत्सवक्षाः ।

श्री.– *श्रीवत्सवक्षाः = सूर्यकम्पकः ।



## ६०७. श्रीवासः

वि.– *श्रीः तस्मिन्ननपायिनी वसतीति श्रीवासः ।

र.– *श्रीः वेदवाणी वसति प्रतिपादकतया अत्र इति श्रीवासः ।

स.– *श्रीः वसति अस्मिन्निति श्रीवासः ।

श्री.– *श्रीवासः = वेदवाण्याधारः ।



## ६०८. श्रीपतिः

वि.– *श्रियः लक्ष्म्याः परमशक्तेर्वा पतिः श्रीपतिः ।

र.– *भगवन्तं श्रयन्ते इति श्रियः, आयुकुत्सातिथिग्वादयः तान् पाति रक्षति इति श्रीपतिः ।

स.– *श्रियः पतिः श्रीपतिः ।

श्री.– *श्रीपतिः = स्वाश्रितरक्षकः ।



## ६०९. श्रीमतांवरः

वि.– *श्रीमतां ब्रह्मादीनां वरः श्रीमतांवरः ।

र.– *श्रीशब्दः विषशब्दितजलवाची, (जीवनीयं कुशं विषम् इति उक्तेः) तदेषाम् अस्ति इति श्रीमन्तः जलमिश्रित-सोमरसाः तेषां वरः वरेण्यः श्रीमतांवरः ।

स.– *श्रियः सरस्वत्यादयः, ताः येषां सन्तीति श्रीमन्तः ब्रह्मादयः, तेषां वरः ।

*श्रियो मतमवरं यस्य सः श्रीमतां वरः ।

*श्रिया मतं अभिमतं अम्बरं आकाशं आधारत्वेन यस्येति वा ।

''यो वेद निहितं गुहायां परमे व्योमन्'' इति श्रुतेः ।

श्री.– *श्रीमतांवरः = जलमिश्रितसोमरसवरेण्यः ।



श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।
श्रीधरः श्रीकरः श्रेयः श्रीमॉल्लोकत्रयाश्रयः ॥ ६५ ॥

## ६१०. श्रीदः

वि.– *श्रियं ददातीति श्रीदः ।

र.– *श्रियः द्वेषिजनान् द्यति खण्डयति इति श्रीदः ।

*अथवा श्रीः सम्पत् तां ददाति इति श्रीदः ।

स.– *श्रियं ददाति इति श्रीदः ।

*श्रियै रुक्मिण्यै प्रद्युम्नं ददातीति वा ।

श्री.– *श्रीदः = सम्पत्प्रदः ।



## ६११. श्रीशः

वि.– *श्रिय ईशः श्रीशः ।

*श्रियां शेत इति वा श्रीशः ।

र.– *श्रयते इति श्रीः मेधा, तस्याः ईशः दाता श्रीशः ।

स.– *श्रियः शं सुखं यस्मादिति श्रीशः ।

श्री.– *श्रीशः = बुद्धिदाता ।



## ६१२. श्रीनिवासः

वि.– ★श्रियि निवसतीति श्रीनिवासः ।

र.– ★श्रयते इति श्रीः, सम्पत्ज्ञानऐश्वर्यादिषड्गुणजातं निवसति अत्र इति श्रीनिवासः ।

स.– ★श्रियां निवसति अन्तर्यामितया इति श्रीनिवासः ।

★श्रियं नयतीति श्रीनिः, वसति जनो अत्रैवेति वासः, श्रीनिश्चासौ वासश्चेति श्रीनिवासः ।

श्री.– ★श्रीनिवासः = षड्गुणसम्पद्वासस्थानः ।



## ६१३. श्रीनिधिः

वि.– ★श्रियः सर्वशक्तयो निधीयन्तेऽस्मिन्निति श्रीनिधिः ।

र.– ★श्रयते इति श्रीः अवनं तन्निधापयति भक्तेषु स्थापयति इति श्रीनिधिः ।

स.– ★श्रियः कान्तयः निधीयन्ते इति श्रीनिधिः ।

श्री.– ★श्रीनिधिः = अनुष्ठानसम्पन्निधानः ।



## ६१४. श्रीविभावनः

वि.– ★सर्वभूतानां श्रियो विभावतीति श्रिविभावनः ।

र.– ★श्रयते इति श्रीः ब्रह्म स्तोत्रं तत् विभावयति प्रेरयति इति श्रीविभावनः ।

स.– *श्रियः रमायाः विशेपेण भावान् नयतीति श्रीविभावनः ।

*श्रियः रमायाः विभाभिः अवति तृप्तो भवति इति श्रीविभावनः ।

*श्रियः विशिष्टा भा यस्याः सा श्रीविभा सीता तस्याः वनं सम्भजनं यस्यासाविति वा ।

*श्रियः विभूतीः विविधं भावयतीति श्रीविभावनः ।

तदुक्तं स्कान्दे– ''व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे'' इति ।

श्री.– *श्रीविभावनः = ब्रह्मस्तोत्रप्रेरकः ।



## ६१५. श्रीधरः

वि.– *वक्षसा श्रियं धारयतीति श्रीधरः ।

र.– *श्रयते इति श्रीः वीर्यं तत् धरति इति श्रीधरः ।

स.– *धरतीति धरः, श्रियः धरः श्रीधरः ।

श्री.– *श्रीधरः = वीर्यधर्ता ।



## ६१६. श्रीकरः

वि.– *श्रियं करोतीति श्रीकरः ।

र.– *श्रयते इति श्रीः सुकृत्या तया ज्ञानं करोति ददाति इति श्रीकरः ।

स.– *श्रीः रमा करे यस्य असौ श्रीकरः ।

*श्रियः सम्पदः करः श्रीकरः ।

श्री.– *श्रीकरः = सुकृत्यया ज्ञानदः ।



## ६१७. श्रेयः

वि.– *सर्वपुरुषार्थस्वरूपत्वाच्छ्रेयः ।

र.– *प्रशस्यं ब्रह्मादिदेवजातं परं ब्रह्म च, अनयोः इदं प्रशस्यम् इत्यर्थे प्रशस्यतरम् इति श्रेयः ।

प्रशस्यस्य श्रः इति आदेशे गुणे च श्रेयः प्रशस्यतरम् ।

स.– *श्रेयः अतिशयेन प्रशस्यम् ।

श्री.– *श्रेयः = प्रशस्यतरः ।



## ६१८. श्रीमान्

वि.– *श्रियोऽत्र सन्तीति श्रीमान् ।

र.– *श्रयन्ते इति श्रियः ब्रह्मादिदेवाः, सर्वेऽपि ते अस्य आज्ञायां सन्ति इति श्रीमान् ।

स.– *श्रियं मातीति श्रीमान् । 'मा माने' इति धातोः, 'शतर्युगिदचां' इति नुमागमे, हल्ङ्यादिना सुलोपे, संयोगान्तलोपे मान् इति रूपम् ।

श्री.– *श्रीमान् = ब्रह्माद्याज्ञापकः ।



## ६१९. लोकत्रयाश्रयः

वि.– *त्रयाणां लोकानामाश्रयत्वाल्लोकत्रयाश्रयः ।

र.– *लोकते आश्चर्यम् अत्र इति लोकः, त्रायते जनान् इति त्रयं, लोकश्चासौ त्रयं च लोकत्रयम् । राधः प्रसादः भगवत्प्रसादे हि सर्वाणि अपि आश्चर्याणि दृश्यन्ते, रक्षकत्वं च । तथा च लोकत्रयस्य राधसः आश्रयः इति वा । लोकं भुवनं त्रायते इति लोकत्रयं राधः तदाश्रयत्वात् इति वा लोकत्रयाश्रयः ।

स.– *लोकं त्रायते इति लोकत्रः, 'त्रैङ् पालने'' इत्यतः ''आतोऽनुपसर्गे कः'' इति कः । ई लक्ष्मीः तस्याः आश्रयः याश्रयः, लोकत्रश्चासौ याश्रयश्चेति लोकत्रयाश्रयः ।

*लोकत्रयस्य आश्रयः इति वा ।

*लोकत्रयस्य लिङ्ग–अनिरुद्ध–स्थूल–देहस्य जीवाः अभिमानितया आश्रयाः यस्मादिति वा ।

श्री.– *लोकत्रयाश्रयः = आश्चर्यालोकस्थानम्, प्रीत्याश्रयश्च ।



स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा(ऽ)विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ ६६ ॥

## ६२०. स्वक्षः

वि.– *शोभने अक्षिणी अस्येति स्वक्षः ।

र.– *सु सम्यक् अक्षति प्राप्नोति यज्ञगृहम् इति स्वक्षः ।

स.– *शोभनानि अक्षाणि इन्द्रियाणि यस्य सः स्वक्षः ।

*शोभने अक्षिणी अर्जुनस्य यस्मादिति वा ।

"दिव्यं ददामि ते चक्षुः" इति गीतोक्तेः ।

श्री.– *स्वक्षः = सम्यग्यज्ञगृहापः ।



### ६२१. स्वङ्गः

वि.– *शोभनानि सर्वाङ्गानि अस्येति स्वङ्गः ।

र.– *अङ्गानि अनुसृत्य गच्छन्ति इति अङ्गाः परिवारभूताः देवताः । सु समीचीनाः अङ्गाः देवाः अस्य सन्ति इति स्वङ्गः ।

स.– *शोभनानि अङ्गानि यस्य सः स्वङ्गः ।

*भक्तान् स्वं गमयतीति वा ।

द्वितीयायाः अलुक् ।

श्री.– *स्वङ्गः = सम्यग्देवसत्ताप्रदः ।



### ६२२. शतानन्दः

वि.– *शतशब्दोऽनन्तवाची, अपरिमितानन्दरूपत्वाच्छतानन्दः ।

र.– *शताः अपरिमिताः आनन्दाः यस्य सः शतानन्दः ।

स.– *शतं अनन्ताः आनन्दाः यस्य इति वा, शतं आनन्दाः चतुर्मुखस्य यस्मादिति वा शतानन्दः ।

श्री.– *शतानन्दः = अनन्तसुखः ।

## ६२३. नन्दिः (नन्दी)

वि.– *परमानन्दविग्रहो नन्दिः ।

र.– *नन्दयति प्रस्कण्वादिभक्तान् इति नन्दिः ।

स.– *नन्दः आनन्दः अस्य अस्तीति नन्दी (नन्दिः) । नन्दयतीति वा ।

श्री.– *नन्दिः = भक्तानन्दकः ।



## ६२४. ज्योतिर्गणेश्वरः

वि.– *ज्योतिर्गणानामीश्वरो ज्योतिर्गणेश्वरः ।

र.– *सन्तः ज्योतिषां गणाः समूहाः तेषाम् ईश्वरः स्वामी ज्योतिर्गणेश्वरः ।

स.– *ज्योतिर्गणस्य सूर्यादिसमुदायस्य ईश्वरः ।
*"जातमोतं हरौ यस्मात्" इत्युक्तेः, जातमुत्पन्नं सर्वमोतं यस्मादिति वा, ज्योतिर्द्योतते इति वा, गणस्य देवतागणस्य ईश्वरः स चासौ स चेति वा ।

श्री.– *ज्योतिर्गणेश्वरः = सूर्यादिस्वामी ।



## ६२५. विजितात्मा

वि.– *विजित आत्मा मनो येनासौ विजितात्मा ।

र.– *विजितं विजयः तनयादीनां विजिते विजये प्राप्तौ आत्मा प्रयत्नः यस्य सः विजितात्मा । भक्तस्य तनयाद्यभीष्टदाने प्रतत्नवान् इति यावत् ।

स.– *विजिताः आत्मानः जीवाः तन्मनांसि वा येनेति वा ।

*विना गरुडेन जितः प्राप्तः आत्मा देहः यस्येति वा विजितात्मा ।

श्री.– *विजितात्मा = भक्तस्य तनयादीष्टदाने यत्नवान् ।



## ६२६. (अ)विधेयात्मा

वि.– *न केनापि विधेयः आत्मा अस्येति अविधेयात्मा ।

*सर्वैर्विधेयोऽनुसरणीय आत्माऽस्येति विधेयात्मा वा ।

र.– *विधेया नियम्या आत्मानः द्यावापृथिव्यादयः जीवसङ्घाः यस्य सः विधेयात्मा ।

*अविधेयात्मा केनापि अविधेयः अनियम्यः आत्मा स्वरूपं यस्य सः अविधेयात्मा ।

स.– *विधेये विधिविषये स्नानदानादौ आत्मा मनः यस्यासौ विधेयात्मा ।

श्री.– *विधेयात्मा = द्यावापृथिव्यादिनियामकः ।



## ६२७. सत्कीर्तिः

वि.– *सती निर्दोषा कीर्तिरस्येति सत्कीर्तिः ।

सती कीर्तिर्यस्मादिति वा ।

र.– *सती निर्दुष्टा कीर्तिः (यशः) यस्य सः सत्कीर्तिः ।

स.– *सती कीर्तिः यस्यासौ सत्कीर्तिः ।

*तन्नाम्नी भार्या यस्य वामनरूपे स इति वा ।

तदुक्तं षष्ठस्कन्धभागवते–

''उपक्रमस्य देवस्य माया वामनरूपिणः ।
कीर्तौ पत्न्यां बृहच्छ्लोकाः तस्यासन् सौभगादयः'' ॥ इति ।

श्री.– *सत्कीर्तिः = निर्दुष्टयशाः ।



## ६२८. छिन्नसंशयः

वि.– *सर्वसाक्षात्कारवतः कुत्रापि संशयाभावात् छिन्नसंशयः ।

*छिन्नः संशयो यस्मादिति वा ।

र.– *छिन्नः संशयः शत्रुः यस्मात् सः छिन्नसंशयः ।

स.– *छिन्नः संशयः येनासौ छिंन्नसंशयः ।

''भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'' ॥ इति श्रुतेः ।

श्री.– *छिन्नसंशयः = हतशत्रुः ।



उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः ।
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥ ६७ ॥

## ६२९. उदीर्णः

वि.– *सर्वभूतेभ्यः समुद्रिक्तत्वादुदीर्णः ।

स.– *विजिताः आत्मानः जीवाः तन्मनांसि वा येनेति वा ।

*विना गरुडेन जितः प्राप्तः आत्मा देहः यस्येति वा विजितात्मा ।

श्री.– *विजितात्मा = भक्तस्य तनयादीष्टदाने यत्नवान् ।



## ६२६. (अ)विधेयात्मा

वि.– *न केनापि विधेयः आत्मा अस्येति अविधेयात्मा ।

*सर्वैर्विधेयोऽनुसरणीय आत्माऽस्येति विधेयात्मा वा ।

र.– *विधेया नियम्या आत्मानः द्यावापृथिव्यादयः जीवसङ्घाः यस्य सः विधेयात्मा ।

*अविधेयात्मा केनापि अविधेयः अनियम्यः आत्मा स्वरूपं यस्य सः अविधेयात्मा ।

स.– *विधेये विधिविषये स्नानदानादौ आत्मा मनः यस्यासौ विधेयात्मा ।

श्री.– *विधेयात्मा = द्यावापृथिव्यादिनियामकः ।



## ६२७. सत्कीर्तिः

वि.– *सती निर्दोषा कीर्तिरस्येति सत्कीर्तिः ।

सती कीर्तिर्यस्मादिति वा ।

र.– *सती निर्दुष्टा कीर्तिः (यशः) यस्य सः सत्कीर्तिः ।

स.– *सती कीर्तिः यस्यासौ सत्कीर्तिः ।

*तन्नाम्नी भार्या यस्य वामनरूपे स इति वा ।

तदुक्तं षष्ठस्कन्धभागवते–

''उपक्रमस्य देवस्य माया वामनरूपिणः ।

कीर्तौ पत्न्यां बृहच्छ्लोकाः तस्यासन् सौभगादयः'' ॥ इति ।

श्री.– *सत्कीर्तिः = निर्दुष्टयशाः ।



## ६२८. छिन्नसंशयः

वि.– *सर्वसाक्षात्कारवतः कुत्रापि संशयाभावात् छिन्नसंशयः ।

*छिन्नः संशयो यस्मादिति वा ।

र.– *छिन्नः संशयः शत्रुः यस्मात् सः छिन्नसंशयः ।

स.– *छिन्नः संशयः येनासौ छिन्नसंशयः ।

''भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'' ॥ इति श्रुतेः ।

श्री.– *छिन्नसंशयः = हतशत्रुः ।



उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः ।

भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥ ६७ ॥

## ६२९. उदीर्णः

वि.– *सर्वभूतेभ्यः समुद्रिक्तत्वादुदीर्णः ।

र.– *उत् उत्कृष्टस्य शरणादेः ईर्णः गमयिता इति उदीर्णः ।

यद्वा–*उ सम्यक् शत्रून् दृणाति हिनस्ति इति उदीर्णः ।

स.– *उः रुद्रः प्रलयकाले दीर्णः येन असौ उदीर्णः ।

*उत्कृष्टत्वाद्वा उदीर्णः ।

श्री.– *उदीर्णः = सम्यक्छत्रुदारणः ।



## ६३०. सर्वतश्चक्षुः

वि.– *सर्वतश्चक्षुर्ज्ञानं यस्य स सर्वतश्चक्षुः ।

"विश्वतश्चक्षुः" इति श्रुतेः ।

र.– *शत्रूणाम् आयुधानि चष्टे निराचष्टे निराकरोति इति चक्षुः। सर्वतः सर्वेभ्योऽपि प्रयुक्तानि आयुधानि चष्टे निराचष्टे इति सर्वतश्चक्षुः ।

स.– *प्रथमान्तात् तसिः । सर्वं पूर्णं चक्षुः यस्यासौ तथा ।

*सर्वत्र चक्षुः यस्य इति वा । सप्तम्यन्तात् तसिः ।

श्री.– *सर्वतश्चक्षुः = सर्वशत्रुप्रयुक्तायुधनिवारणः ।



## ६३१. अनीशः

वि.– *नास्तीशोऽस्येत्यनीशः ।

"न तस्येशो कश्चन" इति श्रुतेः ।

र.– *अनति चेष्टयति सेनाम् इति सेनानायकः अनी, तस्य ईष्टे रक्षकः इति अनीशः ।

स.– *न विद्यते ईशः यस्य सः अनीशः ।

*अनिनां प्राणिनां ईश इति वा ।

श्री.– *अनीशः = सेनानीरक्षकः ।



## ६३२. शाश्वतस्थिरः (शाश्वतः, स्थिरः)

वि.– *शश्वद् भवन्नपि न विक्रियां कदाचिदुपैतीति शाश्वतस्थिर इति नामैकम् ।

र.– *शत्रुमुक्तानि आयुधानि परिहृत्य भक्तानां प्राणान् ददाति इति शाश्वतः ।

*शत्रूणां गतिं निवर्तयति इति स्थिरः ।

स.– *शश्वद्भवः शाश्वतः, शाश्वतश्चासौ स्थिरश्च शाश्वतस्थिरः ।

श्री.– *शाश्वतः = भक्तप्राणदः ।

*स्थिरः = शत्रुगतिनिवर्तकः ।



## ६३३. भूशयः

वि.– *भूमौ शेत इति भूशयः ।

"सा पृथिव्यभवत् तस्यामश्राम्यत्" इति श्रुतेः ।

र.– *भूवि अश्वान् शाययति प्रेरयति इति भूशयः ।

स.– *भूः शये हस्ते यस्य सः तथा ।

*भूरूपया रमया शेते इति वा ।

*भुवि शेते इति वा ।

श्री.– *भूशयः = भुवि अश्वप्रेरकः ।



## ६३४. भूषणः

वि.– *सर्वलोकानां भूषणत्वात् भूषणः ।

र.– *युद्धमण्डले अश्वान् विचित्रम् आवर्तयति, भूषयति इति यावत् । अश्वानां युद्धभूमौ आवर्तनम् एव हि भूषणम् ।

स.– *भूषयति इति भूषणः ।

*भू पूर्णौ षणौ चेष्टानन्दौ यस्येति वा ।

*भूषणानि अस्य सन्तीति वा ।

श्री.– *भूषणः = अश्वानां पुनरावर्तकः ।



## ६३५. भूतिः (अभूतिः)

वि.– *ऐश्वर्यात्मकत्वात् तद्धेतुत्वाद्वा भूतिः । अभूतिदत्वादभूतिरिति वा । "तं भूतिरिति देवा उपासाञ्चक्रिरे । अभूतिरित्यसुराः" इति श्रुतेः ।

र.– *सूर्यम् उपसं च भावयति प्रकाशं प्रापयति इति भूतिः ।

स.– *भूतिः ऐश्वर्यरूपः ।

श्री.– *भूतिः = सूर्यमण्डलप्रापकः ।



## ६३६. विशोकः

वि.– *विगतः शोकोऽस्येति विशोकः ।

र.– *विगतः शोकः यस्मात् सः विशोकः ।

स.– *विगतः शोकः यस्मात् सः विशोकः ।

*विशेषेण शं सुखं यस्मिन् तत् विशं, तदोको वैकुण्ठादिः यस्य तद्ब्रह्म तथेति वा ।

श्री.– *विशोकः = शोकरहितः ।



## ६३७. शोकनाशनः

वि.– *स्मरणमात्रेण भक्तानां शोकं नाशयतीति शोकनाशनः ।

र.– *शोकं नाशयति इति शोकनाशनः ।

स.– *शोकं नाशयतीति वा ।

*शोकस्य नाशो येषान्ते शोकनाशाः मुक्ताः तान्नयतीति वा शोकनाशनः ।

श्री.– *शोकनाशनः = शोकापहर्ता ।



अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ६८ ॥

## ६३८. अर्चिष्मान्

वि.– ★अर्चींषि समीचीनान्यस्य सन्तीत्यर्चिष्मान् ।

र.– ★अर्च्यते इति अर्चिः वज्रं, तत् अस्य अस्ति इति अर्चिः, बाह्वोः वज्रम् आदधे इति अर्चिष्मान् ।

स.– ★अर्चींषि अस्य सन्तीति अर्चिष्मान् ।

श्री.– ★अर्चिष्मान् = वज्री ।



## ६३९. अर्चितः

वि.– ★ब्रह्मादिभिः अर्च्यत इत्यर्चितः ।

र.– ★अर्च्यन्ते पूज्यन्ते इति अर्चयः गावः, अर्चीः गाः गुहाभ्यः तारयति विस्तारयति इति वा अर्चितः ।

स.– ★ब्रह्मादिभिः अर्चितत्वात् अर्चितः ।

श्री.– ★अर्चितः = गोगुहातारकः ।



## ६४०. कुम्भः

वि.– ★कुं भूमिं बिभर्तीति कुम्भः ।

★कुम्भवत् सर्वाश्रयत्वाद्वा ।

र.– ★कुं गोपिहितारं वलं भिनत्ति इति कुम्भः ।

स.– ★कुं भूमिं भासयतीति कुम्भः ।

श्री.– ★कुम्भः = शत्रुपुरभेदकः ।

## ६४१. विशुद्धात्मा

वि.– *गुणत्रयातीततया विशुद्ध आत्मा देहोऽस्येति विशुद्धात्मा।

र.– *विशुद्धं क्रतुं फलदानेन विस्तारयति पोषयति च इति विशुद्धात्मा।

स.– *विशुद्धः आत्मा यस्य सः विशुद्धात्मा।

श्री.– *विशुद्धात्मा = विशुद्धयज्ञपोषकः।



## ६४२. विशोधनः

वि.– *स्मृतिमात्रेण पापानां क्षपणाद् विशोधनः।

र.– *विशोधो रयिः तं नयति प्रापयति इति विशोधनः।

स.– *विशेषेण शोधयति वेदान् इति विशोधनः।

श्री.– *विशोधनः = धनप्रापकः।



## ६४३. अनिरुद्धः

वि.– *केनापि निरोद्धुमशक्य इत्यनिरुद्धः।

*अनिना प्राणप्रसादवता भक्तेन रुद्धो वा।

र.– *अनिः चेष्टकः फलानां प्रापकः, रुद्धः सर्वेषां निरोधकः (स्वराट् इति यावत्) अनिश्चासौ रुद्धश्च इति अनिरुद्धः।

स.– *निरुद्धो न भवति इति अनिरुद्धः।

*अनिरुद्धाः संसारमुक्ताः तान् दधाति धारयति पोषयतीति वा।

*अनिरस्तं उदाख्यं नाम धत्ते इति वा ।

"प्रतस्योदेति नाम" इति श्रुतिः ।

श्री.– *अनिरुद्धः = फलप्रापकः, सर्वरोधकश्च ।



### ६४४. अप्रतिरथः

वि.– *प्रतिपक्षोऽस्य न विद्यत इति अप्रतिरथः ।

र.– *न विद्यते प्रतिः प्रतिनिधिः यस्य सः अप्रतिः । अप्रतिः रथः आनन्दः यस्मात् इति अप्रतिरथः ।

स.– *प्रतिपक्षरहितः ।

श्री.– *अप्रतिरथः = अप्रतिनिधिसुखः ।



### ६४५. प्रद्युम्नः

वि.– *प्रकृष्टं द्युम्नं दीप्तिः हिरण्यं वा अस्येति प्रद्युम्नः ।

र.– *प्रकर्षेण द्युम्नं द्युतिः बलं वा अस्य अस्ति इति प्रद्युम्नः ।

स.– *दिवि स्नायते इति द्युम्नं यशः, प्रकृष्टं द्युम्नं यस्यासौ तथा ।

श्री.– *प्रद्युम्नः = प्रकृष्टद्युतिमान् ।



### ६४६. अमितविक्रमः (मितविक्रमः)

वि.– *अपरिच्छिन्नविक्रमोऽमितविक्रमः ।

र.– *वि विशेषेण क्रमः विक्रमः (शक्तिः), अमिताः विक्रमाः शक्तयः यस्य सः अमितविक्रमः ।

स.– *अमितः अपरिमितः विक्रमः यस्य सः अमितविक्रमः ।

मितविक्रमः इति छेदे, वेदादिप्रमाणप्रमितः विक्रमः यस्य इत्यर्थः ।

श्री.–*अमितविक्रमः = अमितशक्तिः ।



कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ ६९ ॥

## ६४७. कालनेमिनिहा

वि.– *कालनेमिमसुरं निहतवानिति कालनेमिनिहा ।

र.– *कालनेमिनं हत्वा तदंशभूतं कंसं च हत्वा तदीयराज्यम् अपहरति इति कालनेमिनिहा ।

स.– *कालनेमिं निहन्तीति कालनेमिनिहा ।

श्री.–*कालनेमिनिहा = कंसहन्ता ।



## ६४८. वीरः

वि.– *विक्रमशालित्वाद् वीरः ।

*शत्रून् विजित्य राजत इति वा ।

र.– *युद्धादौ अतिशक्तिमान् वीरः ।

स.– *विशेषेण ईरयतीति, विशिष्टान्वा (इति) वीरः ।

श्री.– *वीरः = अतिशक्तिमान् ।



## ६४९. शूरः (शौरिः)

वि.– *पराक्रमित्वाच्छूरः ।

र.– *स्वयं भयरहितः सङ्ग्रामान् ऋच्छति, भयार्तेभ्यो अभयं ददाति च इति शूरः (केचित् शौरी इति अन्यथा पठन्ति)

स.– *शूरयति जनान् इति शूरः ।

स.– *शूरकुलोद्भवः शौरिः ।

श्री.– *शूरः = अभयः, अभयदश्च ।



## ६५०. शूरजनेश्वरः (सूरिजनेश्वरः)

वि.– *शूरजनानामीष्ट इति शूरजनेश्वरः ।

र.– *सूयते इति सूरिः विद्वान्, जनः मूर्खः, सूरिश्च जनश्च सूरिजनौ। तौ स्वात्मनः स्तावकौ चेत् ईश्वरयति सुखिनौ करोति इति सूरिजनेश्वरः ।

स.– *शूरवंशजातत्वात् शूरजः, न विद्यते ईश्वरो यस्य सः नेश्वरः शूरजश्चासौ नेश्वरश्च स तथा ।

श्री.– *सूरिजनेश्वरः = विद्वन्मूर्खभक्तसुखयिता ।



## ६५१. त्रिलोकात्मा

वि.– *त्रयाणां लोकानामन्तर्यामी त्रिलोकात्मा ।

र.– *तनोति इति त्रि विस्तृतं, लोको ज्ञानं, तत् ददाति इति आत्मा ।

*यद्वा त्रिलोकः विस्तृतं ज्ञानम् आत्मा स्वभावः यस्य सः त्रिलोकात्मा ।

स.– *लोकानां आत्मा लोकात्मा, त्रयाणां लोकात्मा त्रिलोकात्मा ।

श्री.– *त्रिलोकात्मा = विस्तृतज्ञानदः ।



## ६५२. त्रिलोकेशः

वि.– *त्रयाणां लोकानामधिपतिः त्रिलोकेशः ।

र.– *पापाः अरयः कर्मभ्रष्टाश्च इति त्रयो लोकाः तान् त्रीन् लोकान् ईजयति कुत्सयति इति त्रिलोकेशः ।

स.– *त्रयश्च ते लोकाश्चेति न विशेषणसमासः । दिक्सङ्ख्ये संज्ञायामिति संज्ञायामेव तस्य नियमितत्वात् अत एव शेषवाक्यार्थचन्द्रिकायां ''सप्तघटिकाभोजनमिति'' सुधाप्रतीकमुपादाय, सप्त च ताः घटिकाश्च इति न विशेषणसमासः । ''दिक्सङ्ख्ये संज्ञायामिति'' संज्ञायामेव नियमितत्वात् सप्तघटिकाभोजनमिति उभयत्रापि 'सप्तमी'' इति योगविभागादेव समासः । सप्तत्वं तु सामर्थ्यात् घटिकास्वेव अन्वेति । साध्यो धर्मः यस्येति साध्यधर्मा इति व्युत्पाद्य,

सन्दिग्धश्चासौ साध्यधर्मा च इति कर्मधारयेऽपि सन्दिग्धतायाः साध्यमात्रपर्यवसायित्वस्य नवरसरुचिरमित्यत्र नवत्वस्य रसेष्वेव पर्यवसानस्य, लोकानां नाथः इति लोकनाथपदं व्युत्पाद्य त्रयाणां लोकनाथः इति विगृह्य समासेऽपि त्रित्वस्य सामर्थ्यात् प्रसिद्धेश्च लोकेष्वेव पर्यवसानस्य च दर्शनात् इत्यवधेयम्'' इत्युक्तम्।

श्री.– *त्रिलोकेशः = पापारिकर्मभ्रष्टकुत्सकः।



## ६५३. केशवः

वि.– *''अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः।
सर्वज्ञाः केशवं तस्मान्मामाहुर्द्विजसत्तमाः'' ॥
इति भारतवचनात् केशवः।

*सुखश्रेष्ठं वहति वर्तयतीति वा।

र.– *कं सुखम्, ईः लक्ष्मीः, शं श्रेयः, कश्च ईश्च शश्च केशानि सुखलक्ष्मीश्रेयांसि। तानि वाति गमयति इति वा, वर्तयति इति वा, वहति इति वा वः केशवः।

स.– *केशौ शुक्लकृष्णकेशौ वर्तयति भूमाविति केशवः।

*केशेन कृष्णकेशेन वाति गन्धयति दैत्यानिति केशवः।

श्री.– *केशवः = सुखसम्पच्छ्रेयःप्रापकः।



## ६५४. केशिहा

वि.– *केशिनं दैतेयं हतवानिति केशिहा ।

र.– *कं शिरः, ईः कन्धरः, कश्च ईश्च के शिरःकन्धरौ शृणाति इति शी, के शिरःकन्धरौ शृणाति इति केशी वज्रः । तं हन्ति गच्छति बिभर्ति इति यावत्, इति केशिहा वज्रधारकः ।

*केशिना वज्रेण शत्रून् हन्ति इति वा केशिहा ।

स.– *केशिनामानं हन्तीति केशिहा ।

*द्रौपद्याः केशाः कवरीभाराः कर्षकतया अस्य सन्तीति केशी दुःशासनः तं हन्ति इति वा ।

श्री.– *केशिहा = शिरःकन्धरच्छिद्वज्रगः ।



## ६५५. हरिः

वि.– *सर्वयज्ञादिभागहारित्वाद्धरिः ।

''इडोपहूतं यज्ञेषु हरे भागं क्रतुष्वहम् ।
वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृतः'' ।। इति मोक्षधर्मे ।

*विहरति प्रहरतीति वा । आहरति अभ्यवहरति उद्धरतीत्यादि बोध्यम् ।

र.– *हरति शत्रून् इति हरिः ।

स.– *हरति पापमिति हरिः ।

श्री.– *हरिः = शत्रुहन् ।



कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥ ७० ॥

## ६५६. कामदेवः

वि.– *काम्यत इति कामः, कामश्चासौ देवश्चेति कामदेवः ।

*कामानां देव इति वा ।

र.– *कामान् कामितान् गृहादीन् गमयति प्रापयति इति कामदेवः ।

स.– *कामवत् द्योतते इति (कामदेवः) ।

"दिवु क्रीडाविजिगीषाद्युतिस्तुति" इति धातोः ।

श्री.– *कामदेवः = इच्छितगृहादिप्रापकः ।



## ६५७. कामपालः

वि.– *कामिनां कामान् पालयतीति कामपालः ।

र.– *काम्यते इति कामः । काम्येषु सर्वेषु अपि दिग्विशेषेषु भक्तान् पालयति इति कामपालः ।

स.– *कामान् पालयतीति कामपालः ।

*केन चतुर्मुखेन वायुना वा अम्यते गम्यते इति कामः, पालयति जनान् इति पालः, कामश्चासौ पालश्च कामपालः ।

श्री.– *कामपालः = काम्यसर्ववयस्सु भक्तरक्षकः ।



## ६५८. कामी

वि.– ★पूर्णकामस्वभावत्त्वात् कामी ।

र.– ★कानां दैत्यानाम् असुराणां च आयुधानाम् अमः सङ्गमनम् अपगमनं च कामः, सः अस्य अस्ति इति कामी ।

स.– ★कामयते जगद्रक्षणादिकं इति कामी ।

श्री.– ★कामी = असुरायुधापगमकारी ।



## ६५९. कान्तः

वि.– ★मनोहरत्वात् कान्तः ।

र.– ★कं सुखम्, अम् प्राप्तिः, कामं सुखप्राप्तिं तनोति इति कान्तः । (सर्वकालेष्वपि भक्तानां सुखकृत् रक्षकः)

स.– ★कान्तो मनोहरः ।

श्री.– ★कान्तः = सुखप्राप्तिविस्तारकः ।



## ६६०. कृतागमः

वि.– ★कृता आगमाः पञ्चरात्रादयो येनासौ कृतागमः ।

"पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।
सर्वेष्वेतेषु राजेन्द्र ज्ञानेष्वेतद्विशिष्यते" ।। इति भारते ।

र.– ★हस्ते कृतः अगमः वज्रं येन सः कृतागमः ।

स.– ★कृतः आगमः पुराणादिः येन इति वा ।

★कृतः च्छिन्नः, 'कृ हिंसायां' इति क्तः, आगमो विषवृक्षो अर्जुनवृक्षो वा येन इति वा ।

★भूमौ कृतः अगः पारिजातवृक्षः यया सा कृतागा मा सत्यभामा यस्य सः इति वा ।

★कृतेन कर्मणा न गम्यते इति वा कृतागमः ।

श्री.–★कृतागमः = हस्तकृतवज्रः ।



## ६६१. अनिर्देश्यवपुः

वि.–★इदन्तया इत्थंतया इयत्तया वा निर्देष्टुमशक्यं वपुरस्येति अनिर्देश्यवपुः ।

र.– ★क्षणम् अपि एकप्रकारं न तिष्ठति अतः एव निर्देष्टुम् अशक्यम् अनिर्देश्यं मेघमण्डलं, मेघमण्डलम् इव वपति इति अनिर्देश्यवपुः ।

स.– ★अनिर्देश्यं वपुः यस्य सः अनिर्देश्यवपुः ।

"तदेतदिति मन्यन्ते अनिर्देश्यं परमं सुखम्" । इति श्रुतेः ।

श्री.–★अनिर्देश्यवपुः = मेघमण्डलवत् कामवर्षकः ।



## ६६२. विष्णुः

वि.– ★भक्तानां विशिष्टानन्दप्रस्रवणाद् विष्णुः ।

★"विशिष्टत्वाद् विष्णुनामा विशिष्टप्राणसौख्यतः" इति वा ।

र.– *विशेषेण भक्तानाम् अन्धांसि (अन्नानि) ददाति इति विष्णुः ।

स.– *विष्णुशब्दस्तु वहुधा व्याख्यातः ऐतरेयभाष्ये–

''विष्णुनाम्नि णशब्देन विष्णोर्बलमुदीर्यते ।
ण इत्याक्रियमाणत्वात् णकारोऽस्य बलं मतम् ।
विष्णुनाम्नि षकारेण रमाब्रह्मेशपूर्विणः ।
प्रणेतृताऽखिलस्यैव विष्णोरुक्तात्मता तथा ।
आततत्वं सर्वगुणैः देशतः कालतस्तथा ।
आत्मशब्दोदितस्तच्च षशब्देनाभिधीयते ।
ष इत्याक्रियमाणत्वात् प्रणेतृत्वं च पूर्णता ।
विष्णोः षकार इत्युक्तो वीत्युक्तस्य विशिष्टता ।
अन्त्यस्थित उकारस्तु ताच्छील्याद्धरेर्वदेत् ।
एवं विशिष्टप्राणत्वं अनन्तत्वं च सर्वतः ।
विशिष्टं च बलं विष्णोः सर्वस्मात् शीतमित्यपि ।
उदितं विष्णुशब्देन तस्मात् ऋक्संहितामनु ।
वर्णद्वयसमायोगे ष्णुशब्दस्यार्थमेव तु ।
विष्णोः प्राणत्वमात्मत्वं बलं चैवात्र वेत्ति यः ।
स एव विष्णोर्बलवित् तथा प्राणत्वविद्भवेत् ।
स एव मुक्तः संसारात् नित्यायुष्मान् भविष्यति ॥'' इति ।

श्री.– *विष्णुः = विशेषतो भक्तान्नदाता ।



## ६६३. वीरः

वि.– *गत्यादिमत्त्वाद् वीरः ।

*कृतः च्छिन्नः, 'कृ हिंसायां' इति क्तः, आगमो विषवृक्षो अर्जुनवृक्षो वा येन इति वा ।

*भूमौ कृतः अगः पारिजातवृक्षः यया सा कृतागा मा सत्यभामा यस्य सः इति वा ।

*कृतेन कर्मणा न गम्यते इति वा कृतागमः ।

श्री.– *कृतागमः = हस्तकृतवज्रः ।



## ६६१. अनिर्देश्यवपुः

वि.– *इदन्तया इत्थंतया इयत्तया वा निर्देष्टुमशक्यं वपुरस्येति अनिर्देश्यवपुः ।

र.– *क्षणम् अपि एकप्रकारं न तिष्ठति अतः एव निर्देष्टुम् अशक्यम् अनिर्देश्यं मेघमण्डलं, मेघमण्डलम् इव वपति इति अनिर्देश्यवपुः ।

स.– *अनिर्देश्यं वपुः यस्य सः अनिर्देश्यवपुः ।

''तदेतदिति मन्यन्ते अनिर्देश्यं परमं सुखम्'' । इति श्रुतेः ।

श्री.– *अनिर्देश्यवपुः = मेघमण्डलवत् कामवर्षकः ।



## ६६२. विष्णुः

वि.– *भक्तानां विशिष्टानन्दप्रस्रवणाद् विष्णुः ।

*''विशिष्टत्वाद् विष्णुनामा विशिष्टप्राणसौख्यतः'' इति वा ।

र.– *विशेषेण भक्तानाम् अन्धांसि (अन्नानि) ददाति इति विष्णुः ।

स.– *विष्णुशब्दस्तु वहुधा व्याख्यातः ऐतरेयभाष्ये–

''विष्णुनाम्नि णशब्देन विष्णोर्बलमुदीर्यते ।
ण इत्याक्रियमाणत्वात् णकारोऽस्य बलं मतम् ।
विष्णुनाम्नि षकारेण रमाब्रह्मेशपूर्विणः ।
प्रणेतृताऽखिलस्यैव विष्णोरुक्तात्मता तथा ।–
आततत्वं सर्वगुणैः देशतः कालतस्तथा ।
आत्मशब्दोदितस्तच्च षशब्देनाभिधीयते ।
ष इत्याक्रियमाणत्वात् प्रणेतृत्वं च पूर्णता ।
विष्णोः षकार इत्युक्तो वीत्युक्तस्य विशिष्टता ।
अन्त्यस्थित उकारस्तु ताच्छील्याद्धरेर्वदेत् ।
एवं विशिष्टप्राणत्वं अनन्तत्वं च सर्वतः ।
विशिष्टं च बलं विष्णोः सर्वस्मात् शीतमित्यपि ।
उदितं विष्णुशब्देन तस्मात् ऋक्संहितामनु ।
वर्णद्वयसमायोगे ष्णुशब्दस्यार्थमेव तु ।
विष्णोः प्राणत्वमात्मत्वं बलं चैवात्र वेत्ति यः ।
स एव विष्णोर्बलवित् तथा प्राणत्वविद्भवेत् ।
स एव मुक्तः संसारात् नित्यायुष्मान् भविष्यति ॥'' इति ।

श्री.– *विष्णुः = विशेपतो भक्तान्नदाता ।



### ६६३. वीरः

वि.– *गत्यादिमत्त्वाद् वीरः ।

र.– *विशिष्टवेदवाण्या ईर्यते गम्यते इति वीरः ।

स.– *विशिष्टा ईरा इच्छानुरूपं सुखं यस्य सः वीरः ।

तदुक्तम् ऐतरेयभाष्ये–

"इच्छानुरूपन्तु सुखं ईरे (त्येतत्)त्यनेन प्रकीर्तितम्" । इति

*यद्वा वीरः समर्थः ।

श्री.– *वीरः = विशिष्टत्वेन वेदवाग्गम्यः ।



### ६६४. अनन्तः

वि.– *"यत्तन्नोपलभ्यते तिर्यगूर्ध्वमधस्तात् तस्मादुच्यतेऽनन्तः" इति श्रुतेरनन्तः ।

र.– *अन्तः विनाशः न अस्ति सङ्कल्पस्य इति अनन्तः ।

स.– *न विद्यते अन्तः नाशः यस्य सः अनन्तः ।

श्री.– *अनन्तः = अविनाशः ।



### ६६५. धनञ्जयः

वि.– *शत्रूणां धनं सर्वस्वं जयतीति धनञ्जयः ।

र.– *धनं यज्ञादिकं जयति प्राप्नोति इति धनञ्जयः ।

स.– *धनं जयतीति धनञ्जयः ।

श्री.– *धनञ्जयः = यज्ञादिप्राप्तिमान् ।



ब्रह्मण्यो ब्रह्मकृद् ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद् ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ७१ ॥

### ६६६. ब्रह्मण्यः

वि.– ★"तपो जातिश्च वेदाश्च विज्ञानं ब्रह्मशब्दितम्" । तस्मै हितत्वाद् ब्रह्मण्यः ।

र.– ★ब्रह्मणि स्तोत्रकृति साधुः अभीष्टदाता इति ब्रह्मण्यः ।

स.– ★ब्राह्मणप्रियत्वात् ब्रह्मण्यः ।

★ब्रह्मयत्यानन्देन मुक्तान् इति ब्रह्मा ब्रह्मण्यः, तन्नामक-सुधासमुद्रो यस्मात् इति वा ।

श्री.– ★ब्रह्मण्यः = स्तोत्रकृत्साधुः ।



### ६६७. ब्रह्मकृत् (ब्रह्मकृद्ब्रह्मा, अब्रह्मकृत्)

वि.– ★तपआदिकर्तृत्वात् ब्रह्मकृत् । विरिञ्चकर्ता वा ।

र.– ★ब्रह्मकृतं स्तोत्रकारिणं यजमानं वृंहयति भूपयति इति ब्रह्मकृद्ब्रह्मा ।

स.– ★"ब्रह्म वेदाः तपः तत्त्वम्" इत्युक्तेः, ब्रह्म आलोच-नात्मकं तपः करोतीति ब्रह्मकृत् ।

★अब्रह्मकृत् इति पदच्छेदे

"अवतारे मे षोडशमे यच्छन् ब्रह्मद्रुहो नृपान् ।
त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीम्" ॥ इत्युक्तेः,

र.– *विशिष्टवेदवाण्या ईर्यते गम्यते इति वीरः ।

स.– *विशिष्टा ईरा इच्छानुरूपं सुखं यस्य सः वीरः ।

तदुक्तम् ऐतरेयभाष्ये–

"इच्छानुरूपन्तु सुखं ईरे (त्येतत्)त्यनेन प्रकीर्तितम्" । इति

*यद्वा वीरः समर्थः ।

श्री.– *वीरः = विशिष्टत्वेन वेदवाग्गम्यः ।



## ६६४. अनन्तः

वि.– *"यत्तन्नोपलभ्यते तिर्यगूर्ध्वमधस्तात् तस्मादुच्यतेऽनन्तः" इति श्रुतेरनन्तः ।

र.– *अन्तः विनाशः न अस्ति सङ्कल्पस्य इति अनन्तः ।

स.– *न विद्यते अन्तः नाशः यस्य सः अनन्तः ।

श्री.– *अनन्तः = अविनाशः ।



## ६६५. धनञ्जयः

वि.– *शत्रूणां धनं सर्वस्वं जयतीति धनञ्जयः ।

र.– *धनं यज्ञादिकं जयति प्राप्नोति इति धनञ्जयः ।

स.– *धनं जयतीति धनञ्जयः ।

श्री.– *धनञ्जयः = यज्ञादिप्राप्तिमान् ।



ब्रह्मण्यो ब्रह्मकृद् ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद् ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ७१ ॥

### ६६६. ब्रह्मण्यः

वि.– ★"तपो जातिश्च वेदाश्च विज्ञानं ब्रह्मशब्दितम्" । तस्मै हितत्वाद् ब्रह्मण्यः ।

र.– ★ब्रह्मणि स्तोत्रकृति साधुः अभीष्टदाता इति ब्रह्मण्यः ।

स.– ★ब्राह्मणप्रियत्वात् ब्रह्मण्यः ।

★ब्रह्मयत्यानन्देन मुक्तान् इति ब्रह्मा ब्रह्मण्यः, तन्नामक-सुधासमुद्रो यस्मात् इति वा ।

श्री.– ★ब्रह्मण्यः = स्तोत्रकृत्साधुः ।



### ६६७. ब्रह्मकृत् (ब्रह्मकृद्ब्रह्मा, अब्रह्मकृत्)

वि.– ★तपआदिकर्तृत्वात् ब्रह्मकृत् । विरिञ्चकर्ता वा ।

र.– ★ब्रह्मकृतं स्तोत्रकारिणं यजमानं बृंहयति भूषयति इति ब्रह्मकृद्ब्रह्मा ।

स.– ★"ब्रह्म वेदाः तपः तत्त्वम्" इत्युक्तेः, ब्रह्म आलोचनात्मकं तपः करोतीति ब्रह्मकृत् ।

★अब्रह्मकृत् इति पदच्छेदे

"अवतारे मे षोडशमे यच्छन् ब्रह्मद्रुहो नृपान् ।
त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीम्" ॥ इत्युक्तेः,

ब्रह्मभिन्नतत्सदृशदुष्टक्षत्रियान् परशुरामाख्यरूपेण, निरीश्वरवादिनो वा कृणोतीति तथा ।

श्री.– *ब्रह्मकृद्ब्रह्मा = स्तोत्रकृद्भूपणः ।



## ६६८. ब्रह्मा

वि.– *प्राधान्येन चतुर्मुखादिस्रष्टृत्वाद् ब्रह्मा ।

स.– *बृह्मयति वर्धयति भक्तानिति तथा । "बृही वृद्धौ" ।



## ६६९. ब्रह्म

वि.– *परिपूर्णं ब्रह्म ।

"अथ कस्मादुच्यते परं ब्रह्मेति । बृंहति बृंहयति च" इति श्रुतेः ।

र.– *विचित्रवुद्ध्या वृंहति वृंहयति च इति ब्रह्म ।

स.– *ब्रह्म पूर्णं पूरकं च ।

"अथ कस्मादुच्यते परं ब्रह्म बृंहयति च" इति श्रुतेः ।

श्री.– *ब्रह्म = चित्रवुद्धिपूरकः ।



## ६७०. ब्रह्मविवर्धनः

वि.–*ब्रह्माणि वेदान् सम्प्रदायप्रवर्तकत्वेन विवर्धयति, न करोति, तेपां नित्यत्वादिति ब्रह्मविवर्धनः ।

र.– ★पौंस्यादिकं ब्रह्म, तस्य विशेषेण वर्धनं यस्मिन् सः ब्रह्मविवर्धनः ।

स.– ★ब्रह्म वेदः तं वर्धयति व्यासरूपेण इति तथा ।

श्री.–★ब्रह्मविवर्धनः = पौरुपवृद्ध्याश्रयः ।



## ६७१. ब्रह्मवित्

वि.– ★ब्रह्म वेदं वेदार्थं च वेत्तीति ब्रह्मवित् ।

र.– ★ब्रह्म वृंहणं व्याप्तिः, तत् विन्दते लभते इति ब्रह्मवित् ।

स.– ★ब्रह्मवित् वेदज्ञः ।

★"मम योनिः महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्" । इत्यत्र रमायां ब्रह्मशब्दप्रयोगात्, रमां विन्दते इति वा ।

★स्वस्वरूपं वेत्ति इति वा ।

"तदात्मानमेव अवेत्" इति श्रुतेः ।

श्री.–★ब्रह्मवित् = व्याप्तिलाभी ।



## ६७२. ब्राह्मणः

वि.– ★वेदाख्यब्रह्मणाऽण्यत्वाद् ब्राह्मणः ।

"एष नित्यो महिमा ब्राह्मणस्य" इति श्रुतेः ।

र.– ★भक्तकृतानि ब्रह्माणि स्तोत्राणि अणति प्राप्नोति इति ब्रह्माणः दीर्घव्यत्ययः ब्राह्मणः ।

**स.– *ब्रह्मणा वेदेन गम्यते इति ब्राह्मणः ।**

स्पष्टं च एतत् 'पत्यादिशब्देभ्यः' इति प्रथमाध्यायतृतीयपादीय-सूत्रभाष्यटीकायाम् ।

न च विष्णौ ब्राह्मणशब्दानुपपत्या अजशब्दापहारः, ब्रह्मणा वेदेन गम्यते इति योगोपपत्तेः । स्वरव्यत्ययस्य आधिक्यार्थत्वात्, ''अण-गतौ'' इति धातोरिति ।

तत्र चन्द्रिका– स्वरव्यत्ययस्य आधिक्यार्थत्वादिति ।

''आधिक्ये अधिकमित्येव हरिणा सूत्रमीरितम्'' ॥

इति ऋग्भाष्ये उक्तत्वात् । ब्रह्मणा वेदेन गम्यत्वात् आधिक्य-विवक्षया दीर्घः इत्यर्थः इति ।

**श्री.– *ब्राह्मणः = स्तोत्रप्रापः ।**



## ६७३. ब्रह्मी

**वि.–*ब्रह्माणि जीवादीनि अस्य सन्ति न तु स्वयं जीवादि-र्भवतीति ब्रह्मी ।**

''ब्रह्माणि जीवाः सर्वेऽपि परब्रह्माणि मुक्तिगाः ।
प्रकृतिः परमं ब्रह्म परमं महदच्युतः ।
नैव मुक्ता न प्रकृतिः क्वापि तद् विष्णुवैभवम् ।
प्राप्नुवन्त्यपि तज्ज्ञानान्निजं ब्रह्मत्वमाप्यते'' ॥ इत्यादिश्रुतेः ।

**र.– *ब्रह्माणः ऋत्विजः ते आह्वानकर्तृत्वेन अस्य सन्ति इति ब्रह्मी ।**

स.– *ब्रह्माणि जीवाः अस्य सन्ति इति ब्रह्मी ।

नकारान्तात् इनि प्रत्ययस्तु "प्राणी तु चेतनो जन्मी" इत्यत्रेव व्रीह्यादित्वात् बोध्यः ।

श्री.– *ब्रह्मी = ऋत्विग्वान् ।



## ६७४. ब्रह्मज्ञः

वि.– *ब्रह्म परिपूर्णं स्वात्मानमपरं वा लक्ष्म्यादिकं साकल्येन जानातीति ब्रह्मज्ञः ।

र.– *ब्रह्म स्तोत्रादिसाधनजातं जानाति इति ब्रह्मज्ञः ।

स.– *ब्रह्मा चतुर्मुखः ज्ञः ज्ञाता यस्य असौ ब्रह्मज्ञः ।

श्री.– *ब्रह्मज्ञः = स्तोत्रादिसाधनज्ञः ।



## ६७५. ब्राह्मणप्रियः

वि.– *ब्रह्म वेदं तदर्थं परं ब्रह्म वा अणन्त्यवगच्छन्तीति ब्राह्मणास्तेषां प्रियः, ते प्रिया अस्येति वा ब्राह्मणप्रियः ।

*ते लोके भवन्ति प्रिया यस्मादिति वा ।

र.– *ब्रह्म स्तोत्रं तत् कर्तारः ब्राह्मणाः ऋत्विजः तान् अनाद्यविद्यानिर्हरणेन प्रीणयति इति ब्राह्मणप्रियः ।

स.– *ब्रह्म अणतीति ब्राह्मणः ज्ञानी, स एव प्रियो यस्य सः ब्राह्मणप्रियः ।"

प्रियो हि ज्ञानिनोऽत्यर्थं अहं स च मम प्रियः'' । इत्यादेः । अथवा ''प्रथमे ब्राह्मणो मुक्तो द्वितीयो योग्य उच्यते'' इति । ''अथ ब्राह्मणः केन स्यात्'' इत्यादिश्रुतिव्याख्यानरूपबृहद्भाष्योक्तेः ब्राह्मणाः मुक्ताः तेषां प्रियत्वाद्वा ।

श्री.– *ब्राह्मणप्रियः = ऋत्विक्प्रीणनः ।



**महाक्रमो महाकर्मा महातेजा महोरगः ।**
**महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥ ७२ ॥**

### ६७६. महाक्रमः

वि.– ***महान्तः पादविक्षेपा अस्येति महाक्रमः ।**

***आक्रमन्त्येभिरिति आक्रमाः मर्यादासेतवः, महान्तः आक्रमा अस्येति वा ।**

र.– ***सर्वराजत्व-युद्धगन्तृत्व-उत्कृष्टकान्तिमत्त्व-शत्रुसेनासंहर्तृत्व ज्येष्ठत्वादिप्रयुक्तशक्तिः क्रमः । महान् क्रमः यस्य सः महाक्रमः ।**

स.– ***महाक्रमः 'अग्निमीळे' इत्यादिवेदक्रमः यदीयबुद्धौ सः महाक्रमः ।**

''वेदास्ते नित्यविन्नत्वात् श्रुतयश्चाखिलैः श्रुतेः ।
आम्नायः अनन्यथापाठात् ईशबुद्धिस्थिताः सदा'' ॥
इति स्मृतेः ।

श्री.–***महाक्रमः = महाशक्तिः ।**



## ६७७. महाकर्मा

वि.– *महत् जगदुत्पादनादि कर्म यस्य स महाकर्मा ।

र.– *स्वर्गादौ सूर्यादिस्थापकत्वादीनि महान्ति कर्माणि अस्य इति महाकर्मा ।

स.– *महत् कर्म जगत्सृष्ट्यादिरूपं यस्य इति महाकर्मा ।

''अकर्मा अक्लिष्टकारित्वात्'' इत्युक्तेः न विद्यते क्लिष्टं कर्म यस्य सः अकर्मा, महांश्चासौ अकर्मा चेति वा ।

श्री.– *महाकर्मा = सूर्यस्थापनादिकर्मा ।



## ६७८. महातेजाः

वि.– *महत् तेजः शौर्यादिकं यस्येति महातेजाः ।

र.– *महत् तेजो वलं यस्य स महातेजाः ।

स.– *महत् सूर्यादितेजो नियामकं तेजः यस्य सः तथा ।

श्री.– *महातेजाः = महावलः ।



## ६७९. महोरगः

वि.– *महान् उरगः शेषः यस्य शयनत्वेन स महोरगः ।

र.– *उ हरिः तस्मिन् रमन्ते प्रतिपादकतया इति उराः वेद-वाग्विशेषाः महान्तश्च ते उराश्च महोराः, तैः गीयते स्तूयते इति महोरगः ।

स.– *उरसा गच्छतीति उरगः, महान् उरगः शेषः कालियो वा दासत्वेन यस्य इति महोरगः ।

श्री.– *महोरगः = वेदवाक्स्तव्यः ।



## ६८०. महाक्रतुः

वि.– *महान्तः क्रतवोऽग्निष्टोमादयो यदाराधनात्मकाः स महाक्रतुः ।

र.– *महान् क्रतुः माहात्म्यं यस्य सः महाक्रतुः ।

स.– *"सः क्रतुः ज्ञानरूपत्वात्" इत्युक्तेः, क्रतुः ज्ञानरूपः, महांश्चासौ क्रतुश्चेति महाक्रतुः ।

श्री.– *महाक्रतुः = महामाहात्म्यः ।



## ६८१. महायज्वा

वि.– *महान्तो ब्रह्मादयो यज्वानो यस्य स महायज्वा ।

र.– *यज्वा अभीष्टानां दाता, महांश्च असौ यज्वा च महायज्वा ।

स.– *महान्तो ब्रह्मादयः यज्वानः यस्मै सः महायज्वा ।

श्री.– *महायज्वा = महाभीष्टदाता ।



## ६८२. महायज्ञः (अमहायज्ञः)

वि.– *महान्तो यज्ञा यत्पूजात्वेन विधीयन्ते स महायज्ञः ।

र.– ★अश्वयोः रथे सङ्गतिं करोति इति यज्ञः, महयोः तेजस्विनोः अश्वयोः अग्रगामिनोः आ सम्यक् यज्ञः रथे नियोक्ता महायज्ञः ।

स.– ★महान्तः यज्ञाः अश्वमेधादयः यद्विषये इति महायज्ञः ।

★अयं शुभावहविधिं जानातीति अयज्ञः, महांश्चासौ स चेति तथा ।

★अमहायज्ञः इति च्छेदे अमं रोगं हन्तीति अमहः अयं जानाति इति अयज्ञः अमहश्चासौ अयज्ञश्चेति वा ।

श्री.–★महायज्ञः = तेजस्व्यश्वनियोजकः ।



### ६८३. महाहविः

वि.– ★महत् हविर्यस्मै सम्प्रदीयते स महाहविः ।

र.– ★हूयते अनेन इति प्रगाथारणादिगतमन्त्रः हविः । महत् हविः प्रवर्तनीयः यस्मिन् सः महाहविः ।

स.– ★"राजा अहः सखिभ्यः टच्" । महाऽहेषु उत्सवदिनेषु विः गरुडो वाहनत्वेन यस्य सः महाहविः ।

★आहूयते इति हविः, महांश्चासौ हविश्चेति वा ।

श्री.–★महाहविः = महामन्त्रप्रवृत्तिस्थानम् ।



स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ ७३ ॥

## ६८४. स्तव्यः

वि.– *स्तूयतेऽसौ न कस्यापि स्तोतेति स्तव्यः ।

र.– *राधसा द्रविणेन अन्नेन ज्ञानादिना च स्तृणाति आच्छादयति अभिमृशति भक्तानिति स्तव्यः ।

स.– *स्तोतुं योग्यः स्तव्यः ।

श्री.– *स्तव्यः = भक्ताभिमर्शनः ।



## ६८५. स्तवप्रियः

वि.– *स्तवनाय प्रियः स्तवप्रियः ।

र.– *स्तौति इति स्तवः भक्तः, प्रीणाति इति प्रियः, स्तवान् भक्तान् प्रीणयति इति स्तवप्रियः ।

स.– *स्तवप्रियः स्तुतिप्रियः ।

श्री.– *स्तवप्रियः = भक्ततर्पकः ।



## ६८६. स्तोत्रम्

वि.– *स्तूयतेऽनेनेति स्तोत्रम् ।

र.– *स्तं अयज्वत्वादिना निरसनीयं पापिजनम् अत्यन्तं तापयति स्वर्गात् अधः पातयति इति स्तोत्रम् ।

स.– *स्तूयते इति स्तोत्रम् ।

श्री.– *स्तोत्रं = पापिजनाधःपाती ।



## ६८७. स्तुतिः (स्तुतिस्तोता)

वि.– ★गुणसङ्कीर्तनात्मिका स्तुतिरपि स्वयमेव, स्वातन्त्र्यात् ।

र.– ★स्तुतेः भक्तगिरः स्तोता स्तुतिस्तोता । (स्तुतिः स्तोता इति पदद्वयं विच्छिद्य केचित् नामद्वयं कुर्वन्ति ।)

स.– ★जनकर्तृकस्तुतिनियामकत्वात् स्तुतिः ।

श्री.– ★स्तुतिस्तोता = भक्तगीःस्तुतः ।



## ६८८. स्तोता

वि.– ★स्तोतृषु स्थित्वा स्वयमेव स्वात्मानं स्तौतीति स्तोता । ''न ऋते त्वत् क्रियते किञ्चनारे महामर्कं मघवन् चित्रमर्च'' इति श्रुतेः ।

स.– ★''न ऋते त्वत्क्रियते'' इत्युक्तेः स्तुतिकर्तृत्वात् स्तोता ।



## ६८९. रणप्रियः

वि.– ★प्रियो रणोऽस्येति रणप्रियः ।

र.– ★रणः युद्धं प्रियः यस्य सः रणप्रियः ।

स.– ★रणः युद्धं प्रियः यस्य सः रणप्रियः ।

★यद्वा रणः वेदात्मकः शब्दः प्रियो यस्य इति वा रणप्रियः ।

श्री.– ★रणप्रियः = युद्धप्रियः ।



## ६९०. पूर्णः

वि.– *सर्वगुणसम्पन्नः पूर्णः ।

र.– *पूरयति इति पूर्णः ।

स.– *गुणैः पूर्णः ।

श्री.– *पूर्णः = पूरकः ।



## ६९१. पूरयिता

वि.– *न केवलं पूर्णः पूरयिता च सर्वेषां (सर्वान्) सम्पद्भिः ।

र.– *भक्तानां साधनानि पूरयति इति पूरयिता ।

स.– *पूरयिता तत्तद्योग्यतानुसारेण ।

श्री.– *पूरयिता = भक्तसाधनपूर्तिकृत् ।



## ६९२. पुण्यः

वि.– *स्मर्तृपुरुषस्य पापक्षयहेतुत्वात् पुण्यः ।

र.– *पुनाति रज उपलक्षितदोपादिभिः असंस्पृष्टः अत एव परिशुद्धः पुण्यः ।

*पुनाति इति पुण्यः ।

''पूञ् पवने'' इत्यतः ।

श्री.– *पुण्यः = परिशुद्धः ।



## ६९३. पुण्यकीर्तिः

वि.– *पुण्या कीर्तिर्यस्य स पुण्यकीर्तिः ।

र.– *कीर्तिः अविनश्वरं पुण्यं वित्तादि यस्य सः पुण्यकीर्तिः ।

स.– *पुण्यकरा कीर्तिः यस्य सः पुण्यकीर्तिः ।

श्री.– *पुण्यकीर्तिः = वित्ताद्यविनाशः ।



## ६९४. अनामयः

वि.– *निर्दोषत्वादनामयः ।

र.– *अः ब्रह्म, तस्य नामानि स्तोत्राणि, तानि याति इति अनामयः ।

(ब्रह्मप्रतिपादकस्तोत्राणि याति, स्तुतिगोचरः इति यावत्)

स.– *रोगशून्यः ।

*अनेन मुख्यप्राणेन "अम गत्याम्" इति धातोः, अमं प्राप्यं यापयति इति वा ।

श्री.– *अनामयः = ब्रह्मस्तोत्रगोचरः ।



मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ७४ ॥

## ६९५. मनोजवः

वि.– *मनसो वेग इव वेगो यस्य सर्वगतत्वादिति मनोजवः ।

र.– *मनसा जातत्वात् मनोजः मन्मथः, तं वाति गन्धयति कुत्सयति इति मनोजवः ।

स.– *मनसः जव इव जवः यस्य सः मनोजवः ।

*मनसः जवः यस्मात् इति वा ।

श्री.– *मनोजवः = मन्मथकुत्सनः ।



## ६९६. तीर्थकरः

वि.– *तीर्थं गङ्गादिकं सच्छास्त्रं वा करोतीति तीर्थकरः ।

र.– *तीर्थम् आगमः स्तोत्राणि, तानि सेवते आत्मनि करोति इति तीर्थकरः ।

स.– *तीर्थं शास्त्रं करे यस्य सः तीर्थकरः ।

*''शङ्खाक्षपुस्तकसुबोधयुताब्जबाहुम्'' इत्युक्तेः ।

*शास्त्रकृत् वा ।

श्री.– *तीर्थकरः = स्तोत्रसेवी ।



## ६[illegible] [illegible]ताः

वि.– *वसु सुवर्णात्मकं अण्ड[illegible]ताऽस्येति वसुरेताः ।

र.– *वसूनां अज्ञानादीनां स्रावयिता क्षपयिता वा वसुरेताः ।

स.– *''वसु तोये धने मणौ'' इत्युक्तेः, वसुनि जले रेतः यस्य सः वसुरेताः ।

"अप एव ससर्जादौ तासु वीर्यमवासृजत्" इत्युक्तेः ।

श्री.– ★वसुरेताः = आच्छादकाज्ञानादिनाशकः ।



## ६९८. वसुप्रदः

वि.– ★वसु धनं मोक्षादिकं भक्तेभ्यः प्रकर्षेण ददातीति वसुप्रदः ।

र.– ★वसन्ति एभिरिति वसूनि सुखानि, तानि प्रददाति इति वसुप्रदः ।

स.– ★वसुं वस्ववतारं भीष्मं अर्जुनार्थं प्रकर्षेण खण्डयतीति वसुप्रदः ।

श्री.– ★वसुप्रदः = वज्रेणारिविदारणः ।



## ६९९. वसुप्रदः

वि.– ★असुराणां वसूनि प्रकर्षेण खण्डयतीति द्वितीयो वसुप्रदः ।
★वसुप्रं वसुपूर्णं स्वात्मानं ददातीति वा ।

स.– ★वसूनि धनानि रत्नानि वा प्रकर्षेण ददाति भक्तानामिति वसुप्रदः ।

श्री.– ★वसुप्रदः = सुखदायी ।



## ७००. वासुदेवः

वि.– ★आच्छादयति सवम्, वासयति वसति वा सर्वत्रेति वासुः ।
सृष्ट्यादिक्रीडायुक्तत्वाद् देवः ।

''छादयामि जगद् विश्वं भूत्वा सूर्य इवांशुभिः ।
सर्वभूताधिवासश्च वासुदेवस्ततोऽस्म्यहम्'' ॥ इति मोक्षधर्मे ।

''सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिकीर्तितः'' ॥ इति विष्णुपुराणे ।

**र.– ★वसु सुखं तेन दीव्यते द्योतते इति वसुदेवः, स एव वासुदेवः ।**

**★यद्वा वसवः भोगाः तान् दीव्यते प्रापयति इति वसुदेवः ।**

**★वसुदेवः एव वासुदेवः ।**

**स.– ★वसूनां देवः श्रेष्ठः वसुदेवः भीष्मः, तस्य स्वामित्वाद्वासुदेवः ।**

**★यद्वा वसुभिः देवैः, ज्ञानादिरूपान्तरद्रव्यैर्वा दीव्यति प्रकाशते इति वसुदेवशब्दितं ब्रह्मशरीरं, तत्र ज्ञायते इति वासुदेवः ।**

**★अथवा उक्तनिर्वचने वसुदेवशब्दितब्रह्मशरीरस्य अयमाधारः इति वा ।**

तदुक्तं चतुर्थभागवते–

''सत्वं च शुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः ।
स त्वं च यस्मिन् भगवान् वासुदेवः ह्यधोक्षजो मे मनसा
विधीयते ॥'' इति ।

तत्र विशुद्धं सत्वं ब्रह्मशरीरं तत्र अपावृतः पुमान् हरिः यस्मादीयते इति योजना ।

श्री.– ★वासुदेवः = भोगप्रापकः ।



## ७०१. वसुः

वि.– ★वसन्ति सर्वभूतानि तत्र तेष्वयमपि वसतीति वसुः ।

★वं वरुणं सुनोतीति वा ।

र.– ★दक्षिणावति यजमान एव भागं वासयति, न अन्यत्र असुरादौ इति वसुः ।

स.– ★वसतीति वसुः ।

श्री.– ★वसुः = यजमानभागवासकः ।



## ७०२. वसुमनाः

वि.– ★वसु सर्वत्र स्थितं मनोऽन्तःकरणं ज्ञानं वाऽस्येति वसुमनाः ।

★देवादिस्थमना वा ।

र.– ★वसु पौंस्यं रयिं च असुरेभ्यः अपहर्तुं मनुते इति वसुमनाः ।

स.– ★वसुनामकस्य राज्ञो वा, अष्टवसूनां वा मनो यस्मिन्निति वसुमनाः ।

★वसुनि स्यमन्तकमणौ, भक्तदत्ततोये वा मनो यस्येति वा ।

श्री.– ★वसुमनाः = असुरपौंस्यापहारमनाः ।

## ७०३. हविः

वि.– ★हूयते सर्वयज्ञेष्विति हविः ।

र.– *हूयते अद्यते उपजीव्यते इति हविः (उपजीव्यत्वं एव अद्यत्वम्)।

स.– *हूयते इति हविः।

श्री.–*हविः = उपजीव्यः।



सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः॥ ७५॥

## ७०४. सद्गतिः

वि.– *सतां गतिः। सती वा गतिः। सती गतिः प्रवृद्धिः वुद्धिर्वा यस्येति सद्गतिः।

र.– *सीदन्ति अस्मिन् इति सत् स्थानं, तेभ्यः स्थानेभ्यः मेर्वादिभ्यः गतिः आगमनं यस्य सः सद्गतिः।

स.– *तत्सत्तादिप्रदः।

"यदधीना यस्य सत्ता तत्तदित्येव भण्यते" इत्युक्तेः।

*सतां नक्षत्राणां गतिः यस्मादिति सद्गतिः।

*सतां सज्जनानां गतिः गम्यं यस्मादिति वा।

श्री.–*सद्गतिः = स्वस्थानागामी।



## ७०५. सत्कृतिः

वि.– *सती कृतिः प्रयत्नादिर्यस्येति सत्कृतिः।

र.– ★सती संसिद्ध्यादिदानरूपा कृतिः क्रिया यस्य सः सत्कृतिः।

स.– ★सती कृतिः यत्नो वा तन्नाम्नी जाया वा यस्य प्रद्युम्नादि-रूपस्य सः सत्कृतिः।

श्री.– ★सत्कृतिः = सिद्ध्यादिदानरूपक्रियः।

★सत्कृतिः = देवोत्तमानन्दाश्रयः।



## ७०६. सत्ता

वि.– ★निर्दोषसकलगुणपूर्णः सन्, तस्य भावः सत्ता। भावभवित्रोरभेदात्।

तथा च पैङ्गिश्रुतिः– ''अथ कस्मादुच्यते सत्तेति नन्दति नन्दयति च'' इति।

'तन्त्रभागवते च–

''सर्वाशुभविनिर्मुक्तगुणमात्रो यतो हरिः।
सत्तामात्रमतः प्राहुर्निर्विशेषोऽखिलोत्तमः'' ॥ इति।

अत्रापि पूर्ववत् नामद्वयैकीकारेण शतसङ्ख्यापूर्तिः।

★सती भूतिः सद्भूतिः।

★सतां भूतिरिति वा।

'तं भूतिरिति देवा उपासाञ्चक्रिरे' ॥ इति श्रुतेः।

र.– ★यद्गृहे निषीदति उपविशति इति सत्ता।

★यद्वा सीदति इति सत्। सतो भावः रक्षकत्वादि तद्रूपः सत्ता।

स.– *सीदति इति सत्ता ।

*अथवा सत्ता आनन्दाश्रयः आनन्दकरश्च ।

''अथ कस्मादुच्यते सत्तेति नन्दयति'' इति भागवतप्रथमतात्पर्योदाहृतपैङ्गिश्रुतिः ।

श्री.– *सत्ता = गृहोपवेशनः ।



## ७०७. सद्भूतिः

वि.– *सती भूतिः सद्भूतिः ।

*सतां भूतिः इति वा ।

'तं भूतिरिति देवा उपासाञ्चक्रिरे ।' इति श्रुतेः ।

र.– *समीचीना भूतिः यस्य स सद्भूतिः ।

*यद्वा, देवाद्यगम्यत्वात् अगम्यत्वाद्यात्मकमहदैश्वर्यं भूतिः । सती भूतिरैश्वर्यं यस्य सः सद्भूतिः ।

स.– *सतां भूतिः यस्मादिति वा सद्भूतिः ।

*सती भूतिः यस्यासौ इति वा ।

श्री.– *सद्भूतिः = देवाद्यगम्यैश्वर्यवान् ।



## ७०८. सत्परायणः

वि.– *सतां परमुत्कृष्टमयनमिति वा ।

*सन्तः परायणं प्रतिमा यस्येति वा सतो गुणस्य परायणं वा ।

*सत्पराणां वैष्णवादीनामयनं वा सत्परायणः ।

र.– *सन्तः देवासः तेभ्यः परः उत्तमः आनन्दः तस्य अयनम् आश्रयः सत्परायणः ।

स.– *सतां योग्यानां परायणं मुख्याश्रयः सत्परायणः ।

सत्पराणां, ''सद्भाव प्राणः । प्राणं वाव महान् सह ओजो बलमित्याक्षते'' इति श्रुतेः, ''ततो वयं सत्प्रमुखाः यदर्थे'' इति भागवते प्रयोगाच्च, सत्पराणां वायुरतानां अयनं आश्रयः ।



## ७०९. शूरसेनः

वि.– *शूरा विक्रमशालिनी सेना हनुमत्प्रमुखाऽस्येति शूरसेनः ।

र.– *शुवन्ति ज्ञानयुद्धं प्रति गच्छन्ति इति शूराः भगवद्रूपविशेषाः, सिन्वन्ति बध्नन्ति शत्रून् इति सेनाः रूपविशेषाः, शूराः सेनाः यस्य सः शूरसेनः ।

स.– *इनेन स्वामिना सहिताः सेनाः, शूराः सेनाः येन सः शूरसेनः ।

शूराणां जरासन्धादीनां सेना यस्मादिति वा ।

श्री.– *शूरसेनः = ज्ञानयुद्धयाःगाःमिशत्रुवन्धकरूपः ।



### ७१०. यदुश्रेष्ठः

वि.– ★यदूनां श्रेष्ठः यदुश्रेष्ठः ।

★लोके यदवो येन श्रेष्ठा भवन्तीति वा ।

र.– ★यजन्ति पूजयन्ति इति यदः दशग्वादिपञ्चराजादयः तैः उ अत्यन्तं श्रेष्ठः प्रशस्यः रक्षकः इति यदुश्रेष्ठः ।

स.– ★यदस्ति ततः उच्चत्वाद्यदुशब्दाः रमादयः तेपां श्रेष्ठः ।

★यदूनां श्रेष्ठः इति वा ।

श्री.–★यदुश्रेष्ठः = पूजकराजरक्षकः ।



### ७११. सन्निवासः

वि.– ★सतां विदुपामाश्रयः सन्त आश्रयोऽधिष्ठानमस्येति वा सन्निवासः ।

र.– ★सन्तं वेदमार्गं नितरां वासयति प्रवर्तयति इति सन्निवासः ।

स.– ★सन्तः सज्जनाः, सद्गुणाः वा निवसन्ति अस्मिन् इति सन्निवासः ।

श्री.–★सन्निवासः = वेदमार्गप्रवर्तकः ।



### ७१२. सुयामुनः

वि.– ★शोभना यामुना यमुनासम्वन्धिनो गोपादिरूपा देवा यस्य स सुयामुनः ।

र.– *यच्छति सर्वाभीष्टम् इति यमुनः सोमः, यमुनस्य स्वीकर्ता यामुनः, सु सम्यक् यामुनः सुयामुनः ।

स.– *शोभनं यामुनं यमुनासम्बन्धिजलं कालियनिष्कासनेन यस्मादिति सुयामुनः ।

श्री.– *सुयामुनः = अभीष्टदस्तोमस्वीकर्ता ।



भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ७६ ॥

### ७१३. भूतावासः

वि.– *भूतान्यत्र आभिमुख्येन वसन्तीति भूतावासः ।

"वसन्ति त्वयि भूतानि भूतावासस्ततो हरिः" ॥ इति हरिवंशे ।

र.– *भूतानि रक्षणादिना आवासयति इति भूतावासः ।

स.– *भूतान्यवति इति भूतावः, आ सरतीति आसः, भूतावश्चासौ आसश्च ।

*भूतानि वसन्तीति वा ।

श्री.– *भूतावासः = सर्वभूतरक्षणकारी ।



### ७१४. वासुदेवः (अवासुदेवः)

वि.– *वसूनां देवानां देवो ब्रह्मा, तदपत्यं वासुदेवः । "कविर्यः पुत्रः" इत्यादिश्रुतेः ।

*"वसनात् सर्वभूतानां वसुत्वाद् देवयोनितः ।
वासुदेवस्ततो ज्ञेयः" ।

इत्याद्युद्योगपर्ववचनाद्वा वासुदेवः । मूर्तिभेदादर्थभेदात् प्रमाणभेदाच्च न पुनरुक्तिः ।

"मानमेयविशेषेण नाऽशङ्क्या पुनरुक्तता" ॥ इत्युक्तेः ।

र.– *स्वकान्त्या रोदसी द्यावापृथिव्यौ वासयति आच्छादयति इति वासुः । देवयति भक्तानाम् अभीष्टं गमयति इति देवः वासुश्चासौ देवश्च वासुदेवः ।

स.– *वसतीति वासुः वायुः, तस्य देवः वासुदेवः ।

*वार्थं ज्ञानार्थं जातः असुदेवः प्राणदेवः यस्मात् इति वा ।

*अवासुदेव इति पदच्छेदे, न विद्यते वासुदेवः सृगाल-वासुदेवः यस्मादिति वा ।

श्री.– *वासुदेवः = द्युभ्वाद्याच्छादककीर्तिः, भक्ताभीष्टप्रापकः ।



## ७१९. सर्वासुनिलयः

वि.– *सर्व एवासवः प्राणाः यस्मिन्निलीयन्त इति सर्वासुनिलयः ।

र.– *सर्वेषां ब्रह्मादीनाम् असवः प्राणाः निलीयन्ते भगव-दिन्द्रिये अन्तर्गताः भवन्तीति सर्वासुनिलयः ।

यद्वा सर्वे असवः प्राणमात्रपोषकाः सर्वासवः सर्वासुरजनाः ते नितरां लीयन्ते क्षीयन्ते अनेन इति सर्वासुनिलयः ।

स.– *सर्वासूनां सर्वप्राणिनां निलयः आश्रयः ।

श्री.– ★सर्वासुनिलयः = ब्रह्मादीन्द्रियलयस्थानम् ।



## ७१६. अनलः

वि.– ★अलं पर्याप्तिः शक्तिसम्पदां नास्येत्यनलः ।

र.– ★शत्रून् दग्धुं चेष्टते वर्धते अग्निवत् प्रवृद्धः भवति इति अनलः ।

★अननं प्राणनं सुखम् इति यावत् । प्राणनं लाति ददाति यस्य क्रिया सः अनलः ।

स.– ★अनलः भक्ताभीष्टदाने अलंबुद्धिः नास्ति इत्यनलः ।

श्री.– ★अनलः = शत्रुदाहप्रवृद्धः ।



## ७१७. दर्पहा

वि.– ★असतां दर्पं हन्तीति दर्पहा ।

र.– ★भक्तेषु दर्पम् अहं कर्ता इत्याद्यहङ्कारं हन्ति इति दर्पहा ।

स.– ★दर्पं असुराणां हन्तीति दर्पहा ।

श्री.– ★दर्पहा = भक्ताहङ्कारहन्ता ।



## ७१८. दर्पदः

वि.– ★दर्पदाताऽपि स्वयमेवेति दर्पदः ।

र.– ★दर्पं हर्षं ददाति यस्य पूजा सः दर्पदः ।

स.– ★दर्पं गर्वं अयोग्येभ्यः ददातीति वा दर्पदः ।

★दर्पशब्दात् "अर्श आद्यचि" दर्पिणो द्यति खण्डयतीति वा दर्पदः ।

श्री.–★दर्पदः = हर्पदः ।



## ७१९. दृप्तः

वि.– ★आत्मानन्दरसास्वादेन नित्यं प्रमुदितः दृप्तः ।

र.– ★दृप्यति हृष्यति इति दृप्तः ।

स.– ★दृप्तः मत्तप्रवृत्तिः ।

श्री.–★दृप्तः = हृष्टः ।



## ७२०. दुर्धरः

वि.– ★दुःखेन धारयितुं शक्यत इति दुर्धरः ।

र.– ★दुःखेन धार्यं दुर्धर्षं सामर्थ्यम् अस्य अस्ति इति दुर्धरः ।

स.– ★दुर्धरः धारयितुमशक्यः ।

श्री.–★दुर्धरः = दुर्धर्षसामर्थ्यवान् ।



## ७२१. अपराजितः (अद्धापराजितः)

वि.– ★न शत्रुभिः पराजित इत्यपराजितः ।

र.– ★केनापि अन्तर्वहिश्च न पराजितः इति अद्धाऽपराजितः ।

स.– ★अपराजितः– अपरैः विष्ण्वासक्तैः आजितः प्राप्तः पराजितो न भवतीति ।

श्री.– ★अद्धापराजितः = अन्तर्बहिश्च न पराजितः ।



विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ ७७ ॥

### ७२२. विश्वमूर्तिः

वि.– ★विश्वा परिपूर्णा मूर्तिरस्येति ।

★विश्वं मूर्तौ यस्येति वा विश्वमूर्तिः ।

★विश्वं मूर्तिः प्रतिमा विराड्रूपमस्येति वा विश्वमूर्तिः ।

र.– ★विश्वा समस्ता मूर्तिः समुच्छ्रयः यस्य सः विश्वमूर्तिः ।

स.– ★विश्वो वायुः मूर्तिः शरीरं यस्य सः विश्वमूर्तिः । ''उद्गीथाख्यस्य विष्णोः विशिष्टप्रतिमा वायुः'' इत्युक्तेः ।

★जगन्मूर्तिकः इति वा ।

★अनन्तरूपो वा ।

''स विश्वरूपः अनूनरूपः यतोऽयं सोऽनन्तो न हि नाशोऽस्ति तस्य'' इति शाण्डिल्यशाखायाम् ।

श्री.– ★विश्वमूर्तिः = समस्तसमुच्छ्रयः ।



### ७२३. महामूर्तिः

वि.– *महती गुणबृंहिता मूर्तिरस्येति महामूर्तिः ।

र.– *महत्यः मूर्तयः यस्य सः महामूर्तिः ।

स.– *महामूर्तिः– महती विराड्रूपा मूर्तिः यस्य सः ।

श्री.– *महामूर्तिः = बहुरूपः ।



### ७२४. दीप्तमूर्तिः

वि.– *ज्ञानमयी मूर्तिरस्येति दीप्तमूर्तिः ।

र.– *दीप्ताः स्तोत्रैः प्रकाशिताः मूर्तयः रूपाणि यस्य इति वा ।

*दीप्ताः प्रदीप्ताः अप्रतिहताः मूर्तयः प्रणीतयः यस्य इति वा दीप्तमूर्तिः ।

स.– *दीप्तमूर्तिः– दीप्ता मूर्तिः यस्य सः ।

श्री.– *दीप्तमूर्तिः = स्तोत्रप्रकाशितरूपः ।



### ७२५. अमूर्तिमान्

वि.– *प्राकृतमूर्तिराहित्यात् अमूर्तिमान् ।

''न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा ।
न योगित्वादीश्वरत्वात् सत्यरूपाच्युतो विभुः'' ॥ इति स्कान्दे ।

र.– *मूर्तिः मोहः मिथ्याज्ञानं, न विद्यते मूर्तिः मोहः यस्याः सा अमूर्तिः प्रशस्तिः तद्वान् अमूर्तिमान् ।

स.– ★अमूर्तिमान्– प्राकृतमूर्तिमान् न भवति इति तथा।

''आनन्दज्ञानशक्त्यादिदेहं विष्णुं तु ये जनाः।
अदेहं भूतदेहं वा विदुस्ते चाधरं तमः।
तथा प्राकृतदेहज्ञाः कर्मदेहविदोऽपि वा'' ॥ इत्युक्तेः।

श्री.–★अमूर्तिमान् = अमोहकरः।



## ७२६. अनेकमूर्तिः

वि.– ★अनेका मूर्तयोऽस्येत्यनेकमूर्तिः।

र.– ★अनेकैः स्तोमविशेषैः मूर्तयः यस्य सः अनेकमूर्तिः।

स.– ★अनेकावतारमूर्तिः अस्य इति अनेकमूर्तिः।

श्री.–★अनेकमूर्तिः = अनेकस्तोमस्तव्यरूपः।

## ७२७. अव्यक्तः

वि.– ★मूर्तिमत्त्वेऽपि न व्यज्यत इत्यव्यक्तः।

र.– ★न अक्तः व्यक्तः स न भवति इति अव्यक्तः सर्वेण अपि सम्बद्धः एव, न पृथक् कर्तुम् अर्हः।

स.– ★अव्यक्तः विशेषेणाव्यक्तः।

★दोषैः व्यक्तः न भवतीति अव्यक्तः।

★अनुग्रहं विना न व्यज्यते इति वा। ''तदव्यक्तमाह हि'' इति उक्तेः।

श्री.–★अव्यक्तः = सर्वसम्बद्धः।

### ७२८. शतमूर्तिः

वि.– *न केवलं द्वित्रादिमूर्तयोऽस्य किन्तु शतान्यपरिमिता मूर्तयोऽस्येति शतमूर्तिः ।

*सुखसन्ततमूर्तिरिति वा ।

र.– *नदीद्वाराणि प्रतिरुद्ध्य शेते इति वृत्रासुरः शतः, तस्य मूर्तिः मोहः मूर्च्छा हननं यस्मात् सः शतमूर्तिः ।

स.– *शतं मूर्तयः यस्य इति शतमूर्तिः ।

श्री.– *शतमूर्तिः = वृत्रहन्ता ।



### ७२९. शताननः

वि.– *अपरिमितमुखत्वात् शताननः ।

*शतान्यनानि नयतीति वा, अनन्तमुख्यप्राणप्रेरकः ।

र.– *शतानि अनन्तानि त्रिपदाक्रमणादिरूपाणि अनानि कर्माणि नयति करोति इति शताननः ।

स.– *शताननः– शतानामनन्तानां अननं चेष्टा यस्मात् सः ।

*शतानि आननानि यस्य इति वा शताननः ।

"अनेकवक्त्रनयनम्" इत्युक्तेः ।

श्री.– *शताननः = वहुकर्मकारी ।



एको नैकः सवः कः किं यत् तत् पदमनुत्तमम् ।
लोकवन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ७८ ॥

### ७३०. एकः

वि.– ★"यः सर्वाननुगृह्णाति सृजति विसृजति वासयति तस्मादुच्यते एकः" इति श्रुतेः एकः ।

★एक एव करोतीति वा ।

★स्वगतभेदशून्यो वा ।

र.– ★एतीति एकः । सर्वत्र चरति इति यावत् ।

स.– ★एकत्वात् एककर्तृत्वात् एकः ।

"त्वमेव कारयिता नान्योऽस्तीति" गीताभाष्योक्तेः ।

★एकः प्रधानः असमानः जगद्भिन्नः असहायः प्रथमः केवलः एकत्वसङ्ख्यावान् इति वा ।

तदुक्तं न्यायामृते– "किञ्च न तावदेकशब्देन मिथ्यात्वसिद्धिः । तस्य मानान्तरविरोध्यनेकार्थत्वात् । "एके मुख्यान्यकेवलाः" इति अमरोक्तेः ।

श्री.– ★एकः = सर्वत्र चरः ।



### ७३१. नैकः (अनेकः)

वि.– ★बहुरूपत्वात् न एकः ।

"एकरूपोऽपि भगवान् बहुरूप इवेयते ।
अचिन्त्यैश्वर्यरूपत्वात् पूर्णानन्दैकरूपकः" ॥ इति ब्रह्मतर्के ।

र.– ★एकः केवलः पूजकादिप्रपञ्चरहितः स न भवति, सर्वदा जीवसङ्घैर्युक्त एव । न कदाचित् अनीदृशं जगदित्युक्तेः स्वसमानसत्ताकप्रपञ्चेन सहित एव इति अनेकः ।

स.– ★अनेकरूपः ।

श्री.–★अनेकः = सदा पूजकादियुक्तः ।



## ७३२. सवः

वि.– ★यदर्थं सोमोऽभिपूयते स सवः । बलादिसहितो वा ।

र.– ★सूयते प्रसूयते भक्तगृहे स्तुतिः यस्य इति सवः ।

स.– ★सूयते अस्मा इति सवः ।

"वा गतिगन्धनयोः इति धातोः" वा ज्ञानं तेन सहितो वा ।

श्री.–★सवः = भक्तगृहे प्रसूतस्तुतिः ।



## ७३३. कः

वि.– ★सुखरूपत्वात् कः ।

"अकयप्रविसम्भूमसखहा विष्णुवाचकाः । "कं ब्रह्म" इति श्रुतेः ।

र.– ★स्तुतिभिः स्तूयते इति कः ।

स.– ★"कन दीप्तौ" इत्यतो ड प्रत्यये क इति रूपं, दीप्तः ।

श्री.–★कः = स्तुत्यः ।



## ७३४. किम्

वि.– *सुखवत्त्वे निमित्तत्वात् किम् ।

*सर्ववेदविचारविपयत्वाद्वा किम् ।

र.– *प्रश्नविपयत्वात् किम् ।

स.– *कायतेः डिमिः, किं पुराणादिरूपशव्दकर्ता ।

*किं सर्ववेदविचारविपयो वा ।

श्री.– *किं = प्रश्नविपयः ।



## ७३५. यत्

वि.– *यतते प्रवर्तते सृष्ट्यादाविति, एतीति वा यत् ।

"यतो वा इमानि" इत्यादिश्रुतेः ।

र.– *उक्थादिस्तोत्राणां महागुणानां च आत्मनि सङ्गतिं करोति इति यत् ।

स.– *एति जानाति इति यत् ।

"यच्च ज्ञानं स्वरूपतः" इति ऐतरेयभाष्योक्तेः ।

श्री.– *यत् = गुणात्मसङ्गतिकर्ता ।



## ७३६. तत्

वि.– *ततत्वात् तत् ।

र.– *सुम्नवृद्ध्यादीन् तनोति इति तत् ।

स.– *तत् परोक्षं वस्तु तच्छब्दवाच्यम् । हरिस्तु प्रत्यक्षाद्यवेद्यत्वेन मुख्यतो वेदैकगम्यत्वाद्वा गुणैः ततत्वाद्वा तदित्युच्यते ।

तदुक्तं–

''ओं तज्जगद्यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्च ।
सर्वैः शुभैश्चाभियुतो न चान्यैः ओं तत्सदित्येनमतो वदन्ति'' ॥

इति ।

श्री.–*तत् = सुखवृद्धिविस्तारकः ।



### ७३७. पदमनुत्तमम् (पदम्, अनुत्तमम्)

वि.– *पद्यते मुमुक्षुभिरिति पदम् । ''गीयते पदमित्येव मुनिभिः पद्यसे यतः'' इति नारदीये । यस्मादुत्तमं नास्ति तदनुत्तमम् । पदस्यैतद् विशेषणम् ।

''तद् विष्णोः परमं पदम् इति श्रुतेः'' ।

र.– *सततगमनशीलत्वात् पदम् ।

*न विद्यते उत्तमः यस्मात् तत् अनुत्तमम् ।

स.– *पद्यते गम्यते इति पदम् ।

*न विद्यते उत्तमं यस्मात्तत् अनुत्तमम् ।

श्री.–*पदं = सन्ततगमनशीलवान् ।

*अनुत्तमं = सर्वोत्तमः ।



## ७३८. लोकबन्धुः

वि.– ★लोकबन्धनहेतुत्वात्, लोकजनकत्वाद् वा, लोकहिताहितोपदेष्टृत्वाद् वा लोकवन्धुः ।

र.– ★लोकान् साधुजनान् स्वात्मनि स्नेहेन वध्नाति इति लोकवन्धुः ।

स.– ★लोकानां बन्धुः लोकवन्धुः ।

श्री.– ★लोकबन्धुः = साधुजनस्नेहवन्धकः ।



## ७३९. लोकनाथः

वि.– ★लोकैर्नाथ्यते याच्यत इति लोकनाथः ।

★लोकान् नाथते उपतपत्याशास्ते इति वा ।

★लोकानामीष्ट इति वा लोकनाथः ।

★लोकानां स्वामी वा ।

र.– ★लोकानां नाथः ईश्वरः लोकनाथः ।

स.– ★लोकानां नाथः लोकनाथः ।

★"लुक् (लोकृ) प्रकाशने" इति धातोः लोको ज्ञानरूपः, नाथ्यते इति नाथो वा ।

श्री.– ★लोकनाथः = लोकेश्वरः ।



### ७४०. माधवः

वि.– *मधुकुलसम्बन्धी वा, मधुवनसम्बन्धी वा, मधुदैत्य-सम्बन्धी, हन्ता वा माधवः ।

र.– *मां स्तुतिं धुनोति गच्छति इति माधवः ।

स.– *मधोरयं माधवः ।

*“मधु द्यौरस्तु नः पिता” इति श्रुतेः ।

“मध्वित्यानन्द उद्दिष्टः” इति स्मृतेश्च ।

*मधु सुखं मधुनोऽयं दाता माधवः ।

श्री.– *माधवः = स्तुतिप्रापः ।



### ७४१. भक्तवत्सलः

वि.– *भक्तेषु स्नेहवान् भक्तवत्सलः ।

*भक्तरूपवत्सान् लातीति वा ।

र.– *वसति इति वत्सलः । भक्तं धनादिकं प्रति वत्सलाः अश्वाः यस्य इति भक्तवत्सलः ।

स.– *भक्तमन्नं येषामस्तीति भक्तवन्तो यज्ञकर्तारः ब्राह्मणाः तान् प्रति लसति गच्छतीति भक्तवत्सलः ।

*भक्तेषु वात्सल्यवान् वा ।

*भक्ताः एव वत्साः तान् लातीति वा ।

श्री.– *भक्तवत्सलः = भक्तधनादिवत्सलाश्ववान् ।



सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥ ७९ ॥

## ७४२. सुवर्णवर्णः

वि.– *सुवर्णमिव वर्णोऽस्येति सुवर्णवर्णः ।

"यदा पश्यः पश्यते रुग्मवर्णम्" इति श्रुतेः ।

र.– *सुवर्णं द्रविणं, वृणोति भक्तेभ्यो दातुम् इति वर्णः, सुवर्णं वृणोति इति सुवर्णवर्णः ।

स.– *सुवर्णमिव वर्णो यस्य सः सुवर्णवर्णः ।

"यदा पश्यः पश्यते रुक्मवर्णम्" इति श्रुतेः ।

श्री.– *सुवर्णवर्णः = भक्तदानाय सुवर्णेच्छुः ।



## ७४३. हेमाङ्गः

वि.– *हेमेवाङ्गं वपुरस्येति हेमाङ्गः ।

"हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः" ॥
इति श्रुतेः ।

र.– *हेमभिः गमनशीलैः अश्वैः गच्छति इति हेमाङ्गः ।

स.– *"हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः" इति श्रुतेः ।

"हिरण्यपाणिः भूतयः" इत्युक्तेश्च हेमाङ्गः सुवर्णमस्याङ्गः ।

श्री.– *हेमाङ्गः = गमनशीलाश्वगन्ता ।



## ७४४. वराङ्गः (अवराङ्गः)

वि.–★वराणि शोभनान्यङ्गान्यस्येति वराङ्गः ।

र.– ★वरणीयां सन्ततिम् अङ्गयति गमयति तनोति इति वराङ्गः ।

स.– ★वराणि उत्तमानि अङ्गानि यस्य सः वराङ्गः ।

★अवराङ्ग इति छेदे, अवतीति अवः, रङ्गस्य श्रीरङ्गक्षेत्रस्य अयं राङ्गः, अवश्चासौ राङ्गश्च अवराङ्गः ।

श्री.–★वराङ्गः = वरणीयसन्ततिविस्तारकः ।



## ७४५. चन्दनाङ्गदी

वि.– ★चन्दनैः ह्लादनैः केयूरैर्भूषितश्चन्दनाङ्गदी ।

र.– ★चन्दनं देवतायाः आह्लादकम् अङ्गं सल्लोकप्रापकं हविः स्तवनं वा, तत् ददाति इति चन्दनाङ्गदः यज्वा । सः अस्य पूजकत्वेन अस्ति इति चन्दनाङ्गदी ।

स.– ★चन्दनं तदुपलक्षितपूजासाधनद्रव्यं अस्यास्तीति चन्दनः, स चासौ अङ्गदो वा वालिपुत्रश्च चन्दनाङ्गदः, भक्तत्वेन स अस्य अस्तीति चन्दनाङ्गदी ।

★चन्दनं अङ्गदः वाहुभूषणं च अस्य अस्तीति चन्दनाङ्गदी इति वा ।

श्री.–★चन्दनाङ्गदी = देवताल्हादकहविर्दपूज्यः ।



## ७४६. वीरहा

वि.– ★वीरान् राक्षसादीन् हन्तीति वीरहा ।

★विगत ईरो मुख्यप्राणो येषां मते वा ते वीरास्तान् हन्ति नरके पातयतीति वा वीरहा ।

र.– ★नदीप्रतिरोद्धॄन् वीरान् हन्ति इति वीरहा ।

स.– ★वीरान् हन्ति इति वीरहा ।

★यद्वा विगतः ईरः मुख्यप्राणः येषान्ते वीराः तान् हन्तीति वीरहा ।

श्री.– ★वीरहा = उत्तमज्ञानसाधनयज्ञप्रापकः ।



## ७४७. विषमः (अविषमः)

वि.– ★"न विष्णोर्विषमत्वं तु योग्यतापेक्षया क्वचित् ।
योग्यतायास्तन्नियत्या विषमत्वं भवेन्न च" ॥
इति स्कान्दवचनाद् विषमः ।

★विगतः समो यस्येति वा विषमः ।

"न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुतेः ।

र.– ★न विद्यते नित्यवृद्धत्वादिना समः सदृशः यस्य सः विषमः ।

★अथवा समः साधुः । विशेषेण साधुः अपेक्षादिदोषरहितः सदा वृद्ध एव विषमः ।

स.– *विपमो विषं रुद्रपीतं मीनाति हन्ति स्वनामस्मरणेनेति विषमः ।

*समरहितो वा ।

*अविपमः इति च्छेदे – विपमो न भवतीत्यर्थः ।

तदुक्तम्– ''वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति'' इति ।

श्री.–*विपमः = विशेषेण साधुः ।



## ७४८. शून्यः

वि.– *आकाशवल्लेपशून्यत्वात् शून्यः ।

*''शमूनं कुरुते यस्माच्छून्यस्तस्माज्जनार्दनः'' इति वा ॥

र.– *पापलेपादिना निर्गतत्वात् शून्यः ।

*यद्वा नयति व्याप्नोति इति न्यः । शूम् अनादिनित्यं पुरातनवैकुण्ठादिलोकम् अधितिष्ठति इति शून्यः ।

स.– *प्रलयकाले सर्वपदार्थशून्यत्वात् शून्यः ।

*दुर्जनानां शस्य सुखस्य ऊनं ऊनत्वं यापयतीति शून्य इति वा ।

''शमूनं कुरुते विष्णुः'' इति स्मृतेः ।

श्री.–*शून्यः = वैकुण्ठादिस्थाता ।



## ७४९. घृताशीः

वि.– *यज्ञेपु हविरात्मकं घृतमाशास्ते अश्नाति इति वा घृताशीः ।

*घृता गलिता आशिषः प्रार्थना अस्येति वा घृताशीः ।

र.– *घृतं क्षरणसमर्थं द्रवद्रव्यं सोमादि, तदाशास्ते इति घृताशीः ।

*घृता निर्गलिता आशिषः प्रार्थना यस्मात् इति वा घृताशीः ।

स.– *घृते हविरात्मके घृते आशीः कामः यस्य सः घृताशीः ।

श्री.–*घृताशीः = रक्षणसमर्थसोमाद्याशासानः ।



## ७५०. अचलः

वि.– *स्वरूपसामर्थ्यादिश्चलनमस्य नास्तीत्यचलः ।

र.– *चलति नश्यति इति चलः । सः न भवति इति अचलः ।

स.– *न चलति इति अचलः ।

श्री.–अचलः = अनाशः ।



## ७५१. चलः

वि.– *सर्वत्र चलति व्याप्नोतीति चलः ।

र.– *दस्यून् चालयति भेदयति इति चलः ।

स.– *चलति इति चलः ।

श्री.–*चलः = दस्युभेत्ता ।



अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥ ८० ॥

## ७५२. अमानी

वि.– *शरीराद्यभिमानहीनत्वादमानी ।

र.– *मानं मितिः, न मानम् अमानम् अपरिमितिः वृद्धिः इति यावत्, तत् अस्य अस्ति इति अमानी ।

स.– *अमानी विषयेषु अभिमानरहितः ।

श्री.–*अमानी = वृद्धिमान् ।



## ७५३. मानदः

वि.– *मानमहङ्कारं सत्कारं वा यथासम्भवं ददाति द्यति इति वा मानदः ।

र.– *मानं ज्ञानं तत् ददाति इति मानदः ।

स.– *मायै रमायै अनं वायुं ददाति पुत्रत्वेनेति मानदः ।

*मर्यादा प्रवर्तको वा ।

''यदि ह्यहं न वर्तेयं'' इत्यादि गीतासु ।

''मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यते'' इति च ।

श्री.–*मानदः = ज्ञानदः ।



### ७५४. मान्यः

वि.– *सर्वेश्वरत्वेन सर्वैः पूज्यत्वान्मान्यः ।

र.– *वाय्वादिसर्वपूजाभिः मान्यते पूज्यते इति मान्यः ।

स.– *अनितुं चेष्टयितुं योग्यः अन्यः सः न भवतीति मान्यः ।
*मायाः रमायाः अन्या चेष्टनीया यस्येति वा ।
*मायाः रमोपलक्षितजीवराशेः अन्यः भिन्नः इति वा ।

श्री.– *मान्यः = वाय्वादिपूज्यः ।



### ७५५. लोकस्वामी

वि.– *सर्वेषां लोकानामीश्वरत्वात् लोकस्वामी ।

र.– *लोकयति इति लोकः । स्वधनकान्त्यादिरूपं स्वम्, अमति गच्छति प्राप्नोति इति स्वामः यज्ञभूषणः स्तुतिविशेषः, सः अस्य अस्ति इति स्वामी, लोकश्चासौ स्वामी च इति लोकस्वामी ।

स.– *लोकानां वैकुण्ठादीनां जनानां स्वामी ।

श्री.– *लोकस्वामी = द्रष्टा, कान्त्यादिधनापः ।



### ७५६. त्रिलोकधृक्

वि.– *त्रीन् लोकान् धारयतीति त्रिलोकधृक् ।

र.– *त्रिभिः वेदैः लोक्यते ज्ञायते इति त्रिलोकः यज्ञः, धरति इति धृत् त्रिलोकस्य धृत् त्रिलोकधृत् (यज्ञनिर्माता) ।

अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥ ८० ॥

## ७५२. अमानी

वि.– ★शरीराद्यभिमानहीनत्वादमानी ।

र.– ★मानं मितिः, न मानम् अमानम् अपरिमितिः वृद्धिः इति यावत्, तत् अस्य अस्ति इति अमानी ।

स.– ★अमानी विषयेषु अभिमानरहितः ।

श्री.–★अमानी = वृद्धिमान् ।



## ७५३. मानदः

वि.– ★मानमहङ्कारं सत्कारं वा यथासम्भवं ददाति द्यति इति वा मानदः ।

र.– ★मानं ज्ञानं तत् ददाति इति मानदः ।

स.– ★मायै रमायै अनं वायुं ददाति पुत्रत्वेनेति मानदः ।

★मर्यादा प्रवर्तको वा ।

"यदि ह्यहं न वर्तेयं" इत्यादि गीतासु ।

"मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यते" इति च ।

श्री.–★मानदः = ज्ञानदः ।



### ७५४. मान्यः

वि.– ★सर्वेश्वरत्वेन सर्वैः पूज्यत्वान्मान्यः ।

र.– ★वाय्वादिसर्वपूजाभिः मान्यते पूज्यते इति मान्यः ।

स.– ★अनितुं चेष्टयितुं योग्यः अन्यः सः न भवतीति मान्यः ।
★मायाः रमायाः अन्या चेष्टनीया यस्येति वा ।
★मायाः रमोपलक्षितजीवराशेः अन्यः भिन्नः इति वा ।

श्री.– ★मान्यः = वाय्वादिपूज्यः ।



### ७५५. लोकस्वामी

वि.– ★सर्वेषां लोकानामीश्वरत्वात् लोकस्वामी ।

र.– ★लोकयति इति लोकः । स्वधनकान्त्यादिरूपं स्वम्, अमति गच्छति प्राप्नोति इति स्वामः यज्ञभूषणः स्तुतिविशेषः, सः अस्य अस्ति इति स्वामी, लोकश्चासौ स्वामी च इति लोकस्वामी ।

स.– ★लोकानां वैकुण्ठादीनां जनानां स्वामी ।

श्री.– ★लोकस्वामी = द्रष्टा, कान्त्यादिधनापः ।



### ७५६. त्रिलोकधृक्

वि.– ★त्रीन् लोकान् धारयतीति त्रिलोकधृक् ।

र.– ★त्रिभिः वेदैः लोक्यते ज्ञायते इति त्रिलोकः यज्ञः, धरति इति धृत् त्रिलोकस्य धृत् त्रिलोकधृत् (यज्ञनिर्माता) ।

स.– *त्रिलोकान् द्युपृथिव्यन्तरिक्षान् धरतीति त्रिलोकधृक् ।

त्रिलोकेति निर्देशस्तु पञ्चमस्कन्धेभ्यः इतिवत् विशेषणं विशेष्येण इत्यनेन विशेषणसमासोऽयम् । न तु तद्धितार्थेत्यादिना समाहार-द्विगुरिति विष्णुतत्वनिर्णयटीकोक्तरीत्या द्रष्टव्यः । प्रकारान्तरन्तु अधस्तादुपपादितम् ।

श्री.– *त्रिलोकधृक् = त्रिवेदवेद्ययज्ञनिर्माता ।



## ७५७. सुमेधाः

वि.– *शोभना स्वाभाविकी मेधा धारणावती बुद्धिरस्येति सुमेधाः ।

र.– *सु समीचीनः मेधाः संराधिः यस्य सः सुमेधाः । (यदीयरथहयग्रावसोमयज्ञाद्याः श्रेष्ठाः सन्ति इति पर्यवस्यति)

स.– *शोभना मेधा यस्य सः सुमेधाः ।

श्री.– *सुमेधाः = सम्यक्संसिद्धः ।



## ७५८. मेधजः

वि.– *मेधे यज्ञे जायतेऽभिव्यज्यत इति मेधजः ।

र.– *हिंस्यते पशुः अनेन इति मेधो यज्ञः, तस्मिन् जायते अभिव्यज्यते इति मेधजः ।

स.– *मेधे यज्ञे जायते इति मेधजः ।

श्री.– *मेधजः = यज्ञाभिव्यक्तः ।



## ७५९. धन्यः

वि.– ★"अनपेक्षो गुणैः पूर्णो धन्य इत्युच्यते बुधैः" इति वचनाद् धन्यः ।

र.– ★धनं दीप्तिमन्तं सोमं याति इति धन्यः ।

स.– ★धन्याः सुकृतिनः अस्य सन्तीति धन्यः ।

★धनं यापयतीति वा, निर्वचनत्वात् अकारलोपः ।

श्री.– ★धन्यः = दीप्तिमत्सोमगः ।



## ७६०. सत्यमेधाः

वि.– ★सत्या बाधशून्या मेधा अस्येति सत्यमेधाः ।

र.– ★सत्यो मेधो राजनं यशआदिः यस्य सः सत्यमेधाः ।

स.– ★सत्ये जगद्विषये मेधा ज्ञानं यस्येति वा ।

★सत्या मेधा यस्येति वा ।

श्री.– ★सत्यमेधाः = सत्ययशाः ।



## ७६१. धराधरः

वि.– ★धराभिधं श्रियं धारयतीति धराधरः । धराऽप्यधरा यस्मादिति वा ।

र.– ★धरां श्रियं धरति इति धराधरः ।

★धरः पर्वतः तस्य श्रियम् आ सम्यक् धरति इति वा धराधरः ।

स.– ★धरतीति धरः, धरायाः धरः धराधरः ।

★धराः मेरुमन्दरादयः पर्वताः आधाराः सम्यग्धारकाः यस्मात् इति वा ।

श्री.– ★धराधरः = श्रीधरः ।



तेजोवृषो द्युतिधरः सर्वशस्त्रभृतांवरः ।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥ ८१ ॥

### ७६२. तेजोवृषः

वि.– ★आदित्यस्थः स्वतेजसा जलं वर्षतीति तेजोवृषः ।

र.– ★तेजांसि वर्षति इति तेजोवृषः ।

स.– ★तेजसां तेजोरूपाणां सूर्यादीनां वृषः उरुक्रमरूपेण श्रेष्ठः ।

★यद्वा तेजसा आदित्यवर्तितेजसा वर्षणात् जलवर्षणात् तेजोवृषः ।

''आदित्याज्जायते वृष्टिः'' इति श्रुतेः ।

श्री.– ★तेजोवृषः = तेजोवर्षकः ।



### ७६३. द्युतिधरः

वि.– ★द्युतिं कान्तिं धारयतीति द्युतिधरः ।

★द्युतेः कान्तेः धरः द्युतिधरः ।

र.– ★द्युति बलादि, तत् धरति इति द्युतिधरः ।

स.– *द्युतीनां कान्तीनां धरः धारकः ।

श्री.–*द्युतिधरः = वलादिधर्ता ।



### ७६४. सर्वशस्त्रभृतांवरः (वरः)

वि.– *समस्तशस्त्रधारिणां श्रेष्ठः सर्वशस्त्रभृतांवरः ।

र.– *शस्यन्ते हिंस्यन्ते प्राणिनः एभिः इति शस्त्राणि जलतरु-पाषाणादीनि तानि बिभ्रति इति शस्त्रभृतः नदीपर्वताद्याः, सर्वे च ते शस्त्रभृतश्च सर्वशस्त्रभृतः, सर्वशस्त्रभृतां नदी-पर्वतादीनां वरः वरणीयः सर्वशस्त्रभृतांवरः । आक्रोशे षष्ठ्याः अलुक् ।

स.– *सर्वशस्त्रभृतां वरः श्रेष्ठः । "रामः शस्त्रभृतां वरः" इत्युक्तेः ।

*सर्वशस्त्रायत इति सर्वशस्त्रः, भृतं अम्वरं येन सः भृताम्वरः,

"अक्षरं अम्बरान्तधृतेः," "एतस्मिन् खलु अक्षरे गार्गि आकाशः ओतः प्रेतश्च" इति च उक्तेः, सर्वशस्त्रश्चासौ भृताम्बरश्चेति ।

श्री.–*सर्वशस्त्रभृतांवरः = सर्वेषां जलादिधृङ्नद्यादीनां वरणीयः ।



### ७६५. प्रग्रहः

वि.– *सर्वं प्रगृह्णातीति प्रग्रहः ।

र.– *प्रकृष्टत्वेन महत्त्वेन गृह्यते इति प्रग्रहः ।

स.– *प्रकृष्टाः ग्रहाः नवग्रहाः येनेति प्रग्रहः ।

*प्रकृष्टाः ग्रहा सोमपात्रविशेषाः यस्मादिति वा ।

''ग्रहान् सोमस्य मिमते द्वादश'' इति श्रुतेः ।

*प्रकृष्टान् गृह्णातीति वा ।

श्री.– *प्रग्रहः = महत्त्वेन गृह्यः ।



## ७६६. निग्रहः

वि.– *निगृह्णाति स्ववशे स्थापयतीति निग्रहः ।

र.– *महतः शत्रून् निगृह्णाति इति निग्रहः ।

स.– *निगृह्णाति दैत्यान् इति निग्रहः ।

श्री.– *निग्रहः = शत्रुदमनः ।



## ७६७. व्यग्रः (अव्यग्रः)

वि.– *विगतमग्रं विनाशोऽस्येति व्यग्रः ।

*भक्ताभीष्टप्रदाने विलम्बाकरणाद्वा व्यग्रः । अविचार्यकारित्वाभावादव्यग्र इति वा ।

र.– *स्तोतॄणां सुखदाने आसक्तः व्यग्रः ।

स.– *व्यग्रः न भवतीति अव्यग्रः ।

*व्यग्रः इति च्छेदे, विः गरुडः अग्रे यस्य सः तथा ।

श्री.– *व्यग्रः = स्तोतृसुखदानासक्तः ।

## ७६८. नैकशृङ्गः

**वि.– ★चतुःशृङ्गत्वात् नैकशृङ्गः ।**

"चत्वारि शृङ्गा त्रयो अस्य पादाः" इत्यादिश्रुतेः ।

**र.– ★शृणाति हिनस्ति इति शृङ्गः, एकः न भवति इति नैकः अनेकः, नैकश्चासौ शृङ्गश्च नैकशृङ्गः । नसमासोऽयम् ।**

**स.– ★नैकभृङ्गः नैकानि अनेकानि भृङ्गाणि यस्य वृषरूपे सः तथा ।**

"चत्वारि भृङ्गा" इति श्रुतेः । "वेदः प्रवण एवाग्रे धर्मोऽहं वृषरूपधृक्" इति एकादशे भगवद्वचनम् ।

**★ना एकभृङ्गः इति वा च्छेदः । परमपुरुषत्वात् ना, एकं भृङ्गं यस्य सः तथा ।**

तदुक्तं मोक्षधर्मे–

"एकभृङ्गः पुरा भूत्वा वराहो नन्दिवर्धनः ।
इमां चोद्धृतवान् भूमिं एकभृङ्गः ततो ह्ययम्" ।। इति ।

**श्री.– ★नैकशृङ्गः = वहुशत्रुहिंसकः ।**



## ७६९. गदाग्रजः (अगदाग्रजः)

**वि.– ★गदस्य अग्रजः गदाग्रजः ।**

**★अगदः पर्वतच्छेत्ता देवेन्द्रोऽग्रजोऽस्येति अगदाग्रज इति वा ।**

***हितसाधनं गदन्तीती गदा वेदाः । तेभ्योऽग्रेऽभिव्यक्त-त्वाद्वा गदाग्रजः ।**

''छन्दोभ्योऽध्यमृतात् सम्बभूव'' इति श्रुतेः ।

र.– ***गदं स्वर्गं गच्छति इति गदाग्रः, तत्र देवानां सखा जायते इति जः, गदाग्रश्चासौ जश्च गदाग्रजः ।**

स.– ***गदः अग्रजः यस्य, कृष्णावतारे ।**

***यद्वा अगदाः नीरोगिणः अग्रजाः ब्राह्मणाः यस्मात् इति अगदाग्रजः ।**

श्री.– ***गदाग्रजः = स्वर्गगः, देवसखाभवन् च ।**



**चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।**
**चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ८२ ॥**

## ७७०. चतुर्मूर्तिः

वि.– ***चतस्रः मूर्तयः सृष्टिस्थितिसंहारनिमित्तभूताः तिरोहित-विभूतयो यस्य स चतुर्मूर्तिः ।**

तथाच श्रीविष्णुपुराणे–

''ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः ।
विभूतयो हरेरेता जगतः सृष्टिहेतवः ॥
विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज ।
स्थितौ निमित्तभूतस्य विष्णोरेता विभूतयः ॥
रुद्रः कालोऽन्तकाद्याश्च समस्ताश्चैव जन्तवः ।
चतुर्धा प्रळयायैता जनार्दनविभूतयः'' इति ॥

र.– ★चतुरः (ज्ञानस्य) मूर्तिः समुच्छ्रयः यस्य सः चतुर्मूर्तिः ।

स.– ★चतस्रः विश्वतैजसप्राज्ञतुरीयाख्याः मूर्तयः यस्य सः चतुर्मूर्तिः ।

श्री.– ★चतुर्मूर्तिः = गिरिवदुच्चः ।



## ७७१. चतुर्बाहुः

वि.– ★चत्वारो बाहवोऽस्येति चतुर्बाहुः ।

र.– ★चत्वारि पुराणि वाधते विदारयति इति चतुर्बाहुः ।

स.– ★चत्वारः बाहवः यस्य तथा ।

★चत्वारः वाहवः मुक्तानां यस्मादिति वा ।

"सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणाः" इति भागवतोक्तेः ।

श्री.– ★चतुर्बाहुः = त्रिपुरादिविदारकः ।



## ७७२. चतुर्व्यूहः

वि.– ★"शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुषः" इति वह्वृचोपनिषदुक्ताश्चत्वारः पुरुषा व्यूहा अस्येति चतुर्व्यूहः ।

र.– ★चतुर्भिः चरुपुरोडाशसोमजलाख्यैः द्रव्यैः विशेषेण ऊह्यते संसृज्यते इति चतुर्व्यूहः ।

स.– ★केशवादिचतुर्विंशतिरूपेषु केशवादिषट्कं, त्रिविक्रमादिषट्कं, सङ्कर्षणादिषट्कं, नारसिंहादिषट्कं, इति एवं चत्वारः व्यूहाः यस्य सः तथा ।

*चतुर्वाहुश्चतुर्व्यूहः इत्येकं नाम इति सम्प्रदायविदः ।

चत्वारि आयुधानि चक्रशाङ्खगदापद्मानि, क्रमव्युत्क्रमपद्मादिगदादि व्युत्क्रमः तथा । ''अर्धक्रमः सान्तरश्च षट्सु षट्सु अरिपूर्विणाम्'' इति तन्त्रसारोक्तरीत्या चतुर्षु बाहुषु यस्य सः तथा ।

श्री.– *चतुर्व्यूहः = चरुपुरोडाशसोमजलसंसृष्टः ।



## ७७३. चतुर्गतिः

वि.– *चतुर्णां वर्णानामाश्रमाणां च यथोक्तकारिणां गतिः चतुर्गतिः ।

*चतुर्विधमुक्तिदो वा ।

र.– *चतुर्णां सञ्चारशीलानाम् अश्वानां गतिः गमनं सम्बन्धः यस्य रथयुगे सः चतुर्गतिः ।

स.– *''चतुर्विधा भजन्ते मां'' इति गीतोक्तेः, चतुर्भिः आर्त–जिज्ञासु–अर्थार्थि –ज्ञानिभिः गम्यत इति चतुर्गतिः ।

श्री.– *चतुर्गतिः = सञ्चारशीलाश्वनेयरथशाली ।



## ७७४. चतुरात्मा

वि.– *''आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ'' । इत्येवं-विधाश्चत्वारः आत्मानो यदीयाः स चतुरात्मा ।

*चत्वारो मनोबुद्ध्यहङ्कारचित्तरूपा आत्मानो यतश्चेष्टन्ते च चतुरात्मेति वा ।

र.– *चत्वारि याचनीयानि ओज आदीनि आतनोति ददाति च इति चतुरात्मा ।

स.– *चतुर्पु धर्मार्थकाममोक्षेपु जनानां योग्यतानुसारेण आत्मा मनः यस्मात् सः चतुरात्मा ।

श्री.– *चतुरात्मा = याचनीयपुत्रादिदाता ।



## ७७५. चतुर्भावः

वि.– *चत्वारो भावा मनोबुद्ध्यादिवृत्तयो यस्मादिति चतुर्भावः ।

*"चतुरः धर्मादिपुमर्थान् भावयति उत्पादयतीति वा चतुर्भावः ।

र.– *चतुर्णां याचकानां भावः पिता माता च इति चतुर्भावः । (याचनार्थस्य चतेः रूपमेतत्)

स.– *चतुरो वर्णान् ब्राह्मणादीन् भावयति उत्पादयतीति चतुर्भावः ।

तदुक्तं बृहद्भाष्ये– "विष्णोः ब्राह्मणजातिः सन् ब्रह्मा जज्ञे चतुर्मुखः" इत्यादि ।

श्री.– *चतुर्भावः = याचकपित्रादिः ।



## ७७६. चतुर्वेदविदेकपात् (चतुर्वेदवित्, एकपात्)

वि.– *चतुर्णां वेदानामर्थं यथावद् वेत्तीति चतुर्वेदवित् ॥

**★सर्वभूतात्मकः एकः पादोंऽशभूतोऽस्येति एकपात् ।**
"पादोऽस्य विश्वा भूतानि" इति श्रुतेः ।

"सुवर्णं कोशं रजसा परीवृतं देवानां वसुधानीं विराजम् ।
अमृतस्य पूर्णां तामु कलां विचक्षते पादं षड्होतुर्न किला
विवित्से" ॥ इति च ।

**★एकपं मुख्यपालकं ब्रह्माणमत्तीत्येकपात् ।**

"तत्र संवत्सरं नाम ब्रह्माणमसृजत् प्रभुः ।
तमत्तुं व्याददादास्यं तदाऽसौ विरुराव ह" इत्यादि ब्रह्मवैवर्ते ॥

र.– **★चतुर्भिः वेदैः वेद्यते इति चतुर्वेदवित्, एकः प्रधानः पात् पादः स्वरूपं यस्य सः चतुर्वेदविदेकपात् ।**

स.– **★चतुरो वेदान् वेत्ति इति चतुर्वेदवित् ।**

**★एकपः, मुख्यपालकः सन् अततीति तथा । "अत सातत्यगमने" इति धातोः । "पादोऽस्य विश्वा भूतानि" इति श्रुतेः, सर्वभूतानि एकः पादः यस्य इत्यपि वदन्ति ।**

श्री.– **★चतुर्वेदविदेकपात् = चतुर्वेदवेद्यमुख्यस्वरूपः ।**



**समावर्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ ८३ ॥**

### ७७७. समावर्तः

वि.– **★संसारचक्रं सम्यगावर्तयतीति समावर्तः ।**

र.– ★स्वकीयं यशः सं सम्यक् समन्तात् आवर्तयति व्याप्तं करोति इति वा ।

★समन्तात् भक्तानां मघानि द्रविणानि वर्तयति इति वा समावर्तः ।

स.– ★समतया आ समन्तात् वर्तते इति समावर्तः ।

श्री.– ★समावर्तः = सम्यग्यशोव्यापकः ।



## ७७८. निवृत्तात्मा (अनिवृत्तात्मा)

वि.– ★विषयेभ्यः निवृत्त आत्मा अस्येति निवृत्तात्मा ।

★सर्वगतत्वादनिवृत्त आत्माऽस्येत्यनिवृत्तात्मा वा ।

र.– ★निवृत्ते निकृष्टवृत्तिमत्यपि यशआदि आ समन्तात् ददाति इति निवृत्तात्मा ।

★अथवा वृत्तं वृत्तिमत् धनादिकम् । नितरां धनादिकं ददाति इति वा निवृत्तात्मा ।

स.– ★अनिवृत्तः आत्मा देहः यस्य सः अनिवृत्तात्मा ।

★निवृत्तात्मा इति च्छेदे – नितरां वृत्तः सकलविषयेषु प्रवृत्तः अयोग्यकृतयज्ञादिभ्यो निवृत्तो वा आत्मा मनः यस्येत्यर्थः ।

श्री.– ★निवृत्तात्मा = वृत्तिमद्धनदाता ।



**★सर्वभूतात्मकः एकः पादोंऽशभूतोऽस्येति एकपात् ।**
"पादोऽस्य विश्वा भूतानि" इति श्रुतेः ।

"सुवर्णं कोशं रजसा परीवृतं देवानां वसुधानीं विराजम् ।
अमृतस्य पूर्णां तामु कलां विचक्षते पादं षड्होतुर्न किला
विवित्से" ॥ इति च ।

**★एकपं मुख्यपालकं ब्रह्माणमत्तीत्येकपात् ।**

"तत्र संवत्सरं नाम ब्रह्माणमसृजत् प्रभुः ।
तमत्तुं व्याददादास्यं तदाऽसौ विरुराव ह" इत्यादि ब्रह्मवैवर्ते ॥

र.– **★चतुर्भिः वेदैः वेद्यते इति चतुर्वेदवित्, एकः प्रधानः पात् पादः स्वरूपं यस्य सः चतुर्वेदविदेकपात् ।**

स.– **★चतुरो वेदान् वेत्ति इति चतुर्वेदवित् ।**

**★एकपः, मुख्यपालकः सन् अततीति तथा । "अत सातत्यगमने" इति धातोः । "पादोऽस्य विश्वा भूतानि" इति श्रुतेः, सर्वभूतानि एकः पादः यस्य इत्यपि वदन्ति ।**

श्री.–**★चतुर्वेदविदेकपात् = चतुर्वेदवेद्यमुख्यस्वरूपः ।**



**समावर्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ ८३ ॥**

## ७७७. समावर्तः

वि.– **★संसारचक्रं सम्यगावर्तयतीति समावर्तः ।**

र.– *स्वकीयं यशः सं सम्यक् समन्तात् आवर्तयति व्याप्तं करोति इति वा ।

*समन्तात् भक्तानां मघानि द्रविणानि वर्तयति इति वा समावर्तः ।

स.– *समतया आ समन्तात् वर्तते इति समावर्तः ।

श्री.– *समावर्तः = सम्यग्यशोव्यापकः ।



## ७७८. निवृत्तात्मा (अनिवृत्तात्मा)

वि.– *विषयेभ्यः निवृत्त आत्मा अस्येति निवृत्तात्मा ।

*सर्वगतत्वादनिवृत्त आत्माऽस्येत्यनिवृत्तात्मा वा ।

र.– *निवृत्ते निकृष्टवृत्तिमत्यपि यशआदि आ समन्तात् ददाति इति निवृत्तात्मा ।

*अथवा वृत्तं वृत्तिमत् धनादिकम् । नितरां धनादिकं ददाति इति वा निवृत्तात्मा ।

स.– *अनिवृत्तः आत्मा देहः यस्य सः अनिवृत्तात्मा ।

*निवृत्तात्मा इति च्छेदे – नितरां वृत्तः सकलविषयेषु प्रवृत्तः अयोग्यकृतयज्ञादिभ्यो निवृत्तो वा आत्मा मनः यस्येत्यर्थः ।

श्री.– *निवृत्तात्मा = वृत्तिमद्धनदाता ।



## ७७९. दुर्जयः

वि.– ★जेतुमशक्यत्वात् दुर्जयः ।

र.– ★दुःखेन अपि शत्रुभिः जेतुम् अशक्यः बाहुः यस्य सः दुर्जयः ।

स.– ★जेतुं न शक्यः ।

★"दुःखं दुरिति सम्प्रोक्तं" इति गीतातात्पर्योक्तेः दुःखस्य जयः यस्मादिति वा ।

श्री.– ★दुर्जयः = शत्रुदुर्जयबाहुमान् ।



## ७८०. दुरतिक्रमः

वि.– ★अतिक्रमितुं न शक्यत इति दुरतिक्रमः ।

★दुःखादेरतिक्रान्तो वा ।

र.– ★दुःखेन अपि अत्येतुम् अशक्यः क्रमः शक्तिः यस्य सः दुरतिक्रमः ।

स.– ★पूर्वोक्तरीत्या दुःखस्य अतिक्रमः यस्य सः दुरतिक्रमः ।

श्री.– ★दुरतिक्रमः = दुरत्ययशक्तिमान् ।



## ७८१. दुर्लभः

वि.– ★भक्त्यैकलभ्यत्वात् दुर्लभः ।

"भक्त्या त्वनन्यया" इति भगवद्वचनात् ।

र.– ★दुःखेन लब्धुं योग्यः दुर्लभः । (वह्वायासेन यज्ञादिकर्मणा लभ्यः न अल्पेन इति)

स.– ★दुःखेन लभ्यते इति दुर्लभः ।

श्री.– ★दुर्लभः = दुःखेन लब्धुं योग्यः ।



## ७८२. दुर्गमः (अदुर्गमः)

वि.– ★दुःखेन गम्यते ज्ञायत इति दुर्गमः ।

र.– ★दुः दुस्सम्पाद्यम् अपि वसु गमयति प्रापयति इति दुर्गमः ।

स.– ★गन्तुमशक्यत्वात् दुर्गमः ।

★अदुर्गमेति च्छेदे, न विद्यते दुर्गा तदभिमन्यमानतमः येषां ते अदुर्गाः, अभिमान्यभिमन्यमानयोः ऐक्यव्यपदेशः महतः चतुर्मुखात् इत्यादौ दृष्टतमोगुणरहिताः तैः मीयते इति तथा ।

श्री.– ★दुर्गमः = दुःखसम्पाद्यवसुप्रापकः ।



## ७८३. दुर्गः

वि.– ★वह्वन्तरायत्वात् दुःखेन प्राप्यत इति दुर्गः ।

र.– ★दुः दुरासदान् अतिप्रवलान् शत्रून् जिघांसया गच्छति इति दुर्गः ।

स.– ★दुर्गः दुःखं गमयति दैत्यान् प्रतीति तथा ।

श्री.– ★दुर्गः = दुरासदशत्रुवधार्थगामी ।



## ७८४. दुरावासः

वि.– ★दुःखेनाऽवास्यते योगिभिश्चित्त इति दुरावासः ।

र.– ★स्तुतिभिरेवावासनीयः प्रसन्नीकर्तव्यः, न तु सुखेन इति दुरावासः ।

स.– ★दुः दुष्टः रावः ध्वनिः नैर्गुण्यादिप्रतिपादकः येषां ते दुरावाः, अन्तर उपपत्तेः इत्यत्र इव दीर्घाभावः, दुरावान् अस्यति क्षिपति तमसीति दुरावासः ।

श्री.– ★दुरावासः = स्तुतिं विना दुःखेनापि प्रसादयितुमशक्यः ।



## ७८५. दुरारिहा

वि.– ★दुरारिणो दुर्गामिनो दानवादयः, तान् हन्तीति दुरारिहा ।

र.– ★दुरारिः संसिद्धेः प्रापकः तं हन्ति निराकरोति इति दुरारिहा ।

स.– ★दुष्टाः आ सम्यक् अरयः दुरारयः तान् हन्तीति दुरारिहा ।

श्री.– ★दुरारिहा = अन्यस्य सिद्धिप्रापकत्वनिरासकः ।



शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥ ८४ ॥

## ७८६. शुभाङ्गः

वि.– ★शुभान्यङ्गानि ब्रह्मादिदेवा अस्येति शुभाङ्गः ।

"अङ्गान्यन्या देवताः" इति श्रुतेः ॥

र.– *शुभां दीप्यमानां बुद्धिम् अङ्गयति प्रेरयति इति शुभाङ्गः ।

स.– *शुभानि अङ्गानि यस्य सः शुभाङ्गः ।

श्री.– *शुभाङ्गः = शुभबुद्धिप्रेरकः ।



## ७८७. लोकसारङ्गः

वि.– *सारङ्गवल्लोकस्य सारं गृह्णातीति लोकसारङ्गः ।

*लोकापेक्षया सारभूताङ्गवान् वा ।

र.– *लोकः ज्ञानी अध्वर्युः । लोकेन अध्वर्युणा दत्तं सारं सोमरसं गच्छति प्राप्नोति इति लोकसारङ्गः । यद्वा सारस्य अङ्गः प्रापकः सारङ्गः ।

स.– *लोकं वैकुण्ठादिलोकं सनोति ददातीति लोकसाः, लोकशब्दोपपदात् ''पण् दाने'' इत्यतः 'वनपणक्रमगमो-विट्' इति सवर्णदीर्घे च रूपम् । रज्यन्ते ज्ञानिनः अत्र इति रङ्गः, लोकसाश्चासौ रङ्गश्चेति लोकसारङ्गः ।

*लोकसारं स्वात्मानं गमयतीति वा । लोकसारः इत्यर्थे विन्दुः आधिक्ये अधिकमिति सूत्रात् ।

श्री.– *लोकसारङ्गः = ज्ञान्यध्वर्युदत्तसोमरसलाभः ।



## ७८८. सुतन्तुः

वि.– *शोभनः तन्तुः प्रपञ्चविस्तारो यस्य स सुतन्तुः ।

र.– ★सु सम्यक् सर्वकालेषु तनोति विस्तारं प्राप्नोति इति सुतन्तुः ।

स.– ★शोभनः तन्तुः चतुर्मुखादिसन्तानः यस्य सः सुतन्तुः ।

श्री.–★सुतन्तुः = सदावृद्धः ।



## ७८९. तन्तुवर्धनः

वि.– ★तन्तुं वर्धयतीति समेदयतीति छेदयतीति वा तन्तुवर्धनः ।

र.– ★तन्यते अविच्छिन्नतया प्रवर्तते इति तन्तुः यज्ञः, तै यज्ञैः वर्धते इति तन्तुवर्धनः ।

स.– ★तन्तून् तन्त्वात्मकपटान् वर्धयति द्रौपद्यर्थमिति तन्तुवर्धनः ।

श्री.–★तन्तुवर्धनः = यज्ञवर्धनीयः ।



## ७९०. इन्द्रकर्मा

वि.–★क्रियन्त इति कर्माणि, इन्द्रा अतिसमर्था ब्रह्मादयोऽपि यस्य कर्माणि स इन्द्रकर्मा ।

र.– ★इदं प्राणिजातं अन्तर्यामितया द्रवति इति इन्द्रः, अन्तर्यामितया स्थितः स्वयं कर्माणि करोति इति कर्मा, इन्द्रश्चासौ कर्मा च इति इन्द्रकर्मा ।

★अथवा इन्द्रमुद्दिश्य च इन्द्रभोगसाधनं कर्म यस्मात् सः इन्द्रकर्मा ।

★अथवा इन्द्रस्य प्रसिद्धस्य कर्म इव कर्म यस्य सः इन्द्रकर्मा ।

**स.– ★इन्द्रस्य कर्म वृत्रहननादिव्यापारः यस्मात् इति इन्द्रकर्मा ।**

''इदमदर्शमिति तस्मादिन्द्रो नाम'' इत्यादिखण्डभाष्ये

''गुणपूर्णस्वरूपस्य त्वापरोक्ष्येण दर्शनात् ।
सर्वदैव ह्यसौ विष्णुः इन्द्रो वै नामतो मतः ।
ब्रह्मादीनां हि सर्वेषां तत्प्रसादेन जायते ।
जानन्ति न स्वतन्त्रेण तन्नेन्द्रास्ते प्रकीर्तिताः ।
रमापि तत्प्रसादेन जानाति किमुवापरे ।
अल्पज्ञानाः अल्पगुणाः अल्पानन्दाश्च तेऽखिलाः ।
रमाऽजशङ्करेन्द्राद्याः तेनानिन्द्राः क्रमेण तु ।
पापैरज्ञाततां देवाः मानयन्ति सदात्मनः ।
हर्षेण तेन विष्णुः सः इदन्द्र इति शब्द्यते ।
तेनेन्द्रता सुरादीनां ज्ञायतेति श्रुतिर्हरिम् ।
इन्द्र इत्येव वदति पारोक्ष्येणोरुसद्गुणम्'' ॥ इत्याद्यैतरेयसंहितायाम् ।

**★''मुख्यतः कर्मनामा तु प्रादुर्भावात्मको हरिः ।
अनिरुद्धतनुश्चैव तत्र ह्यमितचेष्टितः ॥'' इति वचनात् ।**

**इन्द्रश्चासौ कर्म च इति इन्द्रकर्मा ।**

**श्री.– ★इन्द्रकर्मा = इन्द्रवत्कर्मकारी ।**



## ७९१. महाकर्मा

**वि.– ★महान्ति भूतानि कार्याण्यस्येति महाकर्मा ।**

**र.– ★महान्ति अपरिमितानि कर्माणि ज्योतींपि यस्य सः महाकर्मा ।**

स.– *महत् जगत्सर्जनादि कर्म यस्येति महाकर्मा ।

*"करोऽस्मिन् मीयत इति कर्म जीव उदाहृतः ।
विधिशब्देनामितत्वात्तु अकर्मा भगवान् हरिः ॥ इत्युक्तेः

कर्मा जीवः न भवतीति वा । विध्यविपयत्वाद्वा । महांश्चासावकर्मा चेति महाकर्मा ।

श्री.–*महाकर्मा = अमितकर्मा ।



## ७९२. कृतकर्मा

वि.– *कृतमेव सर्वं कृतार्थत्वान्न कर्तव्यं किञ्चिदपि कर्मास्य विद्यत इति कृतकर्मा ।

*धर्मात्मकं कर्म निर्मितवानिति वा कृतकर्मा ।

र.– *भक्तार्थं कृतं युद्धादिकर्म येन सः कृतकर्मा ।

स.– *कृतकर्मा पूर्णकर्मा ।

श्री.–*कृतकर्मा = भक्तार्थं चीर्णयुद्धादिकर्मा ।



## ७९३. कृतागमः

वि.– *कृत आगमः सम्प्रदायो येन स कृतागमः ।

*दुःशास्त्रादिच्छेदकारी वा ।

र.– *आ समन्तात् गच्छति जानाति इति आगमः विद्वान् । कृतः आगमः येन सः कृतागमः ।

स.– ★कृतः आगमः येन सः तथा ।

श्री.–★कृतागमः = विद्वत्कर्ता ।



उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ॥ ८५ ॥

### ७९४. उद्भवः

वि.– ★उत्कृष्टं भवनं जन्म स्वेच्छया भजत इत्युद्भवः ।

★उद्गतमपगतं जन्म अस्य सर्वकारणत्वादिति वा उद्भवः ।

र.– ★भवति इति भवः सत्ता । उद्गतो भवः शत्रूणां सत्ता येन सः उद्भवः ।

★उत्कृष्टो भवः सत्ता रक्षणं भक्तानां येन इति वा उद्भवः ।

स.– ★भवात् संसारात् उत्पत्तेर्वा उद्गतः उद्भवः ।

श्री.–★उद्भवः = उद्गतभक्तरक्षणः ।



### ७९५. सुन्दरः

वि.– ★निरन्तरनिरतिशयसौभाग्यशालित्वात् सुन्दरः ।

★असुराणां सुखं दारयतीति वा सुन्दरः ।

र.– ★सु समीचीनं सुखादिकम् असुरेषु विदारयति इति सुन्दरः ।

स.– ★सुन्दरः सौन्दर्यवान् ।

★शोभनं दरः शङ्खः यस्येति वा । बिन्दुस्त्वाधिक्यार्थे ।

*सुन्दं उपसुन्देन रेपयति नाशयतीति वा ।

श्री.– *सुन्दरः = शत्रुसुखादिदारकः ।



## ७९६. सुन्दः

वि.– *सुखं भक्तेभ्यो ददातीति सुन्दः ।

र.– *सुं समीचीनं वसु ददाति इति सुन्दः ।

स.– *सुं सुखं ददातीति सुन्दः ।

श्री.– *सुन्दः = सम्यक्वसुदः ।



## ७९७. रत्ननाभः (अरत्ननाभः)

वि.– *रत्नवत् सुन्दरो नाभिरस्येति रत्ननाभः ।

*रत्नपदार्थसुखादेराश्रयो वा ।

र.– *सुखसाधनत्वात् रत्नं स्तुतिः । भाति जानाति इति भः । न भः अभः सः न भवति इति नाभः । अतिशयेन श्रोता । रत्नस्य स्तुतेः नाभः श्रोता रत्ननाभः ।

स.– *रत्नं पुंरत्नं चतुर्मुखः नाभौ यस्य सः ।

*अरत्ननाभः इति च्छेदे अरत्नान् अरतिदैत्यान् नभते इति वा ।

''नभ हिंसायां'' इति धातोः ।

श्री.– *रत्नलाभः = स्तुतिश्रोता ।



## ७९८. सुलोचनः

वि.– *शोभनं लोचनं नयनं ज्ञानं वाऽस्येति सुलोचनः ।

र.– *लोचयति दर्शयति अनुभावयति इति लोचनः, सुशब्दः समीचीनवस्तुवाचकः, सु समीचीनं वस्तु शवः लोचयति अनुभावयति इति सुलोचनः ।

स.– *शोभने लोचने यस्य सः सुलोचनः ।

*सुष्ठु लोचनं यस्यासौ तथा वा ।

श्री.– *सुलोचनः = सुखादिदर्शकः ।



## ७९९. अर्कः

वि.– *अरणात् सुखरूपत्वादर्च्यत्वाद्वा अर्कः ।

"महामर्कम्" इति श्रुतेः ।

र.– *पूज्यः मदः सोमो वा अस्य इति अर्कः ।

स.– *अतिशयेन सुखरूपः ।

*अर्च्यते पूज्यते इति वा अर्कः । "अर्च पूजायाम्" ।

*यद्वा "अर्क स्तवने" अर्क्यते इति अर्कः, अर्च्यते इति अर्कः ।

श्री.– *अर्कः = पूज्यमदः ।



## ८००. वाजसनः

वि.– *वाजमन्नं सनोति ददातीति वाजसनः ।

र.– *वाजम् अन्नं सनोति ददाति इति वाजसनः ।

स.– *वाजं अन्नं सनति सम्भजते इति वाजसनः ।

"वन षण सम्भक्तौ" ।

श्री.– *वाजसनः = अन्नदः ।



## ८०१. शृङ्गी

वि.– *शृङ्गाण्यस्य सन्तीति शृङ्गी ।

र.– *शृणाति शत्रून् हिनस्ति इति शृङ्गं सः एव शृङ्गी ।

*शृङ्गं हिंसनं शत्रूणां अस्य अस्ति इति शृङ्गी ।

स.– *भृङ्गाणि गोवर्धनभृङ्गाणि अस्य सन्ति इति भृङ्गी ।

श्री.– *भृङ्गी = शत्रुहिंसावान् ।



## ८०२. जयन्तः

वि.– *अतिशयेन जयतीति, अतिशयेन जन्महेतुरिति वा जयन्तः ।

र.– *जयति इति जयन्तः ।

स.– *जयतीति जयन्तः ।

श्री.– *जयन्तः = जयवान् ।



### ८०३. सर्वविज्जयी (सर्ववित्, जयी)

वि.– ★सर्वविपयं ज्ञानमस्येति सर्ववित् ।

★सर्वं विदधातीति वा सर्ववित् ।

★सर्वलाभवान् वा, पूर्णस्थितिमान् वा ।

★जेतुं शीलमस्येति जयी ।

र.– ★सर्वं विन्दते लभते इति सर्ववित् स्वामी, तं जयति करोति इति सर्वविज्जयः भगवत्प्रसादः, स अस्य अस्ति इति सर्वविज्जयी । (स्वभक्तान् सर्वस्वामिनः कुर्वत्प्रसादवान्)

स.– ★सर्वा च सा विच्च सर्ववित्, सर्वविदो जयप्राप्तिः अस्य अस्तीति सर्वविज्जयी ।

श्री.– ★सर्वविज्जयी = सर्वस्वामिवशकृत्प्रसादवान् ।



सुवर्णविन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ॥ ८६ ॥

### ८०४. सुवर्णबिन्दुः

वि.– ★शोभनो वर्णोऽक्षरं विन्दुश्च यस्य वाचकः स सुवर्णविन्दुः ।

★शोभनो वर्णो विन्दुर्लक्षणमस्येति वा सुवर्णविन्दुः ।

र.– ★सु समीचीनः वर्णः रूपं यस्य तत् सुवर्णं चरुपुरोडाशादि-द्रव्यं तत् विन्दते लभते इति सुवर्णविन्दुः ।

★यद्वा सु समीचीनाः वर्णाः अक्षराणि यस्याः सा सुवर्णा वेदवाणी, तां विन्दते इति सुवर्णविन्दुः ।

## ८००. वाजसनः

वि.– ★वाजमन्नं सनोति ददातीति वाजसनः ।

र.– ★वाजम् अन्नं सनोति ददाति इति वाजसनः ।

स.– ★वाजं अन्नं सनति सम्भजते इति वाजसनः ।

''वन षण सम्भक्तौ'' ।

श्री.– ★वाजसनः = अन्नदः ।



## ८०१. शृङ्गी

वि.– ★शृङ्गाण्यस्य सन्तीति शृङ्गी ।

र.– ★शृणाति शत्रून् हिनस्ति इति शृङ्गं सः एव शृङ्गी ।

★शृङ्गं हिंसनं शत्रूणां अस्य अस्ति इति शृङ्गी ।

स.– ★भृङ्गाणि गोवर्धनभृङ्गाणि अस्य सन्ति इति भृङ्गी ।

श्री.– ★भृङ्गी = शत्रुहिंसावान् ।



## ८०२. जयन्तः

वि.– ★अतिशयेन जयतीति, अतिशयेन जन्महेतुरिति वा जयन्तः ।

र.– ★जयति इति जयन्तः ।

स.– ★जयतीति जयन्तः ।

श्री.– ★जयन्तः = जयवान् ।



## ८०३. सर्वविज्जयी (सर्ववित्, जयी)

वि.– *सर्वविपयं ज्ञानमस्येति सर्ववित् ।

*सर्वं विदधातीति वा सर्ववित् ।

*सर्वलाभवान् वा, पूर्णस्थितिमान् वा ।

*जेतुं शीलमस्येति जयी ।

र.– *सर्वं विन्दते लभते इति सर्ववित् स्वामी, तं जयति करोति इति सर्वविज्जयः भगवत्प्रसादः, स अस्य अस्ति इति सर्वविज्जयी । (स्वभक्तान् सर्वस्वामिनः कुर्वत्प्रसादवान्)

स.– *सर्वा च सा विच्च सर्ववित्, सर्वविदो जयप्राप्तिः अस्य अस्तीति सर्वविज्जयी ।

श्री.– *सर्वविज्जयी = सर्वस्वामिवशकृत्प्रसादवान् ।



सुवर्णविन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ॥ ८६ ॥

## ८०४. सुवर्णबिन्दुः

वि.– *शोभनो वर्णोऽक्षरं विन्दुश्च यस्य वाचकः स सुवर्णविन्दुः ।

*शोभनो वर्णो विन्दुर्लक्षणमस्येति वा सुवर्णविन्दुः ।

र.– *सु समीचीनः वर्णः रूपं यस्य तत् सुवर्णं चरुपुरोडाशादि-द्रव्यं तत् विन्दते लभते इति सुवर्णविन्दुः ।

*यद्वा सु समीचीनाः वर्णाः अक्षराणि यस्याः सा सुवर्णा वेदवाणी, तां विन्दते इति सुवर्णविन्दुः ।

स.– ★शोभनाः वर्णाः यस्मिन् सः सुवर्णः वेदः तस्य बिन्दुः ज्ञाता।

श्री.– ★सुवर्णविन्दुः = वेदवाग्लाभी ।



## ८०५. अक्षोभ्यः

वि.– ★केनापि न क्षोभ्यत इत्यक्षोभ्यः ।

र.– ★केनापि क्षोभ्यः सञ्चलनीयः न भवति इति अक्षोभ्यः ।

स.– ★अक्षोभ्यः क्षोभयितुमशक्यः ।

★सुवर्णबिन्दुरक्षोभ्यः– सुवर्णस्थबिन्दवः यस्मिन् तत् सुवर्णबिन्दु, सुवर्णबिन्दुवत् रक्षश्च सुवर्णबिन्दुरक्षो मारीचः ।

मायामृगात्मा मारीचो रम्ये रामाश्रमेऽचरत् ।
मुक्ताप्रवालप्रच्छन्नः हेमबिन्दुशताञ्चितः ॥

इति सङ्क्षेपरामायणोक्तेः, तं भ्यासयति भीषयतीति वा तथा ।

''भ्यस भये'' इति धातोः ण्यन्तात् डः ।

श्री.– ★अक्षोभ्यः = असञ्चलनीयः ।



## ८०६. सर्ववागीश्वरेश्वरः

वि.– ★सर्वेषां वागीश्वराणां ब्रह्मादीनामपीश्वरः सर्ववागीश्वरेश्वरः ।

र.– ★सर्ववाचः विधायकत्वेन यस्मिन् कर्मणि तत् सर्ववाक्

भगवत्पूजात्मकं कर्म, तस्य ईश्वरः सर्ववागीश्वरः भूम्यादि-सर्वलोकेश्वरश्च, सर्ववागीश्वरश्च असौ ईश्वरश्च सर्ववागीश्व-रेश्वरः (वेदविहितक्रियाव्यङ्ग्यः भूम्यादिलोकनिर्माता च)।

स.– *सर्वेषां वाचः सर्ववाचः, तासामीश्वरस्य रुद्रस्य च ईश्वरत्वात् सर्ववागीश्वरेश्वरः।

श्री.– *सर्ववागीश्वरेश्वरः = कर्मेशो भूम्यादीशश्च।



## ८०७. महाह्रदः

वि.– *परमानन्दपूर्णत्वादनवगाह्यत्वाच्च महाह्रदः।

र.– *महान्तम् अन्तरिक्षादिकं ह्रादते अतिक्रामति इति महाह्रदः।

स.– *महान् ह्रदो यस्य कालीयमर्दनकाले वा, समुद्रशयनकाले वा सः महाह्रदः।

श्री.– *महाह्रदः = अन्तरिक्षातिक्रमी।



## ८०८. महागर्तः

वि.– *गर्तशब्दो रथपर्याय इति नैरुक्ताः। तस्मात् महागर्तो महारथः।

*महान् गर्तः हृदयगुहास्थानमस्येति वा महागर्तः।

र.– *गिरति दैत्यकृतानि आवरणानि इति गर्तः महान् अतिशयितः गर्तः महागर्तः।

स.– *महान्तश्चते अगाश्च महागाः शेषाचलादयः तत्र

ऋच्छतीति महागर्तः ।

"ऋ गतौ" कर्तरि क्तः ।

★महान् गर्तो हृदयगुहालक्षणो यस्येति वा ।

श्री.– ★महागर्तः = दैत्यकृतावरणनाशकः ।



## ८०९. महाभूतः

वि.– ★महान् पूर्णो भूतो नित्यसिद्धश्चेति महाभूतः ।

"एको विष्णुर्महद् भूतम्" इत्युक्तेः ।

र.– ★महान्तः अभीष्टप्रदाः भूताः मदाः यस्य सः महाभूतः ।

स.– ★महान्ति भूतानि आकाशादीनि यस्मात् इति महाभूतः ।

श्री.– ★महाभूतः = अभीष्टप्रदमदः ।

## ८१०. महानिधिः

वि.– ★महान्ति भूतान्यस्मिन्निधीयन्त इति महानिधिः ।

★महांश्चासौ निधिश्चेति वा महानिधिः ।

र.– ★उक्थादिस्तोमविशेषाः व्यञ्जकतया निधीयन्ते अत्र इति निधिः । महान् उत्कृष्टः निधिः महानिधिः ।

★यद्वा नितरां भक्तानां भद्रं पुष्णाति इति निधिः । महान् अतिशयितः निधिः महानिधिः ।

स.– ★स्वप्राप्त्या निधिवत् सन्तोषकरत्वात् महानिधिः ।

श्री.– *महानिधिः = महाभक्तपोषकः ।



कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः ।
अमृतांशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥ ८७ ॥

## ८११. कुमुदः

वि.– *भारावतरणेन कुं भुवं मोदयतीति कुमुदः ।

र.– *कौ भूमौ प्रवर्तितः मुदः यज्ञः यस्मात् सः कुमुदः ।

स.– *कौ मोदते इति कुमुदः ।

श्री.– *कुमुदः = यज्ञप्रवर्तकः ।



## ८१२. कुन्दरः

वि.– *हिरण्याक्षजिघांसया कुं दारयतीति कुन्दरः ।

र.– *कुत्सितं मायावच्छिन्नं जनं दारयति अधःप्रक्षिपति इति कुन्दरः ।

*यद्वा कुः पृथिवी संसद्गृहं वा, तत् दारयति विनाशयति इति कुन्दरः ।

स.– *भक्तसमर्पितकुन्दपुष्पेण रमते इति कुन्दरः ।

श्री.– *कुन्दरः = कुत्सितदारकः ।



## ८१३. कुन्दः

वि.– *कुं पृथिवीं कश्यपाय ददातीति कुन्दः ।

"तस्मिन् यज्ञे महादाने दक्षिणां भृगुनन्दनः ।
मारीचाय ददौ प्रीतः कश्यपाय वसुन्धराम्" ॥

इति हरिवंशेषु ॥

र.– *कूयते शब्यते श्रूयते वेदवाग्भिः इति कुन्दः ।

स.– *कुं शब्दं करोतीति कुन्दः ।

"कु'शब्दे" इत्यतः ।

*कुं भूमिं इन्द्राय ददातीति वा ।

*कुं कुत्सितं द्यति खण्डयतीति वा ।

श्री.– *कुन्दः = वेदवाक्श्राव्यः ।



## ८१४. पर्जन्यः

वि.– *परसस्यादिजननात् पर्जन्यः ।

र.– *जनयति इति जन्यः, परं युद्धे लाभं जनयति इति पर्जन्यः ।

स.– *परं जन्यं यस्मात् ।

श्री.– *पर्जन्यः = युद्धे लाभजनकः ।



## ८१५. पावनः

वि.– *पुनातीति पावनः ।

र.– *पुनाति पवित्रयति इति पवः मदः, तं नयति प्राप्नोति इति पवनः। पवनः एव पावनः।

स.– *पुनातीति पावनः।

*पान्तीति पाः राजानः, तेषामयनं यस्मादिति वा।

*पवनस्य वायोः अयं पिता पावनः इति वा।

श्री.– *पावनः = मदनेता।



## ८१६. अनिलः

वि.– *निलयनरहितत्वादनिलः।

*"इलति प्रेरयतीति इलः। तद्रहितत्वादनिल इति वा।

*स्वपितीति इलः। तद्विपरीतनित्यप्रबोधरूपत्वादनिल इति वा।

र.– *इलति प्रेरयति इति इलः, न विद्यते इलः प्रेरकः यस्य इति अनिलः। (बलवान्)

स.– *अनः मुख्यप्राणः येषामस्तीति अनिनः वायुभक्ताः, तान् लाति गृह्णाति इति तथा।

श्री.– *अनिलः = अन्यप्रेरकरहितः।



## ८१७. अमृतांशः (अमृताशः)

वि.– *अमृतं सुखसारं सुधां वाऽश्नातीति अमृताशः।

*अमृता अनश्वरा आशा वाञ्छा यस्येति वा अमृताशः ।

र.– *अमृताः नित्यमुक्ताः रामकृष्णहंसाद्या अंशाः अवताराः यस्य सः अमृतांशः (अमृताशः इति पाठे तु अमृतं मुक्तिसाधनं हविरादिकं अश्नाति इति अमृताशः)

स.– *"अतिरोहितविज्ञानात् वायुरप्यमृतः स्मृतः" इत्युक्तेः, अमृतस्य वायोः आ सम्यक् शं सुखं आशा तन्नाम्नी भारती वा यस्मादिति अमृताशः ।

"प्रद्युम्नतः कृतौ जज्ञे कन्यानां तु चतुष्टयम् ।
गायत्री चैव सावित्री श्रद्धा चैव सरस्वती ।
श्रद्धा सूत्रस्य भार्याऽभूत् तिस्रस्तु पुरुषः स्त्रियः" ।
इति वराहपुराणोक्तेः ।

*अमृतानां मुक्तानां आशा इच्छा यस्मिन् विषये इति वा ।

*अमृतांशः इति पाठे – अमृताः मरणरहिताः अंशाः मत्स्याद्याः यस्य सः अमृतांशः ।

श्री.– *अमृतांशः = नित्यमुक्तावतारः ।



## ८१८. अमृतवपुः

वि.– *मृतं मरणम्, तद्वर्जितं वपुरस्येत्यमृतवपुः ।

र.– *उप्यन्ते अत्र इति वपुः । अमृतानि मुक्तिसाधनानि अनादि-नित्यानि वा ऋगादीनि गायत्र्यादिसामादीनि च उप्यन्ते अत्र इति अमृतवपुः ।

स.– *अमृतार्थं वपुः नारायणीरूपं, अजितनामकरूपं धन्वन्तरि-रूपं वा यस्य सः तथा।

श्री.–*अमृतवपुः = मुक्तिसाधनोत्पत्तिस्थानम्।



## ८१९. सर्वज्ञः

वि.– *सर्वं जानातीति सर्वज्ञः। "यः सर्वज्ञः सर्ववित्" इति श्रुतेः।

र.– *सर्वान् जनान् स्वप्रेरणागोचरान् जानाति इति सर्वज्ञः।

स.– *सर्वविषयकज्ञानवान्।

श्री.–*सर्वज्ञः = स्वप्रेरणागोचरज्ञः।



## ८२०. सर्वतोमुखः

वि.– *"अथ कस्मादुच्यते सर्वतोमुखमिति यस्मादनिन्द्रियोऽपि सर्वतः पश्यति सर्वतः शृणोति सर्वतो गच्छति सर्वत आदत्ते सर्वतस्तिष्ठति" इत्यादिश्रुतेः सर्वतोमुखः।

र.– *खनति विदारयति इति मुखः। सर्वतः सर्वान् दुःखादीन् द्वेषिजनांश्च खनति इति सर्वतोमुखः।

स.– *सर्वदिक्षु मुखवत्वात् सर्वतोमुखः। विश्वतश्चक्षुः इति श्रुतेः।

*आश्रयतया सर्वतोमुखं जलमस्यास्तीति वा। अर्श आद्यच्।

श्री.–*सर्वतोमुखः = सर्वद्वेषिविदारकः।



सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिपूदनः ॥ ८८ ॥

## ८२१. सुलभः

वि.– *भक्त्या सुखेन लभ्यत इति सुलभः ।

"भक्त्या त्वनन्यया शक्यः" इति वचनात् ।

र.– *सु समीचीनं ज्ञानं लभते प्राप्नोति इति सुलभः ।

स.– *सुरेषु भातीति सुलभः ।

*सु सुखं लभते इति वा ।

श्री.– *सुलभः = सम्यग्ज्ञानलाभी ।



## ८२२. सुव्रतः

वि.– *"ज्ञानं च सत्यं च दमः शमश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया ।
दानं च यज्ञश्च तपः श्रुतं च महाव्रता द्वादश ब्राह्मणस्य" ।

इति भारतोक्तानि व्रतानि शोभनानि यस्य सः सुव्रतः ।

र.– *सु समीचीनं व्रतं ध्यानयोगलक्षणं यस्मिन् सः सुव्रतः ।

स.– *शोभनं व्रतं यद्विपये इति सुव्रतः ।

श्री.– *सुव्रतः = सम्यग्ध्यानयोगः ।



## ८२३. सिद्धः

वि.– ★अनन्याधीनसिद्धत्वात् सिद्धः ।

र.– ★शास्त्रशासनविपयत्वात् माङ्गलिकक्रियाविपयत्वाद्वा सिद्धः ।

स.– ★सिधं मङ्गलं शास्त्रं वा धत्ते इति सिद्धः ।

श्री.–★सिद्धः = शास्त्रशासनविषयः ।



## ८२४. शत्रुजित्

वि.– ★सुरशत्रव एवास्य शत्रवः, तान् जयतीति शत्रुजित् ।

र.– ★भक्तदत्तसोमपानेन शत्रून् जयति इति शत्रुजित् ।

स.– ★शत्रून् जयति इति शत्रुजित् ।

श्री.–★शत्रुजित् = शत्रुजेता ।



## ८२५. शत्रुतापनः

वि.– ★तेपामेव तापनाच्छत्रुतापनः ।

र.– ★शत्रून् वृत्रादीन् तापयति सन्तापयति इति शत्रुतापनः ।

स.– ★शत्रून् तापयतीति शत्रुतापनः ।

★तपनस्य सूर्यस्य अयं अन्तर्यामी तापनः, ''ध्येयः सदा सवितृमण्डलमध्यवर्ती'' इत्युक्तेः । शत्रुः दैत्यानां शातयिता, शत्रुश्चासौ तापनश्चेति वा ।

श्री.–★शत्रुतापनः = वृत्रादितापकः ।

## ८२६. न्यग्रोधः (न्यग्रोधोदुम्बरः)

वि.– *न्यगर्वाक् रोहतीति न्यग्रोधः सर्वेपामुपरि वर्तमान इत्यर्थः ।

*सर्वभूतानि न्यक्करोति त्यजति मायया आवृणोतीति निरुणद्धि इति वा न्यग्रोधः ।

र.– *न्यक् अर्वाक्स्थितं देहाख्यं पुरं रोहति इति न्यग्रोधः, उः क्षत्रियः, बः मदः, रः क्षयः, उत्कृष्टक्षत्रियमदक्षयः यस्मात् सः उदुम्बरः, न्यग्रोधश्चासौ उदुम्बरश्च न्यग्रोधोदुम्बरः ।

स.– *सर्वाणि भूतानि न्यक्कृत्य रोहति वर्धते इति न्यग्रोधः ।

श्री.– *न्यग्रोधोदुम्बरः = देहरोहः, उत्कृष्टक्षत्रियमदक्षयकारी च ।



## ८२७. उदुम्बरः (औदुम्बरः)

वि.– *उदुम्बरवत् स्थितत्वादुदुम्बरः ।

''त्वय्यव्ययात्मन् पुरुषे प्रकल्पिता
लोकाः सपाला बहुजीवसङ्कुलाः ।
यथा जले सञ्जिहते जलौकसोऽ-
प्युदुम्बरे वा मशका मनोमये'' ।। इति भागवते ।

*उद्भूतमम्बरं यस्मादिति वा उदुम्बरः ।

''पृषोदरादीनि यथोपदिष्टम्'' इत्येतादृशानां शब्दानां साधुत्वं द्रष्टव्यम् ।

*उच्चैरुम्भयति पूरयतीति वा उदुम्बरः ।

स.– *उदुम्बरः अम्बरादुद्गतः ।

*यद्वा औदुम्वर इति पाठे– उदुं जीवं वरयति भक्तत्वेन स्वीकरोति इति उदुम्बरा लक्ष्मीः तस्याः अयं स्वामी औदुम्वरः ।

*"आम्रं बाल्येऽपि पतति परिणामे ह्युदुम्वरम् ।
सम्यक् पाके तथाऽश्वत्थं फलं जीवमृतिस्तथा ।
कलावाम्रोपमा जीवाः त्रेतासु औदुम्वरोपमाः ।
कृते अश्वत्थसमाश्चैव यान्ति ब्रह्मवशाः सदा" ॥

इति बृहद्भाष्योक्तेः उदुम्वरसमजीवप्राप्यत्वाद्वा ।



## ८२८. अश्वत्थः

वि.– *अश्वाकारेण स्थितत्वादश्वत्थः ।

"अश्वस्वरूपो ब्रह्माऽभूदश्वरूपाज्जनार्दनात् ।
तत्र सन्निहितो विष्णुरश्वरूपः स्वयं प्रभुः" ॥ इति प्राधान्ये ।

र.– *श्वः अनागतेह्नि आगामिनि दिवसे तिष्ठति इति श्वत्थः । श्व एव तिष्ठति न परेऽहनि इति श्वत्थः अल्पकालीनः, सः न भवति इति अश्वत्थः । (दीर्घकालीनसकलश्रेयःसाधनवान् अश्वत्थः)

स.– *अश्ववत् तिष्ठति इति अश्वत्थः ।

श्री.– *अश्वत्थः = सदाविद्यमानाङ्कुश(र)वान् ।



## ८२९. चाणूरा(न्ध)न्ध्रनिषूदनः

वि.– ★चाणूरनामानमन्ध्रं निषूदितवानिति चाणूरान्ध्रनिषूदनः ।

र.– ★चाणूरः पूज्यः । बध्यते स्तूयमानः वशीकृतः भवति अनेन इति बन्धनं स्तोत्रं नितरां सूदति सुखं ददाति इति निषूदनः, चाणूरश्च असौ अन्धश्चासौ निषूदनश्च इति चाणूरान्धनिषूदनः ।

स.– ★अन्धस्य इमे अन्धाः दुर्योधनादयः,

चाणूरश्च अन्धाश्च तान् निषूदयतीति तथा ।

"मया हतान् त्वं जहि मा व्यतिष्ठाः" इति गीतोक्तेः ।

श्री.–★चाणूरान्धनिषूदनः = पूज्यः, स्तुत्यः, सुखदश्च ।



सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद् भयनाशनः ॥ ८९ ॥

## ८३०. सहस्रार्चिः

वि.– ★सहस्राणि अर्चींषि यस्य स सहस्रार्चिः ।

र.– ★सहस्रेण पुत्रत्वपौत्रत्वप्रपौत्रत्वादिना वहुप्रकारेण अर्चिः पूज्यः अश्वः यस्य सः सहस्रार्चिः ।

स.– ★सहस्रं अर्चींषि यस्य सः सहस्रार्चिः ।

श्री.–★सहस्रार्चिः = पुत्रादिपूज्याश्ववान् ।



## ८३१. सप्तजिह्वः

वि.– *"काळी कराळी च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च
देवी लेलायमाना इति सप्त जिह्वाः" ॥

इति श्रुत्युक्ताः सप्त जिह्वाः अस्य सन्तीति सप्तजिह्वः ॥

र.– *सप्तसु गृहेषु यज्ञवाटेषु सक्तं जिह्वाचक्षुरादि इन्द्रियं यस्य सः सप्तजिह्वः ।

स.– *सप्तसङ्ख्याकाः जिह्वाः यस्य अग्न्यन्तर्गतरूपेण सप्तजिह्वः ।

*सप्तभिः जटाभिः सहिताः सप्ततपस्विनः त एव जिह्वा अस्य इति वा ।

"नाहं तथाद्मि यजमानहविः" इति भागवतोक्तेः ।

श्री.– *सप्तजिह्वः = यज्ञवाटासक्तचक्षुरादिः ।



## ८३२. सप्तैधाः

वि.– *सप्त एधांसि यस्य सः सप्तैधाः । "सप्त ते अग्ने समिधः" इति श्रुतेः ।

*सप्तान् सजटान् ऋषीन् एधयतीति वा ।

र.– *सप्त उपजीव्यानि शतानि वा एधांसि तेजांसि यस्य सः सप्तैधाः ।

स.– *सप्त ऋषीन् एधयति वर्धयतीति सप्तैधाः ।

"एध वृद्धौ" सप्त एधांसि यस्य अग्न्यन्तर्गतरूपेण, "सप्त ते अग्ने समिधः" इति श्रुतेः ।

**श्री.– *सप्तैधाः = वहुतेजाः ।**



## ८३३. सप्तवाहनः

**वि.– *सप्तनामकोऽश्वो वाहनं यस्य स सप्तवाहनः ।**

"एको अश्वो वहति सप्तनामा" इति श्रुतेः ।

***सप्तं सजटं ऋपिरूपं वहतीति वा ।**

**र.– *सप्त वहूनि वाजादीनि वाहयति प्रापयति इति सप्तवाहनः ।**

**स.– *सप्त वाहाः अश्वाः यस्य सः सप्तवाहः सूर्यः तं नयति इति तथा ।**

**श्री.– *सप्तवाहनः = बह्वन्नप्रापकः ।**



## ८३४. अमूर्तिः

**वि.– *मूर्तिः परिच्छेदः । प्राकृतो देहो वा । तद्रहितत्वादमूर्तिः ।**

**र.– *अः रणः युद्धं, मूर्तिः समुच्छ्रायः, युद्धेषु समुच्छ्रायः श्रवःसुम्नादिदातृत्वशक्तिः यस्य सः अमूर्तिः ।**

**स.– *अमूर्तिः प्राकृतदेहरहितः ।**

**श्री.– *अमूर्तिः = युद्धे कीर्त्यादिदानशक्तिमान् ।**



### ८३५. अनघः

वि.– *अघं दुःखं पापं च न विद्यतेऽस्येत्यनघः ।

र.– *अनति चेष्टयति प्रवर्तयति इति अनः चक्षुरादीन्द्रिय-समुदायः भगवद्रूपविशेपो वा, अनानि सर्वजनप्रवर्तकाणि इन्द्रियाणि स्वस्वरूपाणि वा अघति प्राप्नोति इति अघः, सर्वजनप्रवर्तक इन्द्रियमान इति यावत् अनघः ।

स.– *अनघः पापशून्यः ।

श्री.–*अनघः = सर्वप्रवर्तकेन्द्रियप्रापः ।



### ८३६. अचिन्त्यः

वि.– *साकल्येन चिन्तयितुमशक्यत्वादचिन्त्यः ।

र.– *अः अभीष्टदानहेतुः, चिन्त्यः स्मरणीयः अभीष्टदानहेतु-त्वेन स्मरणीयः अचिन्त्यः ।

स.– *अचिन्त्यः–चिन्तितुमशक्यः ।

श्री.–*अचिन्त्यः = अभीष्टदानहेतुत्वेन चिन्त्यः ।



### ८३७. भयकृत् (अभयकृत्) भयनाशनः

वि.– *अविदुपां भयं करोतीति भयकृत् ।

र.– *बिभेति अस्मात् इति भयं शरीरेन्द्रियादिकं, शरीर-सम्बन्धात् हि जीवस्य भयं तत् करोति इति भयकृत्, भयं शरीराभिमानादिकृतं नाशयति इति भयनाशनः, भयकृत् च असौ भयनाशनश्च भयकृद्भयनाशनः ।

स.– *अभयकृत्– भक्तानामभयप्रदः ।

श्री.– *भयकृद्भयनाशनः = देहकारी, देहाभिमाननाशनश्च ।



## ८३८. भयनाशनः

वि.– *विदुषां भयं नाशयतीति भयनाशनः ।

''अभयं प्रतिष्ठाम्'' ''तत्त्वेव भयं विदुषोऽमन्वानस्य'' इति श्रुतेः ॥

स.– *भयनाशनः– भयपरिहारकः ।



अणुर्बृहत् कृशः स्थूलो गुणभृन्निर्गुणो महान् ।
अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः ॥ ९० ॥

## ८३९. अणुः (बृहत्)

वि.– *निरतिशयसूक्ष्मत्वात् अणुः ।

र.– *अणुः सूक्ष्मः, बृहत् व्यापकम्, अणुश्चासौ बृहत् च अणुर्बृहत् ।

स.– *अणुत्वविश्रान्त्यधिकरणत्वात् अणुः ।

श्री.– *अणुर्बृहत् = सूक्ष्मो, महांश्च ।



## ८४०. बृहत्

वि.– *निरतिशयबृहत्त्वाद् बृहत् ।

स.– *बृहत्–गुणैः वृद्धः ।

## ८४१. कृशः (स्थूलः)

वि.– *कृशोऽणुमात्रः ।

र.– *कः कृशः, परिबृंहति इति स्थूलः, कृशश्चासौ स्थूलश्च कृशस्थूलः ।

स.– *दैत्यान् कर्पयतीति कृशः ।

श्री.– *कृशस्थूलः = तनुः, पुष्टः ।



## ८४२. स्थूलः

वि.– *स्थूलो महत्परिमाणः ।

''अनन्ताव्ययशक्तित्वात् तदन्यत्र विरोधिनः ।
सन्ति सर्वे गुणास्तत्र न च तत्र विरोधिनः'' ॥ इति च श्रुतिः ॥

स.– *स्थूलः–महापरिमाणः ।



## ८४३. गुणभृत् (निर्गुणः)

वि.– *गुणान् बिभर्तीति गुणभृत् ।

र.– *गुणाः प्राणाः भ्रियन्ते अस्मिन् इति गुणभृत्, गुणाः देहादयः निर्गच्छन्ति अस्मात् इति निर्गुणः, गुणभृत् च असौ निर्गुणश्च गुणभृन्निर्गुणः ।

स.– *गुणान् आनन्दादीन् विभर्ति इति गुणभृत् ।

*गुणान् अप्रधानभूतजीवान् विभर्ति इति वा ।

श्री.– ★गुणभृन्निर्गुणः = प्राणधारणस्थानं देहत्याजकः ।



## ८४४. निर्गुणः

वि.– ★गुणराहित्यान्निर्गुणः ।

''अगुणोऽगुणदेहत्वात्सगुणो गुणधारणात् ।
ऐश्वर्यादिगुणत्वाद्वा वासुदेव इतीरितः'' ॥ इत्याग्नेये ।

स.– ★सत्त्वादिगुणरहितत्वात् निर्गुणः ।



## ८४५. महान् (महत्)

वि.– ★ज्ञानानन्दादिसर्वगुणपरिपूर्णत्वान्महान् ।

र.– ★अपरिमितज्ञानक्रियादिमत्त्वात् वृत्राद्यभेद्यत्वाच्च महत् ।

स.– ★महान् श्रेष्ठः

श्री.– ★महान् = अमितज्ञानादिमत्वेन श्रेष्ठः ।



## ८४६. अधृतः

वि.– ★सर्वधारकः स्वयमन्येन न ध्रियत इत्यधृतः ।

र.– ★धरते इति धृतः, एषु युद्धेषु भक्तं रणादिना धरते इति अधृतः ।

स.– ★अधृतः–केनापि धृतो न भवतीति तथा ।

श्री.– ★अधृतः = युद्धधारकः ।

## ८४७. स्वधृतः

वि.– *स्वेनैव धृतः स्वधृतः ।

र.– *स्वं धनं धरते इति स्वधृतः ।

स.– *स्वेनैव धृतत्वात् स्वधृतः ।

*स्वं धनं धृतं येन इति वा ।

श्री.– *स्वधृतः = धनधारी ।



## ८४८. स्वास्यः (स्वास्थ्यः)

वि.– *शोभनमास्यं मुखमस्येति स्वास्यः ।

*स्वरूपभूतज्ञानानन्दाद्याश्रयितुं शक्यत इति वा स्वास्यः ।

*सुखेन भक्तैः हृद्याश्रयितुं शक्यत इति वा स्वास्यः ।

र.– *सु सम्यक् आस्थम् अवस्थानं स्वास्थं मोक्षः, तं यापयति इति स्वास्थ्यः ।

*स्वास्यः इति पाठे पुरूणां सुन्दराणां पुरुतमं सुन्दरतमम् इति व्याख्यानेन सु सम्यक् सुन्दरम् आस्यं यस्य सः स्वास्यः ।

स.– *स्वं स्वरूपभूतं आस्यं यस्य सः स्वास्यः ।

*सु शोभनाः वेदाः आस्ये यस्य इति वा ।

श्री.– *स्वास्थ्यः = सम्यक् मोक्षप्रापकः ।



## ८४९. प्राग्वंशः

वि.– *अन्यस्य वंशिनो वंशः पाश्चात्यः, अस्य वंशः प्रपञ्चः प्रागेव न पाश्चात्य इति प्राग्वंशः ।

*प्रथमो वंश आधार इति वा ।

*प्रकर्षेणाञ्चतीति प्राञ्चश्चक्षुराद्यास्तेपामाधार इति वा प्राग्वंशः । ''प्राणो वंशः'' इति श्रुतेः ।

र.– *वं शरीरं ध्रियते अस्मिन् इति वंश बुद्धिः, प्रकर्षेण अञ्चति इति प्राक् । गच्छति वंशं बुद्धिम् इति प्राग्वंशः सर्वबुद्धिगोचरः इति यावत् ।

स.– *अनादिकालमारभ्य वंश इव आधारः ।

श्री.– *प्राग्वंशः = प्रकर्षेणागन्ता, बुद्धिगः ।



## ८५०. वंशवर्धनः

वि.– *वंशं सन्ततिं वर्धयतीति वंशवर्धनः ।

र.– *वन्यते देवैः सेव्यते पीयते इति वंशः सोमः तं प्रति वर्धनम् अभिव्यक्तिः यस्य सः वंशवर्धनः ।

स.– *वंशवर्धनः– परीक्षित्संरक्षणेन पाण्डुकुलं वर्धयतीति तथा ।

तदुक्तं भागवते–

''जुगोप कुक्षिंगत आत्तचक्रः मातुश्च मे यः शरणं गतायाः'' । इति ।

श्री.– *वंशवर्धनः = सोमं प्रत्यभिव्यक्तिमान् ।

भारभृत् कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥ ९१ ॥

### ८५१. भारभृत्

वि.– *ब्रह्माण्डभारं विभर्तीति भारभृत् ।

र.– *भ्रियते इति भारः तं विभर्ति इति भारभृत् ।

स.– *भारं भारभूतं ब्रह्माण्डं कूर्मरूपेण विभर्ति इति भारभृत् ।
''बिभर्त्यण्डं हरिः कूर्मस्त्वण्डे चाप्युदकं महदिति बृहद्भाष्योक्तेः ।

श्री.– *भारभृत् = सोमधारी ।



### ८५२. कथितः

वि.– *सर्वैः वेदैः अभिहितः कथितः ।

र.– *स्तोमोक्थादिरूपवेदादिप्रतिपादितः कथितः ।

स.– *सदागमैः प्रतिपादितः ।

श्री.–*कथितः = स्तोमादिवेदप्रतिपादितः ।



### ८५३. योगी

वि.– *निरतिशयचित्तसमाधानाद् योगी ।

र.– *युज्यते सर्वगुणजातम् अनेन इति योगः सामर्थ्यम् शक्तिः । सा अस्य अस्ति इति योगी ।

स.– *उपायवान् ।

श्री.– *योगी = शक्तिमान् ।



## ८५४. योगीशः

वि.– *योगिनामीशः योगीशः ।

*"युज्यतेऽनेन योगोऽसावुपायः शक्तिरेव च" इत्यतस्तद्वतामीशो वा।

र.– *योगः सम्बन्धः । स एषाम् अस्ति इति योगिनः रथे अश्वसम्बन्धकारिणः मरुतः शक्तयश्च तेषाम् ईशः स्वामी योगीशः ।

स.– *योगिनामीशः ।

*योगिनां, याः रमायाश्च शं सुखं यस्मादिति वा ।

श्री.– *योगीशः = रथाश्वसम्बन्धकारिमरुदीशः ।



## ८५५. सर्वकामदः

वि.– *सर्वान् कामान् ददातीति सर्वकामदः ।

र.– *केतवः ज्ञानादिसर्वकामाः तान् ददाति इति सर्वकामदः ।

स.– *सर्वान् कामान् काम्यान् ददाति भक्तेभ्यः इति सर्वकामदः ।

*सर्वो रुद्रः कामदः कामखण्डको यस्मादिति वा ।

श्री.– *सर्वकामदः = ज्ञानादिसर्वमनोरथप्रदः ।



## ८५६. आश्रमः

वि.– *संसारश्रान्तानां विश्रामस्थानत्वात् आश्रमः ।

र.– *आ सम्यक् श्रम्यते तप्यते गूह्यते इति आश्रमः ।

स.– *न विद्यते श्रमः येषां ते अश्रमाः मुक्ताः, तेषामयं स्वामी इति आश्रमः ।

श्री.– *आश्रमः = सम्यगूह्यः ।



## ८५७. श्रमणः

वि.– *अविवेकिनः सन्तापयतीति श्रमणः ।

र.– *श्रमन्ति जानन्ति अनेन इति श्रमणं स्तुतिः, स्तुतिमान् स्तुतिविषयः श्रमणः ।

स.– *श्रमणाः सन्न्यासिनः अस्य दासत्वेन सन्तीति श्रमणः । अर्श आद्यच् ।

*कृच्छ्रचान्द्रायणादिश्रमेण णः सुखं यस्मादिति वा ।

*श्रमं नयति अपनयतीति वा ।

श्री.– *श्रमणः = ज्ञानसाधनः ।



## ८५८. क्षामः

वि.– *सर्वाः प्रजाः प्रलये क्षामयतीति क्षामः ।

र.– ★क्षमते श्रीभूमिशङ्करपुरुहूतद्यावापृथिव्यादिकं सहते इति क्षामः ।

स.– ★क्षमायाः सहनशक्तेः अयं आधारत्वेनेति क्षामः ।

★क्षमयति प्रलये जनान् इति वा ।

श्री.– ★क्षामः = श्रीभूम्यादिसहः ।



## ८५९. सुपर्णः (सुवर्णः)

वि.– ★देवाख्यशोभनपक्षत्वात् सुपर्णः ।

र.– ★सु सम्यक् भूमिं पूरयति व्याप्नोति इति सुपर्णः ।

स.– ★शोभनं पर्णं वटपत्रं शय्यात्वेन यस्य सः सुपर्णः ।

★सुपर्णरूपो वा । ''द्वा सुपर्णा सयुजा'' इति श्रुतेः ।

श्री.– ★सुवर्णः = सम्यक्भूव्यापकः ।



## ८६०. वायुवाहनः

वि.– ★वायुर्मुख्यप्राणो वाहनः उपदेशेन देवादिषु प्रापको यस्य स वायुवाहनः ।

स.– ★वायुं वर्तयतीति वायुवः, ''वृतु वर्तने'' इत्यतो डः । ''अह व्याप्तौ'' ल्युट् । अह्नुत इत्यहनः, वायुवश्चासौ अहनश्चेति वायुवाहनः ।

★शरीरात् उत्क्रमणकाले वायुः वाहनं यस्येति वा ।

श्री.– ★वायुवाहनः = धनवाहकः ।



धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितः सर्वसहो नियन्ता नियमो यमः ॥ ९२ ॥

## ८६१. धनुर्धरः

वि.– ★धनुर्धारयतीति धनुर्धरः ।

र.– ★धनति इति धनुः वज्रं ज्ञानरतिः, धरति इति धरः, धनुः वज्रं ज्ञानरतिं धारयति इति धनुर्धरः ।

स.– ★धनुषः धरः धनुर्धरः ।

श्री.– ★धनुर्धरः = वज्रादिधरः ।



## ८६२. धनुर्वेदः

वि.– ★धनुर्वेदं वेत्तीति धनुर्वेदः ।

र.– ★धनूंषि विदन्ति इति धनुर्वेदाः अस्त्रज्ञाः भृत्याः, ते अस्य भक्तानां दासाः सन्ति इति धनुर्वेदः ।

स.– ★ऐन्द्रं धनुः अगस्त्यद्वारा विन्दत इति धनुर्वेदः ।

श्री.– ★धनुर्वेदः = शस्त्रज्ञभृत्यवान् ।



## ८६३. दण्डः (अदण्डः)

वि.– ★अपराधिनो दण्डयतीति दण्डः ।

र.– ★दमयति उपशमयति स्वस्माज्जीवानवरयति त्रिविधानन्त्य-रहितान् करोति इति दण्डः ।

स.– ★दैत्यान् दण्डयतीति दण्डः ।

★अदण्डः इति च्छेदे अन्यकर्तृकशिक्षणरहितः इत्यर्थः ।

श्री.– ★दण्डः = स्वस्माज्जीवानवरीकुर्वाणः ।



## ८६४. दमयिता

वि.– ★मृत्युरूपेण प्रजा दमयतीति दमयिता ।

र.– ★भक्तानाम् उपशामकः तर्पयिता दमयिता ।

स.– ★दैत्यान् दमयतीति दमयिता ।

श्री.– ★दमयिता = भक्ततर्पकः ।



## ८६५. दमः (अदमः, आदमः)

वि.– ★सदा निगृहीतेन्द्रियत्वाद् दमः ।

र.– ★कल्पतरुशाखा इव भक्तानां सर्वाभीष्टं ददाति इति दमः ।

स.– ★सम्यग्ददतीति आदाः तेपां मा सम्पत् यस्मादित्यादमः ।

★अदम इति च्छेदे न विद्यते इन्द्रियनिग्रहः कृष्णादिरूपे यस्येत्यदमः इति वदन्ति ।

श्री.– ★दमः = भक्ताभीष्टदः ।



## ८६६. अपराजितः

वि.– ★न केनापि पराजेतुं शक्यत इत्यपराजितः ।

★अपः पालकहीनो दीप्तश्चेति वा ।

★अपरेण ब्रह्मपरेण ईपज्जित इति वा ।

र.– ★पराजीयन्ते कालतः इति पराजितः नश्वराः विभूतयः, न विद्यन्ते नश्वराः विभूतयः यस्य सः अपराजितः ।

स.– ★न विद्यते परः उत्तमः यस्मादित्यपरः, अपरश्चासावजितश्च अपराजितः ।

★न विद्यते पः पालकः यस्य सः अपः । स चासौ राजितश्च इत्यपराजितः ।

श्री.– ★अपराजितः = अनश्वरविभूतिः ।



## ८६७. सर्वसहः (नियन्ता)

वि.– ★सर्वकर्मसमर्थ इति, सर्वशत्रून् सहत इति वा सर्वसहः ।

र.– ★सर्वाणि सहांसि ओजांसि नियमयति इति सर्वसहोनियन्ता ।

★सर्वाणि जगन्ति सहसा नियामयति इति वा, सर्वसहो-नियन्ता ।

स.– ★सर्वं सहते इति सर्वसहः ।

श्री.– ★सर्वसहोनियन्ता = सर्वोजोनियमनः ।



## ८६८. नियन्ता

वि.– ★स्वे स्वे कार्ये सर्वं व्यवस्थापयतीति नियन्ता ।

स.– ★नियामकः ।



## ८६९. नियमः

वि.– ★सर्वस्य सत्तादिकं नियमयतीति नियमः ।

र.– ★नियमयति समस्तान् जीवान् इति नियमः ।

स.– ★नितरां यमः शासकः ।

श्री.– ★नियमः = सर्वजीवनियामकः ।



## ८७०. यमः (अनियमः, अयमः)

वि.– ★अवाप्तकामत्वेनोपरतविषयाकाङ्क्षत्वाद् यमः ।

★न नियमो नियतिस्तस्य विद्यत इति अनियमः ।

★सर्वनियामकस्य नियामकान्तराभावान्नास्य विद्यते यन्ता मृत्युरित्ययम इति वा ।

★अतुल्यो वा ।

र.– ★यं प्रापणीयं राधो माति निर्माति इति यमः ।

स.– ★"यम उपरमे" इति धातोः यमयति उपरमयति प्रलये सर्वं इति यमः ।

श्री.– ★यमः = प्राप्तैश्वर्यनिर्माता ।

**सत्त्ववान् सात्त्विकः सत्यः सत्यधर्मपरायणः ।**
**अभिप्रायः प्रियार्होऽर्हः प्रियकृत् प्रीतिवर्धनः ॥ ९३ ॥**

## ८७१. सत्त्ववान्

**वि.– *सत्त्वं सद्गुणत्वम् । तदस्यास्तीति सत्त्ववान् ।**

''सदा सर्वगुणाढ्यत्वात् सत्त्ववान् हरिरुच्यते ।
न तु सत्त्वगुणात्मत्वाद्यतस्त्रिगुणवर्जितः'' ॥ इति नारदीये ।

**र.– *सतः समीचीनस्य भावः सत्त्वं विशिष्टप्रकृष्टानन्दादिगुणजातं, तत् अस्य अस्ति इति सत्त्ववान् ।**

स.– *''सत्वमस्त्री तु जन्तुषु'' इति नामानुशासनात्,

''सत्वं जीवः क्वचित् प्रोक्तः क्वचित् सत्वं जनार्दनः ।
सत्वं नाम गुणः क्वचित् क्वचित् साधुत्वमुच्यते'' ॥ इति स्मृतेश्च ।

**जीवपरत्वात् सत्वं जीवः बलं साधुत्वं वा अस्य सन्तीति तथा ।**

**श्री.– *सत्त्ववान् = विशिष्टप्रकृष्टगुणवान् ।**



## ८७२. सात्त्विकः

**वि.– *शुद्धसत्त्वप्रियत्वात् सात्त्विकः ।**

**र.– *सत्वगुणजन्यत्वात् सात्वं ज्ञानं तद्वान् सात्वी, स्वभक्तं सात्विनं करोति इति सात्त्विकः ।**

**स.– *''सत्त्वसत्त्वमहासत्त्वसूक्ष्मसत्त्वः चतुर्मुखः'' इत्युक्तेः, शुद्धसत्त्वप्रधानः चतुर्मुखः दासत्वेन अस्य अस्तीति सात्त्विकः ।**

**श्री.– *सात्त्विकः = (ज्ञानवद्भक्तकारी) । भक्तज्ञानकारी ।**

## ८७३. सत्यः

वि.– ★सद्भावं उत्पत्तिं जीवनं विशीर्णतां च जगतो यापयतीति सत्यः ।

''सद्भावं यापयेद्यस्मात् सत्यं तत् तेन कथ्यते'' इत्यादिवचनात् ।

र.– ★सतः भक्तान् प्रति याति इति सत्यः ।

स.– ★सत्यः स्वतन्त्रः ।

तथा कर्मनिर्णयटीकोक्तेः ।

''सन्ततेर्यातनाच्चैव ह्यप्राप्यत्वाच्च दुर्जनैः ।
नित्यसाधुगुणव्याप्तियन्तृरूपत्वतः सदा ।
जगद्गतेन रूपेण ब्रह्मैव हि तथोच्यते'' ।। इति ।

★अनुव्याख्यानावसरे सन्ततेः सम्यग्व्याप्तेः यातनाद्यतनं प्रति हेतुत्वाच्च सत्यम् ।

★तथा– नित्यसाधुगुणव्याप्तियन्तृरूपत्वतः सत्यम् ।

श्री.– ★सत्यः = भक्तगामी ।



## ८७४. सत्यधर्मपरायणः

वि.– ★सत्यं ब्रह्म हृदये धारयन्तीति सत्यधर्माणः भक्ताः, तेषां परमयनमिति सत्यधर्मपरायणः ।

र.– ★सत्सु भवः सत्यः स च असौ धर्मश्च सत्यधर्मः, सत्यधर्मेषु सात्विकधर्मेषु परं तात्पर्यं येषां ते सत्यधर्मपराः यदुतुर्वस्वादि भक्तजनाः, तेषाम् अयनम् आश्रयः इति सत्यधर्मपरायणः ।

स.– ★सत्यविपये धर्मः येपान्ते सत्यधर्माः तेपां परायणं मुख्याश्रयः सत्यधर्मपरायणः ।

श्री.– ★सत्यधर्मपरायणः = सात्त्विकधर्मतात्पर्यवदाश्रयः ।



## ८७५. अभिप्रायः

वि.– ★अभिप्रेयते पुरुपार्थकाङ्क्षिभिराभिमुख्येन, प्रायते जगदस्मिन्निति वा अभिप्रायः ।

र.– ★अभि अभितः प्रकर्पेण प्रायः प्रेरणादिक्रिया यस्य इति अभिप्रायः ।

स.– ★अभितः प्रति पूरयतीत्यभिप्रा रमा, "प्रा पूरणे", प्रापयति तोपयतीति अभिप्रायः ।

श्री.– ★अभिप्रायः = सर्वतः प्रकृष्टप्रेरणादिक्रियावान् ।



## ८७६. प्रियार्हः

वि.– ★प्रियान् इष्टान् अर्हतीति प्रियार्हः ।

"यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ।
तत्तद् गुणवते देयं तदेवाक्षयमिच्छता" ॥ इति स्मरणात् ॥

र.– ★प्रियं स्तोत्रं साम च तदर्हति इति प्रियार्हः ।

स.– ★प्रियं सुखविशेपं अर्हतीति प्रियार्हः ।

श्री.– ★प्रियार्हः = स्तोत्रयोग्यः ।



## ८७७. अर्हप्रियकृत् (अर्हः, प्रियकृत्)

वि.– ★सर्वोपचारैः पूजनीयः इति अर्हः ।

★भजतां प्रियं करोतीति प्रियकृत् ।

र.– ★अर्हेभ्यः योग्येभ्यः भक्तेभ्यः प्रियं रक्षणादि करोति इति अर्हप्रियकृत् ।

स.– ★अर्हः पूज्यः । "अर्ह पूजायां" इति धातोः ।

★"परेयं प्रियनामकम् ।" इति तैत्तिरीयभाष्योक्तेः, प्रियं सुखविशेषं करोतीति प्रियकृत् ।

श्री.– ★अर्हप्रियकृत् = भक्तरक्षणादिकर्ता ।



## ८७८. प्रीतिवर्धनः

वि.– ★तेषामेव प्रीतिं वर्धयतीति प्रीतिवर्धनः ।

र.– ★प्रीतिं स्तुतिं वहति इति वा भक्तष्टुतस्तुतिं प्रत्यभिवर्धते इति वा प्रीतिवर्धनः ।

स.– ★प्रीतिं भक्तेषु वर्धयतीति, प्रीत्या भक्तान् वर्धयतीति वा प्रीतिवर्धनः ।

श्री.– ★प्रीतिवर्धनः = स्तुतिवाहः ।



विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग् विभुः ।
रविर्विरोचनः सूर्यः सविता रविलोचनः ॥ ९४ ॥

## ८७९. विहायसगतिः

वि.– *विहायसं विहायः आकाशम्, तस्य गतिरिति वा, तद् गतिरस्य सञ्चारविपयत्वेनेति वा, तत्र गतिरस्येति वा, तद्वद् गतिरस्येति वा विहायसगतिः ।

र.– *गम्यते इति हायसं द्रविणं तस्य विविधस्य दिव्यपार्थिव-रूपेण द्विविधस्य हायसस्य गतिः सम्बन्धः यस्य हस्तयोः सः विहायसगतिः ।

स.– *विहायसो गरुडः तेन गतिः यस्य सः तथा ।

श्री.– *विहायसगतिः = विविधद्रव्यसम्वन्धहस्तः ।



## ८८०. ज्योतिः

वि.– *"जातमोतं हरौ यस्माज्ज्योतिः" इति वचनात् ज्योतिः ।

*स्वतः एव द्योतत इति वा ज्योतिः ।

र.– *ज्योतिः द्युतिः, तदात्मकत्वात् ज्योतिः ।

स.– *ज्योतिः दीप्तः ।

*अनुव्याख्याने– "जातमोतं हरौ यस्मात् ज्योतिः" इत्युक्तम् ।

श्री.– *ज्योतिः = द्युत्यात्मकः ।



## ८८१. सुरुचिः

वि.– *शोभना रुचिर्दीप्तिरिच्छा वा यस्येति सुरुचिः ।

र.– *रोचते इति रुचिः स्तुतिः, सु समीचीना रुचिः स्तुतिः यस्मिन् सः सुरुचिः ।

स.– *शोभना रुचिः यस्य ।

श्री.– *सुरुचिः = सम्यक्स्तुतिः ।



## ८८२. हुतभुक्

वि.– *समस्तदेवतोद्देशेन प्रवृत्तेष्वपि कर्मसु सर्वयज्ञभोक्तृत्वात् स्वयं सर्वदेवतान्तरस्थो हुतं भुङ्क्ते इति हुतभुक् ।

र.– *हुतस्य निहितस्य धनस्य भोक्ता हुतभुक् ।

स.– *हुतं भुङ्क्ते इति हुतभुक् ।

श्री.– *हुतभुक् = धनभोक्ता ।



## ८८३. विभुः

वि.– *विशिष्टभवनाद् विभुः ।

र.– *भवति सर्वदा इति भुर्भूतिः, वि विशेपण वेगवत्तरा भुर्भूतिः यस्य सः विभुः ।

स.– *विशिष्टा भवन्ति अस्मादिति विभुः ।

श्री.– *विभुः = वेगवद्भूतिः ।



### ८८४. रविः

वि.– ★रवणाद् विशिष्टरमणाद् वा रविः ।

★वरज्ञेयत्वाद्वा ।

★"वरज्ञेयो यतो रविः" इति वचनात् शब्दगम्यो वा ।

र.– ★रूयते स्तूयते इति रविः ।

स.– ★"स्वज्ञेयत्वतो रविरिति" गीतातात्पर्योक्तेः अविज्ञेयत्वात् रविः ।

"सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋचः इत्येव विद्यात्" इति श्रुतेः ।

श्री.– ★रविः = स्तव्यः ।



### ८८५. विरोचनः (विलोचनः)

वि.– ★विशेपेण रोचते रव्यादीन् रोचयतीति वा विरोचनः ।

र.– ★लोच्यते अवलोक्यते इति आश्चर्यरूपत्वात् लोचनं वज्रं वि विशेपेण हस्तयोः यस्य सः विलोचनः ।

स.– ★विशिष्टं लोचनं पार्थस्य यस्मात् सः विलोचनः ।

"दिव्यं ददामि ते चक्षुः" इत्युक्तेः ।

★विशिष्टानि रोचनानि सूर्यादिप्रकाशाः यस्मादिति वा ।

"रोचन्ते रोचना दिवि" इति श्रुतेः ।

श्री.– ★विलोचनः = दर्शनीयवज्रकरः ।



## ८८३. सूर्यः

वि.– ★सूते सुवते प्रियमिति सूर्यः ।

★सूरिभिः गम्यत्वाद् वा सूर्यः ''सूर्यः स सूरिगम्यत्वात्'' इति वचनात् ।

र.– ★पार्थिवानि सरति गच्छति इति सूर्यः ।

★यद्वा सूरिभिः ज्ञानिभिः प्राप्यते इति सूर्यः ।

स.– ★सूर्यः सरतीति तथा । ''सृ गतौ'' ।

★सुवति कर्माणि प्रेरयति लोकानिति वा । ''षू प्रेरणे''

★सूरिगम्यत्वाद्वा सूर्यः ।

''सूर्यः स सूरिगम्यत्वात्'' इत्युक्तेः ।

श्री.–★सूर्यः = ज्ञानिप्राप्यः ।



## ८८७. सविता

वि.– ★जगत्स्रष्टृत्वात् सविता ।

''सवितृनामा स्रष्टृत्वतो हरिः'' इति वचनात् ।

र.– ★काम्यानां पुत्रादीनां सविता प्रसविता उत्पादकः सविता ।

स.– ★''स्रष्टृत्वात् सविता विष्णुः'' इत्युक्तेः, सविता स्रष्टा ।

श्री.–★सविता = पुत्राद्युत्पादकः ।



## ८८८. रविलोचनः (अरविलोचनः)

वि.– *रविर्लोचनादस्योत्पन्न इति रविलोचनः ।

"चक्षोः सूर्यो अजायत" इति श्रुतेः ॥

र.– *रविः स्तुतिः, लोचनीयत्वात् लोचनं प्रियं रविः स्तुतिः लोचनं प्रियं यस्य सः रविलोचनः ।

स.– *रविः सूर्यः लोचने यस्य सः रविलोचनः ।

*अरविलोचनः इति च्छेदे – अरमति विले ओचनम्

"उच समवाये" इत्यतः सम्बन्धः यस्य नृसिंहादिरूपेण स तथा ।

तदुक्तं छान्दोग्यभाष्ये–

"कक्षश्वभ्रे नृसिंहस्य सदावस्थितिकारणात् ।
द्रवन्ति कक्षश्वभ्राभ्यां तदज्ञाने विरक्षणात् ।
मृगा भीता यतस्तेषां नृसिंहः स्वाश्रयः सदा" । इति ।

विलोचन इत्यत्र गुणोतताम्, "तदोकोग्रज्वलनं" इत्यादाविव "ओमाङोश्च" इत्यत्र चशब्देन पररूपत्वानुशासनात् वृद्ध्यभावेऽपि न क्षतिः ।

श्री.– *रविलोचनः = स्तुतिप्रियः ।



अनन्तो हुतभुग् भोक्ता सुखदो नैक(जो)दोऽग्रजः ।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥ ९५ ॥

## ८८९. अनन्तः

वि.– *देशकालगुणपरिच्छेदाभावादनन्तः ।

*अनं प्राणं तनोतीति वा, अशब्देन ब्रह्मणा नतो वा, न नतो वा ।

र.– *अनं गमनं तनोति इति अनन्तः । द्वितीयायाः अलुक् । असुराहृतगोग्रहणाय गच्छति इति यावत् ।

स.– *न विद्यते अन्तः बन्धः यस्य सः अनन्तः ।

''अति बन्धने'' ।

*न विद्यते अन्तः नाशः यस्येति वा ।

श्री.–*अनन्तः = गमनविस्तारकः ।



## ८९०. हुतभुग्भोक्ता (हुतभुक्, भोक्ता)

वि.– *हुतं भुनक्ति पालयतीति हुतभुक् ।

*जगद् भुङ्क्तेऽभ्यवहरति भुनक्ति पालयतीति वा भोक्ता ।

र.– *हुतभुजं स्तोतारं पालयति गवादिदानेन इति हुतभुग्भोक्ता ।

स.– *हुतः आहुतः सन् भुङ्क्ते इति हुतभुक् ।

*भोक्ता अभ्यवहर्ता ।

श्री.–*हुतभुग्भोक्ता = स्तोतृपालकः ।



## ८९१. सुखदः

वि.– *सुखं मोक्षलक्षणं भक्तेभ्यो ददातीति सुखदः ।

र.– ★सुष्ठु खनति अशुभम् इति सुखम् । तत् ददाति इति सुखदः ।

स.– ★सुखं ददातीति सुखदः ।

★शोभनानि इन्द्रियाणि ददातीति वा ।

श्री.– ★सुखदः = सम्यगशुभनाशकः ।



## ८९२. नैकजः (अनेकदः)

वि.– ★धर्मसंरक्षणार्थं वहुकृत्वः प्रादुर्भवतीति नैकजः ।

र.– ★अनेकानि वहूनि ददाति इति अनेकदः ।

स.– ★नि नितरां के जायन्ते इति कजानि कमलानि यस्याः सा निकजा रमा, तस्याः अयं स्वामी ।

★नितरां कजानि यस्मिन् तद्वनं निकजं, तत्र भवो नैकजः इति वा ।

"तुलसीकाननं यत्र यत्र पद्मवनानि च ।
वसन्ति वैष्णवा यत्र तत्र सन्निहितो हरिः" ।। इत्युक्तेः ।

★एकस्मादपि न जातो नैकजः इति वा ।

श्री.– ★अनेकदः = वहुदाता ।



## ८९३. अग्रजः

वि.– ★अग्रे जायत इत्यग्रजः ।

र.– ★अग्रे समीपे जः प्रादुर्भूतः स्तोमः यस्य सः अग्रजः ।

स.– ★अग्रे सृष्टेः प्राक् जायते व्यज्यते इत्यग्रजः ।

श्री.–★अग्रजः = समीपाविर्भूतस्तोमवान् ।



## ८९४. अनिर्विण्णः

वि.– ★भगवदनुग्रहमन्तरेण नितरामलब्धः इति अनिर्विण्णः ।

र.– ★निर्गतः विन्नः लाभः अस्मात् इति निर्विण्णः लाभरहितः दुःखी । सः न भवति यस्मात् सः अनिर्विण्णः ।

स.– ★श्रान्तो न भवतीति वा, जगत्सृष्ट्यादौ विरक्तो न भवतीति वा अनिर्विण्णः ।

श्री.–★अनिर्विण्णः = अन्नलाभः ।



## ८९५. सदामर्षी

वि.– ★सतः सज्जनान् आ समन्तात् मृष्यते सहत इति सदामर्षी ।

र.– ★मर्षः सहनं, सदा नित्यं मर्षः सहनम् अस्य अस्ति इति सदामर्षी । सर्वदा प्रजासम्मर्दसहः । सदा सर्वप्रजाश्रयः इति यावत् ।

स.– ★सदा अमर्षः कोपः दैत्येषु अस्य अस्तीति सदाऽमर्षी ।
★सत्सु सज्जनविषये आ सम्यक् मृष्यते क्षमत इति वा ।
★सदामा पाशी वरुणः तं प्रति नन्दगोपसंरक्षणार्थं ऋषति गच्छतीति वा ।

श्री.– *सदामर्षी = प्रजासंमर्दसहः ।



## ८९६. लोकाधिष्ठानम्

वि.– *लोकानामधिकाश्रयत्वाल्लोकाधिष्ठानम् ॥

र.– *लोकाः अधितिष्ठन्ति अत्र इति लोकाधिष्ठानम् ।

स.– *जगदाश्रयः ।

श्री.– *लोकाधिष्ठानं = लोकमुख्याश्रयः ।



## ८९७. अद्भु(तम्)तः

वि.– *आश्चर्यभूतोऽद्भुतः ।

"आश्चर्यो भगवान् विष्णुर्यस्मान्नैतादृशः क्वचित् ।
तस्मात् तद्गोचरं ज्ञानं तद्गोचरवदेव तु ॥" इति ब्रह्मतर्के ।

र.– *अद्यं भोग्यमन्नादिकं भवति अस्मात् इति अद्भुतम् ।

स.– *आश्चर्यरूपः ।

श्री.– *अद्भुतः = अन्नाद्युत्पादकः ।



सनात् सनातनतमः कपिलः कपिरव्य(प्य)यः ।
स्वस्तिदः स्वस्तिकृत् स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः ॥ ९६ ॥

## ८९८. सनात्सनातनतमः (सनात्, सनातनतमः)

वि.– *नादयन्तीति नादो भगवद्विद्याचार्याः, नादन्ति दुर्विषयमिति वा नादः नाद्भिः सह वर्तत इति सनात् ।

*स परमात्मा नेत्येवं ये वदन्ति तानत्तीति वा सनात् ।

*असुराणां सनं फललाभमत्ति नाशयतीति वा सनात् ।

*सदा विद्यमानः सनातनः, अतिशयेन नादवत्त्वाद्वा सनादनः, सनादन एव सनातनः । "नादेन तेन महता सनातन इति स्मृतः" इति मोक्षधर्मे ।

*अतिशयेन सनातनः सनातनतमः ।

र.– *सनं निर्दोषतया सर्वैः सेव्यमानं वेदवाक्यं, तदत्ति अनुभवति तद्विषयो भवति इति सनात् । सनातनेषु अनन्तेषु कालेषु स्थितत्वात् सनातनः, अतिशयेन निर्विकारतया स्थितत्वात् सनातनतमः । सनात् च असौ सनातनतमश्चेति सनात्सनातनतमः ।

स.– *सनं लाभं आतयति गमयतीति सनात् ।

*अतिशयेन सनातनः सनातनतमः ।

*सनं लाभं अतन्ति गच्छन्तीति सनाताः, नता मा रमा यैस्ते नतमाः, सनाता नतमा यस्मादिति वा ।

श्री.– *सनात्सनातनतमः = वेदवाक्यानुभवी अतिनिर्विकारस्थितश्च ।



## ८९९. कपिलः

वि.– *कपिलवर्णः कपिलः ।

*हनुमदादिकपीन् लातीति वा ।

**र.– *भक्तेभ्यः गवाश्वादिकं करोति इति कः, पः प्रकाशः सूर्यादीनां प्रकाशः दातव्यत्वेन अस्य अस्ति इति पी, जगत् परिवर्तयति इति लः, कश्चासौ पी चासौ लश्च इति कपिलः ।**

**स.– *कपिं हनुमन्तं लाति आदत्ते इति कपिलः ।**

गीताभाष्ये तु– "सुखरूपः पाल्यते लीयते च जगदनेनेति कपिलः । "पीतिः सुखं कमानन्दः इत्यभिधानात् । "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति च । "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्, सुखादनन्तात् पालनाच्च यं वै देवं कपिलमुदाहरन्ति" इति च बाभ्रव्यशिखायाम्" इति व्याख्यातः ।

तत्र टीका– सुखरूपः इति कः पाल्यते जगदनेनेति पिः "पा रक्षणे" इत्यतः पिः । लीयते जगदनेनेति लः । "ली श्लेषणे" इत्यस्मात् डः । ला आदाने इत्यतो वा कः, ततः कर्मधारयः इति वा ।

गीतातात्पर्ये तु– "सुखं पिबन् लीलयैव कपिलः" इत्युक्तम् ।

**श्री.– *कपिलः = भक्तगवादिकर्ता, प्रकाशी, जगत्परिवर्तकश्च ।**



## १००. कपिः

**वि.– *कं आनन्दं पिबतीति कपिः ।**

***कं ब्रह्माणं मारुतं ब्रध्नं वा पातीति वा कपिः ।**

**र.– *कं सुखं पिबति इति कपिः, सुखं पिबति अनुभवति तद्वानिति यावत् ।**

**स.– *कं सुखं पिबतीति कपिः ।**

श्री.– *कपिः = सुखानुभवी ।



## ९०१. अप्ययः (अव्ययः)

वि.– *प्रळये जगदप्येत्यस्मिन्निति अप्ययः ।

र.– *अयः स्वर्गादिप्रापकः, व्ययः अप्रापकः, अप्रापकः न भवति सम्यक् स्वर्गादेः प्रापकः इति अव्ययः । अपिशब्दः समुच्चये । अप्ययः इति पाठे स्वर्गादेरपि प्रापक इति योज्यम् ।

स.– *अप्येति जगदस्मिन् प्रलये इत्यप्ययः ।

*अव्ययः इति पाठे– अव्याः रक्षणीयाः तान् याति गच्छतीत्यर्थः ।

श्री.– *अव्ययः = स्वर्गादिप्रापकः ।



## ९०२. स्वस्तिदः

वि.– *भक्तानां मङ्गलं ददातीति स्वस्तिदः ।

र.– *शत्रुहननद्वारा भक्तानां स्वस्ति ददाति इति स्वस्तिदः ।

*सम्यक् अपेक्षणीयतया अस्ति इति सुखं स्वस्ति, तत् ददाति इति स्वस्तिदः ।

स.– *भक्तेभ्यः स्वस्ति मङ्गलं ददातीति स्वस्तिदः ।

श्री.– *स्वस्तिदः = सुखदः ।



## ९०३. स्वस्तिकृत्

वि.– *तदेव (मङ्गलं) करोतीति स्वस्तिकृत् ।

र.– *स्वस्ति सुखं करोति इति स्वस्तिकृत् ।

स.– *"सु शोभना अस्ते"रित्यसधातोः । "ईक्षतेर्नाशब्दम्" । अत्तिमङ्गाङ्गने तृतामित्यादिवत् शितपा निर्देशः । लक्षणया अस्ति सत्ता तां करोतीति स्वस्तिकृत् ।

श्री.– *स्वस्तिकृत् = सुखकर्ता ।



## ९०४. स्वस्ति (स्वस्ती)

वि.– *परमानन्दरूपत्वेन मङ्गलात्मकत्वात् स्वस्ति ।

र.– *भक्तकृतयज्ञादिकं भक्तं च प्रसिद्धं कुर्वन् अस्ति इति स्वस्ति ।

*स्तस्ती इति पाठे - सु सर्वदेशकालेषु अस्तः प्रक्षिप्तः प्रसिद्धः स्वस्तः । स्वस्तः प्रसिद्धः सखा भक्तः अस्य अस्ति इति स्वस्ती ।

स.– *सु अत्यन्तमस्ति सकलदेशकालेषु वर्तते इति स्वस्ति ।

सुबन्तस्य तिङन्तेन समासः ।

"सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा ।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः" ॥ इत्युक्तेः ।

*'स च स्वान स्वस्तये' इति ऋग्भाष्यव्याख्यानावसरे टीकायां स्वस्तये इति सुपूर्वकं सत्तावाचि विभक्तिप्रतिरूपकं अव्ययम् ।

*सत्तावाचिनां सौख्यवाचित्वमपि–

*"सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचकाः" इति प्रमाणसिद्धमित्युक्तेः स्वस्ति सुखरूपः इति वा ।

श्री.– *स्वस्ती = भक्तप्रसिद्धिं कृत्वा स्थाता ।



## ९०५. स्वस्तिभुक्

वि.– *तदेव भुङ्क्ते इति स्वस्तिभुक् । भक्तानां मङ्गलं स्वस्ति भुनक्तीति स्वस्तिभुक् ।

र.– *सु सम्यक् सुगासादादिना संस्कृतं सुगाढम् अस्ति इति स्वस्ति चरुपुरोडाशादि, तदाप्नोति भुङ्क्ते इति स्वस्तिभुक् ।

स.– *स्वस्ति सुखं भोजयतीति स्वस्तिभुक् ।

श्री.– *स्वस्तिभुक् = चर्वादिभोक्ता ।



## ९०६. स्वस्तिदक्षिणः

वि.– *स्वस्तिरूपेण दक्षते वर्धते, स्वस्ति दातुं समर्थ इति वा स्वस्तिदक्षिणः । दक्षिणशब्द आशुकारिणि वर्तते, शीघ्रं स्वस्ति दातुमयमेव समर्थः ।

र.– *स्वस्ति सुखस्य दक्षिणा वर्धयित्र्यः गिरः यस्य सः स्वस्तिदक्षिणः ।

स.– *अस्तिक्षीरा गौः इति वत्, सु सम्यगस्ति दक्षिणा तन्नाम्नी रमा यस्य सः स्वस्तिदक्षिणः ।

''दक्षभागस्थितत्वाच्च दक्षिणा नाम चोच्यते ।
तस्यायनो हि विष्णुः सः दक्षभागस्थितः सदा'' ।
इति ऐतरेयभाष्योक्तेः ।

*स्वस्ति मङ्गलप्रदाने कुशलः इति वा ।

श्री.– *स्वस्तिदक्षिणः = सुखवर्धनगीष्मान् ।



अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शव्दातिगः शव्दसहः शिशिरः शर्वरीकरः ॥ ९७ ॥

## ९०७. अरौद्रः

वि.– *रागद्वेपादिराहित्यादरौद्रः ।

र.– *रुदति अनेन इति रुद्रं दुःखं तज्जनकत्वेन तत्सम्वन्धित्वात् रौद्रं कामक्रोधादिदुःखसाधनम् तत् अस्य नास्ति इति अरौद्रः ।

स.– *अक्रूरः ।

श्री.– *अरौद्रः = कामक्रोधादिरहितः ।



## ९०८. कुण्डली

वि.– *मकरकुण्डलधारित्वात् कुण्डली ।

र.– *कुण्डलं दहनं शत्रूणाम् अस्मात् भवति इति कुण्डली ।

स.– *मकरकुण्डलवान् ।

श्री.– *कुण्डली = शत्रुदहनकारी ।



## ९०९. चक्री

वि.– *चक्रमस्यास्तीति चक्री ।

र.– *क्रियते यज्ञः एभिः इति चक्राः मन्त्राः ते अस्य स्तुतिरूपेण सन्ति इति चक्री ।

स.– *सुदर्शनवान् ।

श्री.– *चक्री = यन्त्री ।



## ९१०. विक्रमी

वि.– *विक्रमः पादविक्षेपः निरतिशयः, शौर्यं वा निरतिशयं अस्यास्तीति विक्रमी ।

र.– *क्रमः शक्तिः, वि विशिष्टः उदकवर्पणे महास्वनादिशक्तिरूपः क्रमः येपां ते विक्रमाः मरुतः, ते अस्य पूजकत्वेन सन्ति इति विक्रमी ।

स.– *पराक्रमशाली ।

श्री.– *विक्रमी = शक्तिमन्मरुद्वान् ।



## ९११. ऊर्जितशासनः

वि.– *श्रुतिस्मृतिलक्षणमूर्जितं शासनमस्येत्यूर्जितशासनः ।

"श्रुतिस्मृती ममैवाऽज्ञे यस्ते उल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णवः" ॥

इति भगवद्वचनात् ।

र.– ***ऊर्जितं प्रकृष्टं दुष्टानां शासनं यस्मात् इति ऊर्जितशासनः ।**

स.– ***ऊर्जितं शासनं यस्य इति तथा ।**

"एकः शास्ता" इति, "एतस्य वा अक्षरस्य प्रशासने गार्गि" इति च श्रुतिः ।

श्री.– ***ऊर्जितशासनः = प्रकृष्टदुष्टशासनः ।**



## ९१२. शब्दातिगः

वि.– ***अपरिमितमहिमत्वेन शब्दमतिक्रम्य गच्छतीति साकल्येन वेदविषयो न भवतीति शब्दातिगः ।**

"यतो वाचो निवर्तन्ते" इत्यादिश्रुतेः ।

र.– ***शब्दः आक्रोशः शत्रुकृतम् आह्वानम् तदतीत्य निराकृत्य गच्छति इति शब्दातिगः ।**

स.– ***शब्दमतिक्रम्य वर्तमानः ।**

'यतो वाचो निवर्तन्ते' इति श्रुतेः । 'अद्भुतत्वादवाच्यं तत्' इत्युक्तेश्च ।

श्री.– ***शब्दातिगः = शब्दकृताह्वानमतीत्य गन्ता ।**



## ९१३. शब्दसहः

वि.– ★वेदैकगम्यत्वाच्छब्दं सहत इति वा शब्दसहः ।

"सर्वे वेदा यत् पदमामनन्ति" इति श्रुतेः ।

र.– ★शब्दः वेदादिः मन्त्रः तं सरति गच्छति इति शब्दसः सोमः, शब्दसं मन्त्रगृहीतं सोमं पातुं गच्छति इति शब्दसहः ।

स.– ★भृग्वादिभक्तकृततर्जनरूपशब्दं तदुपलक्षितताडनादिकं सहते इति शब्दसहः ।

श्री.– ★शब्दसहः = समन्त्रसोमगः ।



## ९१४. शिशिरः (शशिरः)

वि.– ★साधूनां तापत्रयशान्तिहेतुत्वाच्छीतलः शिशिरः ।

★अतिशयितसुखी क्रीडारतश्चेति वा शिशिरः ।

र.– ★शिशिरः दारकः, भक्तजनैः शत्रून् अग्निः वनानि इव दाहयति इति यावत्, इति शिशिरः ।

स.– ★शिशिरः–शिशिनोऽत्यन्तसुखिनः तत्र रमत इति तथा ।

★यद्वा "शश प्लुतगतौ" शशन्ति धावन्ति एनमिति शिशिरः।

★शशिरः इति पाठे– शशिनि चन्द्रे रमते इति वा ।

★"शॄ हिंसायां" शृणाति दैत्यानिति वा ।

श्री.– ★शिशिरः = भक्तशत्रुदारकः ।



## ९१५. शर्वरीकरः

वि.– ★संसारिणामात्मा शर्वरी । ज्ञानिनां पुनः संसारः शर्वरी । तामुभयेषां करोतीति शर्वरीकरः ।

"या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः" ॥
इति च गीतावाक्यम् ॥

र.– ★शर्वरी हिंसा, तां करोति इति शर्वरीकरः ।

स.– ★शर्वर्यां रात्रौ कराः किरणाः यस्य चन्द्रान्तर्गतरूपेणेति । शर्वरीं रात्रिं करोतीति वा ।

"सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" इति श्रुतेः ।

श्री.– ★शर्वरीकरः = शत्रुहिंसाकारी ।



अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणांवरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ ९८ ॥

## ९१६. अक्रूरः

वि.– ★अवाप्तकामत्वेन कामाभावात् तत एव तन्निमित्तक्रोधाभावात् क्रौर्यमस्य नास्तीत्यक्रूरः ।

र.– ★क्रूरः हिंसकः न भवति इति अक्रूरः ।

स.– ★क्रूरो न भवतीत्यक्रूरः ।

★अक्रूरप्रियत्वाद्वा, तत्प्रियत्वात् ताच्छब्द्यम् ।

श्री.– ★अक्रूरः = अहिंसकः ।

## ९१७. पेशलः

वि.– ★कर्मणा मनसा वाचा वपुपा च शोभनत्वात् पेशलः ।

र.– ★गुरुशिष्याभ्यां विचार्यः पेशलः ।

स.– ★पेशलो मनोहरः'।

★ईशं इन्द्रं लाति भक्तत्वेन गृह्णातीति ईशलः, पातीति पः पश्चासावीशलश्चेति वा ।

श्री.–★पेशलः = पृच्छ्यमानः ।



## ९१८. दक्षः

वि.– ★पूर्णशक्तित्वात् शीघ्रकारित्वाच्च दक्षः ।

र.– ★वृद्धः दक्षः ।

स.– ★दक्षः समर्थः ।

"दक्ष गतिहिंसयोः" इति धातोः गन्ता शत्रूणां हन्ता वा ।

श्री.–★दक्षः = वर्धनः ।



## ९१९. दक्षिणः

वि.– ★दक्षति गच्छतीति हिनस्तीति वा दक्षिणः ।

र.– ★वलेन वर्धते समुद्रतरणादि करोति इति दक्षिणः ।

स.– ★दक्षिणः कुशलः । उदारो वा । "दक्षिणो सरलोदारौ" इत्यभिधानात् ।

*"दक्ष वृद्धौ शीघ्रार्थे च" इति, अभिवृद्धः इति वा ।

श्री.– *दक्षिणः = समुद्रतरणार्थं वलवृद्धः ।



## ९२०. क्षमिणांवरः

वि.– *क्षमावतां श्रेष्ठः क्षमिणांवरः ।

*सर्वक्रियाकरणेऽतिक्षम इति वा क्षमिणांवरः ।

र.– *क्षमः सहनं तदेपाम् अस्ति इति क्षमिणः, तेपां सहनशक्तिमतां वरः श्रेष्ठः क्षमिणांवरः । पष्ठ्याः अलुक् ।

स.– *क्षमावतां श्रेष्ठः ।

श्री.– *क्षमिणांवरः = सहनशक्तिमद्वरः ।



## ९२१. विद्वत्तमः

वि.– *निरस्तातिशयं ज्ञानं सर्वदा सर्वगोचरमस्यास्ति नेतरेपामिति विद्वत्तमः ।

र.– *विदं लाभं वाति प्राप्नोति इति विद्वान् । लब्धॄणां श्रेष्ठः विद्वत्तमः ।

स.– *अत्यन्तज्ञानी ।

श्री.– *विद्वत्तमः = लब्धृश्रेष्ठः ।



## ९२२. वीतभयः

वि.– *वीतं विगतं भयमस्येति वीतभयः ।

र.– *भक्तेभ्यो वीतं विगतं भयं यस्मात् सः वीतभयः ।

स.– *भयशून्यः ।

श्री.– *वीतभयः = निर्भयः ।



## ९२३. पुण्यश्रवणकीर्तनः

वि.– *पुण्यं पवित्रं श्रवणं कीर्तनं चास्येति पुण्यश्रवणकीर्तनः । पवित्रितश्रोत्रवान् कीर्तनवान् वा ।

र.– *पुण्यं पवित्रं श्रवणं श्रवणीयं व्रतं कर्म, पुण्यश्रवणस्य कर्मणः कीर्तनं प्रकटनं यस्य सः पुण्यश्रवणकीर्तनः नदीभिः प्रकटितपुण्यकर्मवान् इति यावत् ।

स.– *पुण्ये श्रवणकीर्तने यस्य विषये सः पुण्यश्रवणकीर्तनः ।

श्री.– *पुण्यश्रवणकीर्तनः = पुण्यश्रवणकर्मप्रकटनः ।



उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥ ९९ ॥

## ९२४. उत्तारणः

वि.– *संसारसागरादुत्तारयतीत्युत्तारणः ।

र.– *सिन्धून् सेतुभ्यां तारयति इति उत्तारणः ।

स.– ★उत्तारयतीत्युत्तारणः ।

★उत्कृष्टः तारः प्रणवः येषान्ते उत्ताराः सन्यासिनः तेषां णः सुखं यस्मादिति वा ।

श्री.– ★उत्तारणः = सिन्धुतारकः ।



## ९२५. दुष्कृतिहा

वि.– ★दुष्कृतिं पापं हन्ति इति दुष्कृतिहा ।

र.– ★भोगप्राप्तिप्रतिबन्धकदुष्कर्माणि हन्ति इति दुष्कृतिहा ।

स.– ★दुष्कृतमेषां अस्तीति दुष्कृतिनः पापिनः तान् हन्तीति दुष्कृतिहा ।

श्री.– ★दुष्कृतिहा = दुष्कर्मनाशकः ।



## ९२६. पुण्यः

वि.– ★स्मरणादिकुर्वतां पुण्यं करोति, सर्वेषां श्रुतिस्मृति-लक्षणया वाचा पुण्यमाचष्ट इति वा पुण्यः ।

र.– ★पुनाति आण्डकपालानि भिनत्ति इति पुण्यः ।

स.– ★पुण्यमाचष्टे पुण्यः ।

तत्करोति तदाचष्टे इति णिच् ।

श्री.– ★पुण्यः = अण्डकपालभित् ।



## ९२७. दुःस्वप्ननाशनः

वि.– *भाविनोऽनर्थस्य सूचकान् दुःस्वप्नान् नाशयतीति दुःस्वप्ननाशनः ।

र.– *दुः मिथ्याज्ञानं, स्वप्नम् अज्ञानं च नाशयति इति दुःस्वप्ननाशनः ।

स.– *दुःस्वप्ननाशनः दुःस्वप्नान् नाशयतीति तथा ।

श्री.–*दुःस्वप्ननाशनः = मिथ्याज्ञानाज्ञाननाशकः ।



## ९२८. वीरहा

वि.– *विगत ईरः प्रेरको येषां ते वीराः जीवव्यतिरिक्तपरमेश्वरो नास्तीति वादिनः, तान् हन्तीति निरयं गमयतीति वीरहा ।

''असन्नेव स भवति । असद् ब्रह्मेति वेद चेत्'' इति श्रुतेः ।

र.– *नदीप्रतिरोद्धॄन् वीरान् हन्ति इति वीरहा ।

स.– *वि विशेषेण इरा मद्यं पेयत्वेन येषान्ते वीराः, तान् हन्तीति वीरहा ।

श्री.–*वीरहा = नदीरोधकघ्नः ।



## ९२९. रक्षणः

वि.– *जीवातिरिक्तमीश्वरं वदतां पालनाद् रक्षणः ।

र.– *शाश्वतसुखदानादिना रक्षति इति रक्षणः ।

स.– ★रक्षतीति रक्षणः ।

★अरमत्यन्तं क्षणः उत्सवः यस्येति वा ।

श्री.–★रक्षणः = सुखदानादिना रक्षकः ।



## ९३०. सन्तः

वि.–★विद्याप्रवर्तनाय वहुरूपत्वेन सत्सु स्थित इति सन्तः । सन्तत इति वा ।

र.– ★सं सत्यं समन्ताद्वा धनवलान्नसुखादीन् तनुते स्वात्मनि विस्तारयति इति सन्तः ।

स.– ★सन्तः सम् पूर्वात् तनोतेः डः, व्याप्तः ।

★सन्तः इति वहुरूपविवक्षया वहुवचनान्तो वा, निर्दिष्टो वा सर्वत्र विद्यमानो वा ।

श्री.–★सन्तः = सुखादिविस्तारकः ।



## ९३१. जीवनः

वि.–★सर्वाः प्रजाः जीवयतीति जीवनः ।

र.– ★प्रतिवन्धकपरिहारादिना जगत् जीवयति इति जीवनः ।

स.– ★जीवयतीति जीवनः ।

श्री.–★जीवनः = जगत्प्राणनः ।



### ९३२. पर्यवस्थितः

वि.– *परितः सर्वतः विश्वं व्याप्यावस्थित इति पर्यवस्थितः ।

र.– *परितः पूर्णत्वेन अवस्थितः पर्यवस्थितः ।

स.– *रक्षणार्थात् अवतेः भावे अचि परितः सर्वत्र अवाय रक्षणाय स्थितत्वात् पर्यवस्थितः ।

श्री.– *पर्यवस्थितः = पूर्णत्वेन स्थितः ।



अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥ १०० ॥

### ९३३. अनन्तरूपः

वि.– *अनन्तानि रूपाण्यस्येत्यनन्तरूपः ।

र.– *अनन्तानि रूपाणि यस्य सः अनन्तरूपः ।

स.– *अनन्तानि अपरिमितानि अनाशानि वा रूपाणि यस्य सः अनन्तरूपः ।

श्री.– *अनन्तरूपः = अमितरूपः ।



### ९३४. अनन्तश्रीः

वि.– *अपरिमिता श्रीः परा शक्तिरस्येत्यनन्तश्रीः ।

र.– *श्रयते इति श्रीः शोभा कान्तिः, अनन्ताः श्रियः यस्य सः अनन्तश्रीः ।

स.– *अनन्ता नाशरहिता श्रीः स्वरूपश्रीः यस्य सः तथा ।

''स्वरूपश्रीः तथा भार्या द्वेधा श्रीस्तु हरेर्मता'' इति भागवत-तृतीयतात्पर्योक्तेः ।

श्री.–*अनन्तश्रीः = अमितकान्तिः ।



## ९३५. जितमन्युः

वि.– *जितो मन्युः कोपो येन स जितमन्युः ।

र.– *जितः अभिभूतः मन्युः जरादिदोषः येन सः जितमन्युः ।

स.– *दैत्यविषये जितः प्राप्तः मन्युः येन सः तथा ।

*जिताः प्राप्ताः मन्यवः यज्ज्ञानेनेति वा ।

श्री.–*जितमन्युः = अभिभूतजरादिदोषः ।



## ९३६. भयापहः

वि.– *भयं सांसारिकमपहन्तीति भयापहः ।

र.– *भः शुक्लः परिशुद्धः वेदः, यः आश्रयः, भानां यः आश्रयः वेदप्रतिपाद्यः भयः, पं हिरण्यम्, हं सुखम्, आ समन्तात् हिरण्यं सुखं च यस्मात् सः आपहः, भयश्च असौ आपहश्च भयापहः ।

स.– *भयान्यपहन्तीति तथा ।

श्री.–*भयापहः = वेदप्रतिपाद्यः, हेमसुखदश्च ।



## ९३७. चतुरस्रः

वि.– ★वैषम्याद्यभावेन कर्मानुरूपफलदानाच्चतुरस्रः ।

र.– ★चतुरं याचनीयं सुखं, सरति प्रापयति इति स्रः, चतुरं सुखं प्रापयति इति चतुरस्रः ।

स.– ★सृ गतौ ततः कः चतुरः कुशलश्चासौ स्रो गन्ता चेति तथा ।

श्री.– ★चतुरस्रः = याचनीयसुखप्रापकः ।



## ९३८. गभीरात्मा (अगभीरात्मा)

वि.– ★गभीर आत्मा स्वरूपमस्येति गभीरात्मा ।

र.– ★गाध्यते प्रतिष्ठाप्यते सोमादिः अत्र इति गभीरः, तादृश आत्मा स्वरूपः यस्य सः गभीरात्मा ।

स.– ★गभीरः आत्मा मनः यस्य सः गभीरात्मा ।

★अगेन गोवर्धनेन भियं वृष्टिभयं रेपयति नाशयतीति,

★अगाभ्यां अर्जुनवृक्षाभ्यां भियं उत्पादनभियं राति ददातीति वा, अगभीरः स चसौ आत्मा चेत्यगभीरात्मा ।

श्री.– ★गभीरात्मा = स्तोमाद्याधारस्वरूपः ।



## ९३९. विदिशः

वि.– ★विविधानि फलानि दिशतीति विदिशः ।

र.– *वि अतिशयेन यज्ञक्रियाप्रकारान् दिशति उपदिशति इति विदिशः ।

स.– *विदि ज्ञानिनि शं सुखं यस्मात्सः विदिशः ।

विदामीशे विस्मयमुखे यस्मादिति वा ।

श्री.–*विदिशः = विशेषेणोपदेशकः ।



## ९४०. व्यादिशः

वि.– *विविधमाज्ञापयतीति व्यादिशः ।

र.– *भक्तानां बहुजनपोषकत्वादिधर्मं व्यादिशति ददाति इति व्यादिशः ।

स.– *विः गरुड एव आदिः येषान्ते व्यादयः तेषां शं यस्मात्सः व्यादिशः ।

*विशेषेण आदिशति आज्ञापयति इति वा ।

श्री.–*व्यादिशः = बहुपोषणसामर्थ्यदः ।



## ९४१. दिशः

वि.–*सर्वकर्मफलं दिशति इति ददातीति दिशः ।

र.– *दिश्यते भक्तैः पृच्छ्यते इति दिशः ।

स.– *"दिङ्नामानश्चेह प्रोक्ताः धर्मज्ञानातिदेशनात्" इति छान्दोग्यभाष्योक्तेः धर्मादिदातारः, बहुरूपत्वात् बहुवचनम् । दिश् अतिसर्जने ।

श्री.– ★दिशः = भक्तपृच्छ्यः ।



अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ १०१ ॥

## ९४२. अनादिः

वि.– ★आदिः कारणमस्य नास्तीति अनादिः ।

★अनश्चेष्टयिता आदिश्च सर्वस्येति वाऽनादिः ।

★अनस्य अपि आदिः अनादिः इति वा ।

★आदिरस्य नास्तीति नादिः, अश्च नादिश्चेति वा ॥

र.– ★न विद्यन्ते आदिमध्यान्तानि यस्य सः अनादिः ।

स.– ★अनः मुख्यप्राणः आदीयते भक्तोत्तमत्वेन उपादीयते येन सः अनादिः ।

श्री.– ★अनादिः = आदिमध्यान्तरहितः ।



## ९४३. भूर्भुवोलक्ष्मीः (भूर्भुवः, लक्ष्मीः)

वि.– ★भुवो भूमेः भूः आश्रयः ।

★तस्या एव लक्ष्मीः । तयोर्लक्ष्मीरिति वा ।

र.– ★भवति यज्ञगृहे एवं अभिव्यक्तः इति भूः, भूत्याः कामप्रदानादिरूपैश्वर्येण वरः, भुवः सर्वकामप्रदः, लक्षयति प्रकाशयति इति लक्ष्मीः, भूः च असौ भुवः च असौ लक्ष्मीः च भूर्भुवोलक्ष्मीः ।

*यद्वा भूः भूमिः संसारपारभूमित्वात् भगवत्स्वरूपं, तस्या लक्ष्मीः प्रकाशकः भुवर्लक्ष्मीः, भूश्चासौ भुवर्लक्ष्मीश्च इति भूर्भुवोलक्ष्मीः ।

स.– *पूर्णत्वात् भूः । जगत्कारणत्वात् भुवः । तदुक्तमनुव्याख्याने– "व्याहृतीनां च भूमतः । भावनाच्चैवेति" । तत्र सुधा– भूमा पूर्णत्वं ततो भूः । भवतेः बहुत्वार्थस्य क्विपि रूपमेतत् । भावनात् जगदुत्पादनात् भुवः । भवतेः अन्तर्णीतण्यर्थस्य कप्रत्यये रूपमिति ।

*लक्ष्मीः– 'लक्षेः मुट्' 'लक्षदर्शनाङ्कनयोः' इत्यतः ईप्रत्ययः मुडागमश्च । लक्षयति पुण्यकृतो लक्षते वा पुण्यकृद्भिः इति तथा ।

श्री.–*भूर्भुवोलक्ष्मीः = यज्ञे भवन्, ऐश्वर्यवरः, प्रकाशकश्च ।



## ९४४. सुवीरः

वि.– *शोभना विविधा गतयोऽस्येति सुवीरः ।

र.– *सु भृशं अत्यन्तसमृद्धं वा वीरः उत्तमः सुवीरः ।

स.– *सुवीरः सुष्ठु विशिष्टः ईरः मुख्यप्राणः येन सः तथा ।

श्री.–*सुवीरः = अत्युत्तमः ।



## ९४५. रुचिराङ्गदः (अरुचिराङ्गदः)

वि.– *रुचिरे कल्याणे अङ्गदे अस्येति रुचिराङ्गदः ।

*वालिसुतोऽङ्गदो यतो रुचिरो जात इति वा ।

*रुचिराङ्गं ददातीति वा, द्यति वा ।

र.– *रोचते इति रुचिरं शोभनम्, अग्यते इति अङ्गं राधः संसिद्धिः, रुचिरम् अङ्गं संसिद्धिं ददाति इति रुचिराङ्गदः ।

स.– *रुचिरं मनोहरं अङ्गं स्वरूपदेहं ददातीति तथा ।

*मनोहरबाहुभूषणो वा ।

*अरुचिरं अमनोहरं लिङ्गदेहं द्यति खण्डयति इति वा ।

श्री.– *रुचिराङ्गदः = शोभनसिद्धिदः ।



## ९४६. जननः

वि.– *जनान् नयतीति जननः ।

*यद्वा जन्तून् जनयतीति जननः ।

र.– *जन्यते सख्यम् अनेन इति जननः ।

स.– *जनयतीति वा जनं नयतीति वा जननः ।

श्री.– *जननः = सख्योत्पत्तिसाधनः ।



## ९४७. जनजन्मादिः

वि.– *जनस्य जन्मवतः जन्मनः उद्भवस्य आदिर्मूलकारणमिति जनजन्मादिः ।

र.– *जनो जयः तस्य जन्म उत्पत्तिः यस्मात् भवति सः जनजन्मा रथः, रथे हि स्थित्वा शत्रून् जयति । जनजन्मानं रथम् आप्नोति अधितिष्ठति इति जनजन्मादिः ।

स.– *जनानां जन्मादिः यस्मादिति जनजन्मादिः ।

श्री.– *जनजन्मादिः = रथस्थायी ।



## ९४८. भीमः

वि.– *बिभेत्यस्माज्जगदिति भीमः ।

*भृतप्रमाणो वा ।

र.– *बिभ्यति अस्मात् असुरजनाः इति भीमः ।

स.– *भीमः भयङ्करः । प्राणधारको वा । "भृतमो भीम" इत्युक्तेः ।

श्री.– *भीमः = असुरभयकारी ।



## ९४९. भीमपराक्रमः

वि.– *असुराणां भयहेतुः पराक्रमोऽस्येति भीमपराक्रमः ।

र.– *भीमशब्दः अश्वपरः । परान् उत्तमान् आशास्यान् काम्यान् आ समन्तात् दातुं चरणविक्षेपः आगमनं पराक्रमः । भीमाभ्यां शत्रुभयङ्कराभ्याम् अश्वाभ्यां पराक्रमः आगमनं यस्य सः भीमपराक्रमः ।

स.– *भीमस्य द्रौपदीपतेः रुद्रस्य वा पराक्रमः यस्मात् सः तथा ।

श्री.–*भीमपराक्रमः = भयकार्याश्वाभ्याम् इष्टदाने आगन्ता ।



आधारनिलयो धाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ १०२ ॥

## ९५०. आधारनिलयः

वि.– *आधाराणामाधारत्वात् आधारनिलयः ।

र.– *आ समन्तात् ध्रियते अत्र नमःशब्द इति आधारो यज्ञः, नितरां लीयते श्लिष्यते इति निलयः, आधारं यज्ञं लीयते सङ्गतो भवति इति आधारनिलयः ।

स.– *न विद्यते धारः धारकः येषान्ते अधाराः दैत्याः तेषां समूहः आधारं तस्य निरयः नरकः ।

*आ समन्तात् धारा देवेन्द्रकृतवृष्टिधारा येषान्ते आधाराः गोपालाः तेषां गोवर्धनधारणेन निलयः आश्रयः इति वा ।

श्री.–*आधारनिलयः = यज्ञसङ्गतः ।



## ९५१. धाता

वि.– *स्वानन्दं पिबतीति वा, प्रळये सर्वं जगत् पिबतीति वा, सृष्ट्यर्थं प्रळयकालीनं तमः पिबतीति वा धाता । धेट् पाने ।

र.– *यज्ञे धानादिकं स्वोदरे धत्ते इति धाता ।

स.– *धारणपोषणकर्ता ।

श्री.–*धाता = यज्ञे धनादिधारकः ।

## ९५२. पुष्पहासः

वि.– ★पुष्पवत् हासोऽस्येति पुष्पहासः ।

र.– ★स्वभक्तं स्वजनानां पुष्पं पोषकं हासयति शब्दयति इति पुष्पहासः ।

स.– ★कुन्दपुष्पवत् हासः यस्य सः तथा ।

श्री.– ★पुष्पहासः = पोषकत्वेन भक्तप्रसिद्धिकारी ।



## ९५३. प्रजागरः

वि.– ★नित्यप्रबुद्धरूपत्वात् प्रजागरः । जन्मादेर्विषादिरूपो वा ।

र.– ★प्रकर्षेण भक्तान् जागरयति निद्रारहितान् मुक्तान् करोति इति प्रजागरः ।

स.– ★प्रकर्षेण जागर्तीति वा, प्रजाः सृष्टिकाले गिरतीति वा प्रजागरः ।

★प्रकर्षेण जनयति लोकानिति प्रजः, अगेषु वेङ्कटादिपर्वतेषु रमते इत्यगरः, प्रजश्चासावगरश्चेति वा ।

श्री.– ★प्रजागरः = भक्तनिन्दाक्षयकारी ।



## ९५४. ऊर्ध्वगः

वि.– ★सर्वेषामुपरि गच्छतीति ऊर्ध्वगः ।

र.– ★ऊर्ध्वाः द्युलोकप्रकाशकाः ये उत्तमाः अश्वाः तैः यज्ञवाटं गच्छति इति ऊर्ध्वगः ।

स.– *ऊर्ध्वेषु वैकुण्ठादिषु तिष्ठतीति वा,

*ऊर्ध्वान् वैकुण्ठादीन् गमयतीति वा ।

श्री.– *ऊर्ध्वगः = उत्तमाश्वगन्ता ।



## ९५५. सत्पथाचारः (सप्तधाचारः)

वि.– *सन्मार्गे वर्तमानो वर्तयन् वा सत्पथाचारः ।

र.– *सप्तः स्वापः मिथ्याज्ञानं तत् दधते इति सप्तधाः असुरजनाः तान् चारयति स्वस्थानात् अपगमयति इति सप्तधाचारः ।

स.– *सत्पथेषु नक्षत्रादिषु आ सम्यक् चरति चन्द्राद्यन्तर्गत-रूपेणेति सत्पथाचारः ।

*सत्पथे सन्मार्गे आचारयति योग्यानिति वा ।

श्री.– *सत्पथाचारः = मिथ्याज्ञान्यपगमः ।



## ९५६. प्राणदः

वि.– *मृतान् परीक्षिदादीन् जीवयन् प्राणदः ।

र.– *वृत्रादिप्राणान् द्यति खण्डयति इति प्राणदः ।

*यद्वा प्राणनहेतुत्वात् प्राणाः अन्नादीनि; तानि भक्तेभ्यः ददाति इति प्राणदः ।

स.– *प्रकर्षेण गतिं ददातीति प्राणदः । अण रण वण भण मण कण क्वण व्रण भ्रण ध्वण शब्दार्थाः इति धातुव्याख्यानात् ।

*प्रकर्षेण अणं तेज आदिरूपं शब्दं ददाति चतुर्मुखायेति वा ।

श्री.– *प्राणदः = वृत्रादिप्राणखण्डनः ।



### ९५७. प्रणवः

वि.– *"सर्वा ऋचो यजूंषि सामान्यथर्वाङ्गिरसश्च यज्ञे ब्रह्म ब्राह्मणेभ्यः प्रणयन्ति तस्मादुच्यते प्रणवः" इति श्रुतेः प्रणवः ।

र.– *प्रकर्षेण नवः नव्यः महिमा यस्य सः प्रणवः ।

स.– *चतूरूपस्य विष्णोः नाम प्रणव इत्यपि । जाग्रदादि-प्रणयनात् इत्युक्तेः प्रणयनात् प्रणवः ।

*यद्वा प्रकर्षेण णः सुखं येषान्ते प्रणाः मुक्ताः तान् वर्तयतीति प्रणवः ।

श्री.– *प्रणवः = प्रकृष्टस्तुत्यमहिमवान् ।



### ९५८. पणः

वि.– *नामरूपव्यवहारकारणत्वात् पणः ।

*कर्माणि स्वीकृत्य कर्मिभ्यः फलप्रदानाद्वा पणः ।

र.– *पणयति व्यवहारेषु देवान् प्रवर्तयति इति पणः ।

स.– *पण्यते जनैः स्तूयते इति वा व्यवहरतीति वा तथा ।

"पण व्यवहारे स्तुतौ च" इत्युक्तेः ।

श्री.– *पणः = व्यवहारप्रवर्तकः ।



प्रमाणं प्राणनिलयः प्राणभृत् प्राणजीवनः ।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥ १०३ ॥

## ९५९. प्रमाणम्

वि.– *प्रत्ययितव्यतमत्वात् प्रमाणम् ।

र.– *प्रगतं मानं मितिः यस्मात् सः प्रमाणम् ।

स.– *प्रकृष्टं मानं ज्ञानं यस्य तत् प्रमाणम् ।

*यद्वा "माङ् माने" इति धातोः भावे ल्युटि प्रमितिः प्रमाणं, "विज्ञानमानन्दं ब्रह्म" इति श्रुतेः ।

*अथवा एतस्मादेव करणे ल्युटि प्रमीयते अनेन चक्षुराद्यन्तर्गतेन इति प्रमाणम् ।

"यश्चक्षुरन्तस्थो यमयति," "यः श्रोत्रमन्तस्थो यमयति" इत्यादिश्रुतेः ।

*यद्यपि ल्युट् भावकरणयोरिव अधिकरणेऽपि स्मर्यते । तथापि तत्र प्रमाणशब्दस्य अभिधानाभावात् न तत्र वृत्तिः । कृत्तद्धितसमासानां अभिधानाधीनत्वात् । नन्वस्ति विप्राः प्रमाणं इति अधिकरणेऽपि प्रयोगः । मैवम् । विप्राणां प्रमायां स्वातन्त्रेण कर्तॄणां अधिकरणत्वाभावात् । न हि क्रियाधारोऽधिकरणम् । किन्नाम कर्तृकर्मणोः, क्रियाश्रययोः धारणक्रियां प्रति य आधारः तत्कारकं तस्मात् तदीयविज्ञानस्य वाक्यस्य वा प्रामाण्यात् विप्राः प्रमाणं इत्युपचर्यते ।

श्री.– *प्रमाणं = अमितः ।



## ९६०. प्राणनिलयः

वि.– *प्राणानामिन्द्रियाणां वायूनां वाऽस्मिन् निलयनात् तदाधारत्वाद्वा प्राणनिलयः ।

र.– *प्रकृष्टाः अनाः चेष्टाः यासां ताः प्राणाः नद्यः ताः निलीयन्ते समुद्रेण संश्लिष्यन्ते अनेन इति प्राणनिलयः ।

स.– *प्राणस्य वायोः निलयः आश्रयः ।

श्री.– *प्राणनिलयः = नदीसमुद्रमेलकः ।



## ९६१. प्राणभृत् (प्राणदः)

वि.– *प्राणान् विभर्तीति प्राणभृत् ।

र.– *प्र प्रगताः अनाः चेष्टाः यासां ताः बलेनावरुद्धगतयः गावः प्राणाः, तासां प्रकर्षेण अनः प्राणः, तं ददाति वहिर्निर्गमनेन स्वेच्छया गाः सञ्चारयति इति प्राणदः ।

स.– *प्राणानि इन्द्रियाणि विभर्तीति वा ।

श्री.– *प्राणभृत् = रुद्धगोगतिदः ।



## ९६२. प्राणजीवनः

वि.– *प्राणिनो जीवयतीति प्राणजीवनः ।

"न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" ।। इति श्रुतेः ।

**र.– ★अनः चेष्टा येषां ते प्राणाः जनाः, तेषाम् जीवनम् एतदुपलक्षिताशेषव्यापारान् करोति इति प्राणजीवनः ।**

**स.– ★प्राणेन मुख्यप्राणेन जीवयति जनानिति प्राणजीवनः ।**

**श्री.–★प्राणजीवनः = जनसर्वव्यापारकारी ।**



## ९६३. तत्त्वम्

**वि.– ★कालत्रयेऽप्येकप्रकारं तत्त्वम् ।**

"अतीतानागते काले यत् तादृशमुदीर्यते ।
कुतश्चिदन्यथा नेयात् तत् तत्त्वं तत्त्वतो विदुः" ।।

इति महासंहितायाम् ।

**र.– ★तनोति इति तत् वृद्धिः, तत् वाति गच्छति इति तत्वम् ।**

**स.– ★तत्त्वमनरोपितस्वरूपम् ।**

**★तत्त्वं = वृद्धिगन्ता ।**

"वदन्ति तत्तत्वविदः तत्त्वं यज्ज्ञानमद्धयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" । इति भागवतोक्तेः ।

**★गुणैः ततत्वात् तत् । "गुणैः ततः प्रसविता" इत्यादेः । त् च तत् वश्च इति त्वम् । ततो वेत्तीति च त्वं, सः इत्यैतरेयभाष्योक्तेः । तच्च तत् त्वश्च इति तत्त्वम् ।**

चतुर्थतात्पर्ये तु– ''तत्वं नरेन्द्र जगतामयतस्थुषां च'' । इति श्लोकव्याख्यानावसरे ''सर्वसत्ताप्रदत्वात्तु सर्वतत्त्वं हरिः स्मृतः'' । सर्वत्र विदितत्वाद्वा'' इत्युक्तम् ।



## ९६४. तत्त्ववित् (तत्त्वविदेकात्मा)

वि.– ★तादृशं तत्त्वं वेत्तीति तत्त्ववित् ।

र.– ★तत्वं वेत्ति इति तत्ववित्, तस्मै तत्वविदे एकं मुख्यं वलादिकम् आतनोति इति तत्त्वविदेकात्मा ।

श्री.– ★तत्त्वविदेकात्मा = तत्त्वविन्मुख्यवलादिदः ।



## ९६५. एकात्मा

वि.– ★''एकात्मा हरिरुद्दिष्टः प्रधानत्वात् समस्तशः'' इति वचनात् एकात्मा ।

स.– ★एक आत्मा मुख्यस्वामी ।



## ९६६. जन्ममृत्युजरातिगः

वि.– ★जन्ममृत्युजरा अतीत्य वर्तत इति जन्ममृत्युजरातिगः । ''न जायते म्रियते वा कुतश्चित्'' इत्यादिश्रुतेः । जन्मनो मृत्युः जराहीनश्चेति वा ।

र.– ★जन्मादीनाम् अतिक्रमणं यस्य तज्जन्ममृत्युजराति आनन्दात्मकं शरीरं, तत् गच्छति इति जन्ममृत्युजरातिगः ।

"न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" ॥ इति श्रुतेः ।

**र.– *अनः चेष्टा येषां ते प्राणाः जनाः, तेषाम् जीवनम् एतदुपलक्षिताशेषव्यापारान् करोति इति प्राणजीवनः ।**

**स.– *प्राणेन मुख्यप्राणेन जीवयति जनानिति प्राणजीवनः ।**

**श्री.– *प्राणजीवनः = जनसर्वव्यापारकारी ।**



## ९६३. तत्त्वम्

**वि.– *कालत्रयेऽप्येकप्रकारं तत्त्वम् ।**

"अतीतानागते काले यत् तादृशमुदीर्यते ।
कुतश्चिदन्यथा नेयात् तत् तत्त्वं तत्त्वतो विदुः" ॥
इति महासंहितायाम् ।

**र.– *तनोति इति तत् वृद्धिः, तत् वाति गच्छति इति तत्वम् ।**

**स.– *तत्त्वमनरोपितस्वरूपम् ।**

***तत्त्वं = वृद्धिगन्ता ।**

"वदन्ति तत्तत्वविदः तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" । इति भागवतोक्तेः ।

***गुणैः ततत्वात् तत् । "गुणैः ततः प्रसविता" इत्यादेः । त् च तत् वश्च इति त्वम् । ततो वेत्तीति च त्वं, सः इत्यैतरेयभाष्योक्तेः । तच्च तत् त्वश्च इति तत्त्वम् ।**

चतुर्थतात्पर्ये तु– ''तत्वं नरेन्द्र जगतामयतस्थुषां च'' । इति श्लोकव्याख्यानावसरे ''सर्वसत्ताप्रदत्वात्तु सर्वतत्त्वं हरिः स्मृतः'' । सर्वत्र विदितत्वाद्वा'' इत्युक्तम् ।



## ९६४. तत्त्ववित् (तत्त्वविदेकात्मा)

वि.– ★तादृशं तत्त्वं वेत्तीति तत्त्ववित् ।

र.– ★तत्वं वेत्ति इति तत्ववित्, तस्मै तत्वविदे एकं मुख्यं वलादिकम् आतनोति इति तत्त्वविदेकात्मा ।

श्री.– ★तत्त्वविदेकात्मा = तत्त्वविन्मुख्यवलादिदः ।



## ९६५. एकात्मा

वि.– ★''एकात्मा हरिरुद्दिष्टः प्रधानत्वात् समस्तशः'' इति वचनात् एकात्मा ।

स.– ★एक आत्मा मुख्यस्वामी ।



## ९६६. जन्ममृत्युजरातिगः

वि.– ★जन्ममृत्युजरा अतीत्य वर्तत इति जन्ममृत्युजरातिगः । ''न जायते म्रियते वा कुतश्चित्'' इत्यादिश्रुतेः । जन्मनो मृत्युः जराहीनश्चेति वा ।

र.– ★जन्मादीनाम् अतिक्रमणं यस्य तज्जन्ममृत्युजराति आनन्दात्मकं शरीरं, तत् गच्छति इति जन्ममृत्युजरातिगः ।

स.– *जनन–मरण–जराः तदुपलक्षितयावद्दोपान् अतिक्रम्य वर्तमानः ।

श्री.– *जन्ममृत्युजरातिगः = आनन्ददेहगः ।



भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ १०४ ॥

## ९६७. भूर्भुवःस्वस्तरुः

वि.– *भूर्भुवःस्वःसंज्ञकानां लोकानामाधारो भूर्भुवःस्वस्तरुः ।

''तस्मै नमो भगवते भुवनद्रुमाय'' इति भागवते ।

''पूर्णो भूतिवरोऽनन्तसुखो यद् व्याहृतीरितः'' इति वा ।

''व्याहृतीनां च भूमतः । भावनाच्चैव सुत्वाच्च'' इति वा ।

भूर्नामा स्फूर्तिरूपत्वात् भूरिवीर्यत्वतो भुवः ।

सुवः सुबलरूपत्वात्'' इति वा ।

*''भूर्भुवःस्वः तरुश्चेति भूर्भुवःस्वस्तरुः ।

र.– *भूः च भुवः च स्वः च इति त्रयो लोकाः भूर्भुवःस्वः तत्स्थितानां जनानां तरति ददाति इति भूर्भुवःस्वस्तरुः ।

स.– *भूः पूर्णः, भू वहौ पूर्णतायाम् । भुवः ऐश्वर्येण वरः । स्वः अनन्तसुखः । तदुक्तं ऋग्भाष्ये– ''पूर्णो भूतिवरोऽनन्तसुखो यद्व्याहृतीरितः'' इति । तत्र टीका– ''यद्यस्मात् एवमेकार्थः तस्मात् व्याहृतिरीरितः । स एव प्रणवार्थे व्याहृतयः इति वचनात् किं निमित्तम् । यद्यस्मात् पूर्णो भूतिवरो अनन्तसुखश्च । यथोक्तम्–

"वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योग्यः तदुच्यते पञ्चविधं निरुक्तम्" ।। इति ।

**श्री.– *भूर्भुवस्स्वस्तरुः = त्रिलोकस्थजननेता ।**



## ९६८. तारः

**वि.– *तरन्त्यनेनानिष्टनिचयमिति तारः ।**

**र.– *तारयति इति तारः ।**

**स.– *तारः ओङ्कारः ।**

वाच्यवाचकयोरैक्योपदेशस्तु अयं वै लोकः प्रथमा महानाम्नी इत्यादौ दृष्टः । उपपादितं च एतत् कर्मनिर्णये–

"प्रथमा या महानाम्नी तद्वाच्यः पार्थिवो हरिः ।
द्वितीयाया अन्तरिक्षः तृतीयाया द्युगः प्रभुः" । इति ।

**श्री.– *तारः = तारकः ।**



## ९६९. सविता (स्वपिता)

**वि.– *सर्वलोकजनकत्वात् सविता । स्वपितेति पाठे योगनिद्राशीलः ।**

**र.– *सविता एव सविता सर्वप्राणिनां बिम्ब इति यावत् ।**

**स.– *गुणैः ततः प्रसविता इत्युक्तेः स्रष्टृत्वात् सविता ।**

**श्री.– *सविता = सूर्यसदृशः ।**



## ९७०. प्रपितामहः

वि.– *पितामहस्यापि पितेति प्रपितामहः ।

र.– *प्रपीन् मिथ्याज्ञानादिरूपपापवतः असुरान् तामयति हन्ति च इति प्रपितामहः ।

स.– *लोकपितॄणां मरीच्यादीनां पिता पितामहः चतुर्मुखः, तस्य पितृत्वात् प्रपितामहः, सर्वजनोपास्यमूर्तिरियम् ।

तदुक्तं भागवतदशमतात्पर्ये सप्तविंशे अध्याये–

''पतित्वेन श्रियोपास्यो ब्रह्मणा मत्पितेति च ।
पितामहस्तथान्येषां त्रिदशानां जनार्दनः ।
प्रपितामहो मे भगवान् इह सर्वजनस्य च'' ।। इति वाराहे ।

श्री.– *प्रपितामहः = असुरहन्ता ।



## ९७१. यज्ञः

वि.– *स्वरूपमेवाऽनन्दादिहविः, स्वयमेवाग्निर्भगवान् भुङ्क्ते इति यज्ञः ।

''दैवमेवापरे यज्ञम्'' इत्यादि च ।

र.– *यजः कर्मत्यागिनः तान् मृतिं नयति प्रापयति इति यज्ञः । यद्वा योग्यतया अयज्वानं हन्ति इति सिध्यति ।

स.– *यज्ञभोक्तृत्वात् यज्ञः ।

*यद्वा ''जपयज्ञश्चेज्यां तपोयाज्य एव च'' इति गीता-तात्पर्योक्तेः याज्यत्वात् यज्ञः ।

श्री.– ★यज्ञः = कर्मत्यागिमारकः ।



## ९७२. यज्ञपतिः

वि.– ★"ज्ञो नाम भगवान् विष्णुस्तं यात्युद्देश एष यः ।
स यज्ञ इति सम्प्रोक्तो विहिते कर्मणि स्थितः" ॥

इत्येवं लक्षणको यज्ञः, तत्स्वामित्वाद् यज्ञपतिः ।

र.– ★यज्ञः देवपूजारहितः असुरादिः, तं पातयति इति यज्ञपतिः ।

★यद्वा नदीनां खण्डयिता यज्ञः तं यज्ञं असुरं पातयति इति यज्ञपतिः ।

स.– ★यज्ञानां पालनात् स्वामित्वाद्वा यज्ञपतिः ।

श्री.– ★यज्ञपतिः = असुरपातनः ।



## ९७३. यज्वा

वि.– ★यजमानेषु स्थित्वा स्वात्मानं स्वयमेव यजतीति यज्वा ।

र.– ★यज् यागः सः अस्य प्रवर्त्यतया अस्ति इति यज्वा । यज्ञविघ्नकारिणः दैत्यान् हत्वा नदीः गमयित्वा यज्ञान् प्रवर्तयति इति यावत् ।

स.– ★यष्टृत्वात् यज्वा ।

श्री.– ★यज्वा = यज्ञप्रवर्तकः ।



### ९७४. यज्ञाङ्गः

वि.– ★यज्ञानि अङ्गान्यस्येति वराहमूर्तिः यज्ञाङ्गः ।

र.– ★यज्ञेन पूज्येन बलेन पर्वतान् अपि अङ्गयति चालयति इति यज्ञाङ्गः ।

स.– ★यज्ञोद्देश्यत्वात् यज्ञाङ्गः ।

श्री.– ★यज्ञाङ्गः = पूज्यबलेन पर्वतचालकः ।



### ९७५. यज्ञवाहनः

वि.– ★यज्ञान् वाहयति प्रवर्तयतीति यज्ञवाहनः ।

र.– ★यजमानऋत्विगादिवृद्धिकरणद्वारा यज्ञं वहति प्रवर्तयति इति यज्ञवाहनः ।

स.– ★यज्ञं वहन्तीति यज्ञवाहाः तान्नयतीति यज्ञवाहनः ।

श्री.– ★यज्ञवाहनः = यजमानादिवृद्ध्या यज्ञप्रवर्तकः ।



यज्ञभृद् यज्ञकृद् यज्ञी यज्ञभुग् यज्ञसाधनः ।
यज्ञान्तकृद् यज्ञगुह्यमन्नमन्नाद एव च ॥ १०५ ॥

### ९७६. यज्ञभृत् (यज्ञकृद्यज्ञभृत्)

वि.– ★यज्ञं बिभर्तीति यज्ञभृत् ।

र.– ★यज्ञकृते यजमानाय दातुं यज्ञम् अन्नादिदानं बिभर्ति इति यज्ञकृद्यज्ञभृत् ।

स.– *यज्ञं बिभर्तीति यज्ञभृत् ।

श्री.– *यज्ञकृद्यज्ञभृत् = यजमानाय अन्नादिदानभृत् ।



## ९७७. यज्ञकृत्

वि.– *यज्ञं करोतीति यज्ञकृत् ।

स.– *यज्ञं करोतीति यज्ञकृत् ।

"विज्ञानं यज्ञं तनुते, कर्माणि तनुतेऽपि च" इति श्रुतेः ।



## ९७८. यज्ञी

वि.– *यज्ञः शेषभूतोऽस्येति यज्ञी ।

र.– *पूर्ववत् यज्ञं दानं तदस्य अस्ति इति यज्ञी ।

स.– *यज्ञः अस्य अस्तीति यज्ञी ।

श्री.– *यज्ञी = दानी ।



## ९७९. यज्ञभुक्

वि.– *यज्ञं पालयतीति यज्ञभुक् ।

र.– *यज्ञः पूज्यः शुभादिः, तं भुंक्ते इति यज्ञभुक् ।

स.– *यज्ञं भुङ्क्ते इति वा यज्ञं भोजयतीति वा यज्ञभुक् ।

श्री.– *यज्ञभुक् = शुभादिभोगी ।



### ९८०. यज्ञसाधनः

वि.– ★यज्ञः साधनं तत्प्राप्ताविति यज्ञसाधनः ।

र.– ★यज्ञशब्दः शुभवाची, तं साधयति इति यज्ञसाधनः ।

स.– ★यज्ञस्य साधनं स्रुक्स्रुवादिकं मन्त्रादिकं वा यस्मादिति यज्ञसाधनः ।

श्री.– ★यज्ञासाधनः = शुभसाधनः ।



### ९८१. यज्ञान्तकृत्

वि.– ★यज्ञस्यान्तं फलप्राप्तिं निर्णयं वा करोतीति यज्ञान्तकृत् ।

र.– ★यज्ञादिकर्मणाम् अन्तं करोति इति यज्ञान्तकृत् । भक्तेषु अन्तर्यामितया स्थित्वा यज्ञादिकं करोति ।

स.– ★यज्ञस्यान्तः निर्णयः तं करोतीति यज्ञान्तकृत् ।

★यज्ञस्य अन्तः नाशः येभ्यस्ते यज्ञान्ताः सुबाहुमारीचादयः तान् कृणोतीति वा ।

श्री.– ★यज्ञान्तकृत् = शुभकर्मणां गमनकर्ता ।



### ९८२. यज्ञगुह्यः (यज्ञगुह्यम्)

वि.– ★गुह्यो यज्ञो ज्ञानरूपत्वादिति यज्ञगुह्यः ।

र.– ★यज्ञासाधनत्वात् पूज्यत्वात् वा यज्ञाः वेदवाचः । तासां गुह्यं रहस्यं परममुख्यया वृत्त्या प्रतिपाद्यः यज्ञगुह्यः । प्रतिपाद्यं यज्ञगुह्यम् ।

स.– ★यज्ञो गुह्यं विष्णुरिति नाम यस्य तद्यज्ञगुह्यम् ।

''विष्णुः उपांशुः यष्टयः'' इति श्रुतेः ।

श्री.– ★यज्ञगुह्यं = वेदरहस्यम् ।



## ९८३. अन्नम्

वि.– ★भूतैरद्यते अत्ति च तानीत्यन्नम् ।

''अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते'' इति श्रुतेः ।

''अत्तृत्वात् सर्वभूतानामन्नमित्युच्यते हरिः ।
उपजीव्यश्च भूतानामिति चान्नं जनार्दनः '' ॥ इति च ॥

र.– ★अन्यते प्राण्यते अनेन इति अन्नम् ।

★यद्वा अद्यते सर्वप्राणिभिः उपजीव्यते इति अन्नम् ।

स.– ★''अद्यते अत्ति च'' इति श्रुतेः, सर्वोपजीव्यत्वात् सर्वात्तृत्वात् अन्नम् ।

श्री.–★अन्नं = प्राण्युपजीव्यः ।



## ९८४. अन्नादः

वि.– ★अन्नमत्तीति अन्नादः ।

र.– ★भक्तोपहृतम् अन्नं चरुपुरोडाशादिकम् अत्ति इति अन्नादः ।

★यद्वा अन्नं भक्तानाम् आसमन्तात् ददाति इति अन्नादः ।

स.– *अन्नमत्तीति अन्नादः । "द्विजपत्न्यर्पितं अस्ति विभो अन्नं" इत्युक्तेः ।

श्री.– *अन्नादः = सर्वतो भक्तेभ्य एवान्नदाता, द्विषामनन्नदाता च इति एवचयोरर्थः ।



आत्मयोनिः स्वयंजातो वैखानः सामगायनः ।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥ १०६ ॥

## ९८५. आत्मयोनिः

वि.– *आत्मनां ब्रह्मादिजीवानां योनिः अव्यवधानेनोत्पादकः आत्मयोनिः ।

र.– *आत्मा सर्वप्राणिधारणं यौति अस्मिन् इति आत्मयोनिः ।

स.– *"आत्मा विरिञ्चः सुमनाः सुधौतश्चेति कथ्यते" ।

इति बृहद्भाष्योक्तेः आत्मनः चतुर्मुखस्य जीवानां वा योनिः कारणमित्यात्मयोनिः ।

★आत्मैव स्वयमेव योनिः भार्या यस्येति वा स्वरमणत्वात् ।

स्पष्टं चैतदुपपादितं ऐतरेयभाष्ये बृहतीसहस्रऋक्प्रतिपाद्यभगवद्रूपकथन-प्रस्तावे–

रमया रममाणोऽपि तस्य नैव स्त्रियात्मना ।
रमते नान्यतः क्वापि रतिर्विष्णोः सुखात्मनः ।
रमया रमणं तस्मात् रमया रतिपात्रता ।
नैवास्या रतिदातृत्वं विष्णोर्न ह्यन्यतो रतिः" ।। इत्यादि चेति ।

***आत्मा चतुर्मुखो योनिः यस्येति वा ।**

तदुक्तं छान्दोग्यभाष्ये–

"भूमोपासनयोग्यस्तु साक्षात् ब्रह्मैव मुख्यतः ।
स तद्विद्याबलेनैव विष्णुना रतिमाप्नुयात् ।
तेनैव क्रीडते नित्यं स्त्रीरूपो मिथुनीभवत्" । इति ।

श्री.– ***आत्मयोनिः = धृतिसङ्गमनः ।**



## ९८६. स्वयंजातः

वि.– ***स्वयं चान्यस्मान्न जायत इति स्वयंजातः ।**

***सुष्ठु शुभमुद्दिश्य जातो वा ।**

र.– ***स्वयम् एव प्रसन्नः भक्तगताज्ञानं परिहृत्य सम्यक् व्यक्तः जायते इति स्वयञ्जातः ।**

स.– ***स्वयमेव स्वस्माज्जातत्वात् स्वयंजातः ।**

उक्तं चैतदनुव्याख्याने–

"भूतभूताभिमानी च तद्देहोऽन्तर्नियामकः ।
हरिश्चाकाशशब्दोक्तो मुख्यतो हरिरेव च" । इत्यादिना ।

उपपादितं चैतत् "कारणत्वेन च आकाशादिषु यथा व्यपदिष्टोक्तेः" इत्यधिकरणे ।

श्री.–***स्वयञ्जातः = भक्ताज्ञानं हृत्वा सम्यग्व्यक्तः ।**



## ९८७. वैखानः

वि.– ★वराहरूपेण भूमिं विशेषेण खनतीति वैखानः ।

र.– ★विशेषेण शत्रुम् अवदारयति इति विखानः, विखान एव वैखानः ।

स.– ★खानि च अनाश्च खानम् इन्द्रियप्राणाः विशिष्टाः खानाः येषां ते विखानाः मुक्ताः, तेषामयं स्वामी वैखानः ।

★विखानाः खनरहिताः मुक्ताः तत्सम्बन्धी वैखानः ।

★विशेषेण खानो विखानः विदारणं, तस्यायं कर्ता वराहरूपेण इति वा ।

श्री.– ★वैखानः = विशेषतः शत्रुदारकः ।



## ९८८. सामगायनः

वि.– ★साम गायतीति सामगायनः ।

र.– ★यज्ञविनाशकरान् राक्षसान् स्यति हिनस्ति इति साम, गीयन्ते अस्मिन् इति गायनः, सामानि स्तोत्रविशेषाः गीयन्ते अस्मिन् इति सामगायनः ।

स.– ★साम गायतीति वा, सामगानामयनत्वाद्वा सामगायनः ।

श्री.– ★सामगायनः = सामगायनाश्रयः ।



## ९८९. देवकीनन्दनः

वि.– ★देवकीं नन्दयतीति देवकीनन्दनः ।

र.– *देवानां कं सुखम् अस्य अस्ति इति देवकी सोमः, तेन देवकिना सोमेन नन्दते इति देवकीनन्दनः ।

*यद्वा देवेन पापाणेन क्रियते सूयते इति देवकी, देवक्या सोमेन नन्दते इति देवकीनन्दनः ।

स.– *देवक्याः नन्दनः देवकीनन्दनः

*देवानां कं यस्मादिति देवको वरुणः, तस्य स्त्री देवकी, भागीरथी । पुं योगादाख्यायां इति ङीष् । सा नन्दना यस्य सः इति वा ।

*पुंयोगादाख्यायाम् इत्यत्र नन्दापत्यलक्षण एव पुंयोगः । किन्तु जन्यत्वात् ङीप् इति हरदत्ताद्युक्तेः । "प्राक् केकयीतो भरतः ततोऽभूत्" इति भट्टिप्रयोगात् । रेवतीरमणकोशाच्च, उक्तव्युत्पत्त्या देवको नारायणः तस्यापत्यं देवकी गङ्गा तां नन्दयतीति वा ।

भागवतटीकायान्तु– देवकी लक्ष्मीः तां नन्दयतीत्युक्तम् ।

श्री.– *देवकीनन्दनः = सोमानन्दः ।



## ९९०. स्रष्टा

वि.– *सर्वलोकस्य जनकः स्रष्टा ।

र.– *भक्तेभ्यः ज्ञानं सृजति ददाति इति स्रष्टा ।

स.– *स्रष्टृत्वात् स्रष्टा ।

श्री.– *स्रष्टा = भक्तज्ञानसृक् ।



## ९९१. क्षितीशः

वि.– *भूमेरीशः क्षितीशः ।

र.– *क्षितिः स्तोत्रात्मकः ग्रावजनितशब्दः, तस्य ईशः स्वामी, श्रोता इति यावत् इति क्षितीशः ।

स.– *क्षितीशः भूपतिः ।

श्री.– *क्षितीशः = स्तोत्रात्मकशब्दश्रोता ।



## ९९२. पापनाशयः

वि.– *स्मरतां पापं नाशयतीति पापनाशनः ।

र.– *पाति रक्षति आत्मानम् अस्मात् इति पापं स्तोत्रम् । पापस्य स्तोत्रस्य नाशनं लोपाभावः यस्मिन् सः पापनाशनः ।

स.– *पापं नाशयतीति पापनाशनः ।

*पापं नयन्तीति पापनाः तत्त्वाभिमानिनः दैत्याः तान् अश्नाति संहरतीति वा ।

श्री.– *पापनाशनः = स्तोत्रलेपाभाववान् ।



शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥ १०७ ॥

॥ सर्वप्रहरणायुध ॐ नम इति ॥

## ९९३. शङ्खभृत्

वि.– *पाञ्चजन्यशङ्खं विभर्तीति शङ्खभृत् ।

*सुखज्ञानभृद् वा ।

र.– *उपशमनहेतुत्वात् शङ्खं देवताह्वानं, तत् विभर्ति तद्विषयः भवति इति शङ्खभृत् ।

स.– *शङ्खं पाञ्चजन्यं, "शङ्खप्रसूनाख्यनिधी दधानः" इत्युक्तेः शङ्खनामकनिधिं विभर्तीति शङ्खभृत् ।

श्री.–*शङ्खभृत् = देवताह्वानविषयः ।



## ९९४. नन्दकी

वि.– *नन्दकः खड्गोऽस्यास्तीति नन्दकी ।

र.– *नन्दते अस्मिन् इति नन्दः देवसदनं, तत् करोति इति नन्दकः यजमानः, स पूजकः अस्य अस्ति इति नन्दकी ।

स.– *तन्नामकखड्गवान् ।

श्री.–*नन्दकी = पूजकयजमानवान् ।



## ९९५. चक्री

वि.– *चक्रमस्यास्तीति चक्री ।

र.– *क्रियते इति चक्रं वर्धनं, तदस्य दातव्यतया अस्ति इति चक्री ।

स.– *रामकृष्णादिरूपेण सैन्यवान् जगन्वान् सुदर्शनवान् वा ।

श्री.– *चक्री = वृद्धिदाता ।



## ९९६. शार्ङ्गधन्वा

वि.– *शार्ङ्गं धनुरस्यास्तीति शार्ङ्गधन्वा ।

र.– *शीर्यते हिंस्यते समाप्यते अनेन इति शार्ङ्गः, तं स्तोत्र-विशेषं समाप्तिद्योतकं धत्ते इति शार्ङ्गधन्वा ।

स.– *शार्ङ्गं नाम धनुः यस्यासौ तथा ।

श्री.– *शार्ङ्गधन्वा = स्तोत्रविशेषधारी ।



## ९९७. गदाधरः

वि.– *गदां धारयति (धरति) इति गदाधरः ।

*संसाररोगमधरीकरोतीति वा ॥

र.– *गद्यन्ते स्तूयन्ते इति गदाः अश्वाः, तैः अश्वैः आ समन्तात् ध्रियते उह्यते इति गदाधरः ।

स.– *धरतीति धरः गदायाः धरः गदाधरः ।

श्री.– *गदाधरः = स्तुत्याश्वोह्यः ।



## ९९८. रथाङ्गपाणिः

वि.– *रथाङ्गं चक्रं पाणौ यस्य स रथाङ्गपाणिः ।

*रथिनः स्तौतीति वा ।

र.– *रथं सुखं गमयति इति रथाङ्गः पुत्रादिः तं पणयति ददाति इति रथाङ्गपाणिः ।

स.– *रथाङ्गं चक्रं पाणौ यस्य सः ।

श्री.– *रथाङ्गपाणिः = सुखप्रापकपुत्रादिदः ।



## ९९९. अक्षोभ्यः

वि.– *अत एवाशक्यक्षोभ इत्यक्षोभ्यः ।

र.– *क्षुभ्यते चाल्यते इति क्षोभ्यं न क्षोभ्यं अक्षोभ्यं पुत्रधनादि इति अक्षोभ्यः ।

स.– *क्षोभयितुमशक्यत्वात् अक्षोभ्यः ।

श्री.– *अक्षोभ्यः = अचाल्यपुत्रादिमान् ।



## १०००. सर्वप्रहरणायुधः

वि.– *नैतान्यायुधान्यस्यात्मरक्षणाय सन्ति, किन्तु सर्वेषां शत्रूणां प्रहरणानि घातकानि आयुधान्यस्य इति सर्वप्रहरणायुधः ।

*यद्वा न केवलमेतावन्त्येवाऽयुधान्यस्य, अपितु सर्व-प्रहरणानि शक्त्यादीन्यायुधान्यस्येति ।

*अथवा, सर्वाणि नखतृणादीन्यपि प्रहरणानि एव आयुधा-न्यस्येति अनेनाचिन्त्यशक्तित्वादुक्तसकलगुणपूर्णत्वं युक्त-मिति सूचितं भवति ।

**र.– *सर्वशब्दः आवर्तनीयः। सर्वेभ्यः असुरेभ्यः धनादिकमाहृत्य सर्वेभ्यः भक्तेभ्यः प्रकर्षेण दातुम् आहरति इति सर्वप्रहरणः। गम्यते प्राप्यते इति आयुः जीवनम्, आयुः आयुष्यं धत्ते इति आयुधः, सर्वप्रहरणश्चासौ आयुधश्चेति सर्वप्रहरणायुधः।**

**॥ इति श्री रघुनाथतीर्थविरचितवृहतीसहस्रव्याख्यानात् तत्त्वसारादुद्धृता श्री विष्णुसहस्रनामस्तोत्रव्याख्या समाप्ता ॥**

**स.– *सर्वप्रहरणायुधः सर्वेषां शत्रूणां प्रहरणार्थं आयुधानि यस्य सः तथा।**

सर्वाध्यायार्थावधारणाद्यर्था अध्यायान्ते द्विरुक्तिः।

''अध्यायान्ते द्विरुक्तिः स्यात् वेदे वा वैदिकेऽपि वा।
विकारो यत्र सञ्जेत पूर्वोक्तस्यावधारणे।
अनुक्तानां प्रमाणानां स्वीकारश्च कृतो भवेत्।
विनिन्द्य चेतरान् मार्गान् सम्पूर्णफलता तथा'' ॥ इति गारुडोक्तेः।

यद्यपि गणनायां सहस्रतोऽपि कतिचिन्नामानि अधिकानि भवन्ति। तथाप्यनुज्ञेति सूत्रे ''शतधाऽहं सहस्रधाऽहं'' इति श्रुतिव्याख्यानावसरे शतनामाष्टशतवाच्यत्वेन, 'शतर्चिनम्' इतिवत् सामीप्यादविरोधः इति तत्त्वप्रदीपोक्तेः तन्न्यायेन अविरोधः इति सम्प्रदायविदः।

केचित्तु पदच्छेदभेदेन सहस्रनामत्वमपि योजनीयमित्याहुः।

**श्री.–** *सर्वप्रहरणायुधः = **भक्तेभ्यो दातुं असुरेभ्यः धनाद्यपहारी, जीवनधारी च।**

## सर्वप्रहरणायुधः ओं नम इति

**वि.–** *द्विरुक्तिस्तात्पर्यार्था। ॐकारो मङ्गलार्थः। श्रीशब्दोऽपि मङ्गलार्थः।

''ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ'' ।। इति वचनात् ।

तात्पर्यद्योतनायान्तेऽपि अनन्तगुणवाचकोङ्कारं प्रायुङ्क्तेति वा ।

''स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते'' इति श्रुत्युक्तादृष्टार्थं वा ।

ओङ्कारे परे पररूपत्वं छान्दसम् ''प्रणवष्टेः'' आदेशः ।

**स्तोत्रजपस्यापि यज्ञकर्मत्वात् माहात्म्याभिधानेन प्रवृद्धभक्तिर्भगवन्तं नमस्यति नमःशब्देन ।**

इतीत्यन्तेन नाम्नां सहस्रं अन्यूनाधिकमुक्तमिति दर्शयति ।

**।। इति श्रीमज्जयतीर्थयतिशिष्यश्रीविद्याधिराजतीर्थविरचिता श्रीविष्णुसहस्रनामनिरुक्तिः समाप्ता ।।**

**स.– *ओं अवति जगद्रक्षणादिकं करोति गुणान् प्रविशतीति वा, गुणैरीयते जगता प्रविश्यते प्रलयादाविति वा ।**

''ओतं जगत्त्रयं स्वयं च पूर्णो वेदोक्तरूपो अनुपचारतश्च ।
सर्वैः शुभैः चाभियुतो न चान्यैः ओं तत्सदित्येन मतो वदन्ति '' ।। ओमिति ब्रह्म ।

''ओंनामा भगवान् विष्णुः अधिकोच्चगुणत्वतः ।
ओतमस्मिन् जगत्सर्वं अधिकोच्चाखिलैः गुणैः ।
अकारस्य विकारोऽयं ओङ्कार क इति कथ्यते ।
अधिकोच्चत्वमानं हि तस्यार्थः समुदीरितः ।
अकारेणैव तत्सर्वं उक्तमाधिक्यतस्त्वतः ।
अधिकोच्चस्वरूपोऽसौ मतश्चाधिक एव हि'' । इत्युक्त्वा

"तस्मादकारबीजेयं विष्णोर्नारायणाभिधा ।
प्रणवश्च यतोङ्कारः प्रधानं नाम चक्रिणः" ।

इति श्रुतिस्मृतिभ्यः, चादिपाठादव्ययत्वम् ।

**ओं गुणपूर्णाय नमः ।**

**मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुपाणि च भवन्ति, आयुप्मत्पुरुपाणि च, अध्येतारश्च प्रथन्ते इत्युक्तेः ।**

**'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ' ।**

**इत्युक्तेश्च, ओं नम इति अन्ते मङ्गलार्थम् ।**

श्रीमद्विष्णुसहस्रनामविवृतिः श्रीसत्यबोधाभिध-
स्वामिस्वान्तनिशान्तवर्त्यवनिजाकान्तस्य सन्तुष्टये ।
भक्त्याऽकारि च सत्यसन्धयतिना तुष्टोऽनया सेवया
देयाज्ज्ञानमतो भवामयभयात् पायाद्दयातोयधिः ॥ १ ॥

सत्यसन्धमुखाम्भोजनिस्सृतः तत्त्वगर्भितः ।
विष्णोः सहस्रनामाख्यसुधामोदोऽभिवर्धते ॥ २ ॥

**॥ इति श्रीमत्सत्यबोधश्रीपादानां करकमलसञ्जातश्रीसत्यसन्धाभिध-
सर्वतन्त्रस्वतन्त्रपदवाक्यप्रमाणपारावारपारीणयतिवर्यकृतं
श्रीमद्विष्णुसहस्रनामभाष्यं समाप्तम् ॥**

**श्री.**–अध्यायोक्षितग्रन्थान्ते अवधारणार्थत्वात् द्विरुक्तिः । अवधारणार्थं सर्वस्याप्युक्तस्याध्यायमतः । "द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णयः" । इति वाराहसंहितोक्तेः । सर्वनाम्नां मन्त्ररूपत्वेन पठणावश्यकत्वे प्रणवपूर्वकचतुर्थ्यन्तैकैकनाम्नामन्ते प्रणवान्त-

'नमः'शब्दं ज्ञापयितुं ॐ नम इति। अत्र सर्वत्र शब्दार्थ-साधनधातुप्रत्ययादिकं बृहतीसहस्रव्याख्यानतोऽवगन्तव्यम्। अर्थबाहुल्यादिविशेषस्तु अस्मत्कृतसहस्रनामभाष्यतो ज्ञेयः ।

**नमोऽस्त्विति ।**

नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोट्यायुधधारिणे नमः ॥

यो मां नामसहस्रेण स्तोतुमिच्छति पाण्डव ।
सोऽहमेकेन श्लोकेन स्तुत एव न संशयः ॥

नमोऽस्त्वनन्तायेत्युक्तेः ।
शाश्वत इति । नैरन्तर्येण एकरूपायेत्यर्थः ।

**॥ इति श्रीमन्नारदानुगृहीतेन पुरुषोत्तमाचार्यशिष्येण भीमाचार्यात्मजेन (पाङ्गरी) श्रीनिवासाचार्येण विरचितं विष्णुसहस्रनामव्याख्यानं (बृहतीसहस्रव्याख्यानानुसारि) संपूर्णम् ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**

# श्रीमत्पूज्य–(टीकाचार्य)–जयतीर्थ–श्रीमच्चरण–शिष्यविद्याधिराजयतिकृता विष्णुसहस्रनामफलस्तुतिटीका

## फलस्तुतिः

**इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।**
**नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ १ ॥**

**वि.–** इतीदमित्यनेन नामसहस्रमन्यूनानधिकमुक्तमिति दर्शयति । उक्तनामसहस्रकं विष्णोः सहस्रमूर्तिविशेषवाचकमीदृशमेव नान्यथेत्युक्तम् ॥

**य इदं श्रृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।**
**नाशुभं प्राप्नुयात् किञ्चित् सोऽमुत्रेह च मानवः ॥ २ ॥**

**वि.–** य इदमित्यादि सहस्रनामश्रवणादेः फलकीर्तनम् । अमुत्र परलोके । इह चास्मिन् लोके किञ्चिदप्यशुभं न प्राप्नुयादिति न साक्षाच्छ्रवणादिफलम्, किन्तु ज्ञानद्वारैवेति द्रष्टव्यम् । "तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनाय," "तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन," "आत्मा वा अरे द्रष्टव्यः," "यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम्, इत्यादिश्रुतिभ्यो यज्ञादिना सत्त्वशुद्धौ दृष्टानुश्रविकविषयवितृष्णस्य शमादिसम्पन्नस्य भगवद्भक्तिमतः श्रवणमननसहकृतेन निदिध्यासनेनापरोक्षज्ञानोदये प्रसन्नात् परमेश्वरादेव बन्धध्वंसावगमात् ॥

**वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् ।**
**वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ ३ ॥**

**वि.–** वेदानामन्तं निर्णयं गच्छतीति वेदान्तगः । शूद्रस्य सुखप्राप्तिः

श्रवणेनैव । "श्रावयेच्चतुरो वर्णान्" इति तस्यापि श्रवणाधिकार-स्मरणात् । नतु जपयज्ञेन । "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इति श्रुतेः । "नाग्निर्न यज्ञो न क्रिया न संस्कारो न व्रतानि शूद्रस्य" इति पैङ्गिश्रुतिः ॥

**धर्मार्थी प्राप्नुयाद् धर्ममर्थार्थी चार्थमाप्नुयात् ।**
**कामानवाप्नुयात् कामी प्रजार्थी प्राप्नुयात् प्रजाम् ॥ ४ ॥**

**वि.–** नामसहस्रस्य श्रवणादिकं न कामनयाऽनुष्ठितं मोक्षसाधनम् । यत्कामनयानुष्ठितं तत्फलसाधनं भवति । एकस्याप्यभिसन्धिभेदा-दुभयरूपतोपपत्तेः ॥

**भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः ।**
**सहस्रं वासुदेवस्य नाम्नामेतत् प्रकीर्तयेत् ॥ ५ ॥**

**वि.– भक्तिमानित्यादि** । भक्त्यादिविशिष्टस्य फलातिशय-द्योतनार्थम् । बाह्याभ्यन्तरशौचवान् 'शुचिः । "शौचं तु द्विविधम्" इत्युक्तेः । बाह्यादपि शौचादाभ्यन्तरमेव श्रेयः । "गङ्गातोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः । आ मृत्योराचरन् शौचं भावदुष्टो न शुद्ध्यति" ॥ इति च । "ध्यानह्रदे ज्ञानजले रागद्वेषमलापहे । यः स्नाति मानसे तीर्थे स याति परमां गतिम् ॥ आत्मा नदी संयमतोयपूर्णा सत्यह्रदा शीलतटा दयोर्मिः । तत्राभिषेकं कुरु पाण्डुपुत्र न वारिणा शुद्ध्यति चान्तरात्मा" ॥ इत्यादि महाभारते ॥

**यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ।**
**अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥ ६ ॥**

न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥ ७ ॥

रोगार्तो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ ८ ॥

वि.– न भयं क्वचिदाप्नोतीति भवत्यरोग इति भाव्यनिष्टप्रागभाव-परिपालनमुच्यते । रोगार्त इत्यादिना च फलोन्मुखानिष्टनिवर्तकत्व-मुच्यते ॥

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन् नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ ९ ॥

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ १० ॥

न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥ ११ ॥

वि.– वासुदेवाश्रय इत्यादिना यथाक्रममात्यन्तिकेष्टसाधनत्व-मात्यन्तिकानिष्टनिवर्तकत्वं चोच्यते ॥

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युज्येताऽऽत्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ १२ ॥

वि.– इमं स्तवमित्यादिना गुणान्तराभिधानपूर्वकं फलान्तर-सम्बन्धोऽभिधीयते ॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३ ॥

**वि.– न क्रोध इत्यादीनि** ञकारानुबन्धरहितेन नकारेण समस्तानि द्रष्टव्यानि । नचेति समुदायः प्रतिषेधवाची । तस्य मात्सर्यशब्देन समासः । पुरुषोत्तमे भक्तिमतां न क्रोधादयो भवन्तीत्यर्थः ॥

**द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।**
**वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १४ ॥**

**वि.–** नेयं फलश्रुतिः प्ररोचना । किन्तु यथार्थभूतैवेति प्रदर्शनाय भगवन्माहात्म्यमुपवर्ण्यते – **द्यौः सचन्द्रार्कनक्षत्रेत्यादिना ॥**

**ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।**
**जगद् वशे वर्ततेदं कृष्णस्य सचराचरम् ॥ १५ ॥**

**वि.–** जगद् वर्तत इत्यनादित्वापेक्षया । ''आत्मा वा इदमेक एवाग्र आसीत्'' ॥

**इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।**
**वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १६ ॥**

**वि.– इन्द्रियाणि** – बलं धृतिरित्येवमात्मकानि वस्तूनि वासुदेव आत्मा आदानादिकर्ता येषां तान्याहुः । क्षेत्रं प्रकृत्यादिकं क्षेत्रज्ञं ब्रह्मादिजीवसङ्घं च वासुदेवात्मकमाहुः ॥

**सर्वागमानामाचारः प्रथमं परिकल्पते ।**
**आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ १७ ॥**

**वि.–** ''स नैवमभवत्'' ''तत्तेजोरूप ..... धर्मं तदेतत् .... इत्यादि .... अनादित्वेन प्रसिद्धस्यापि धर्मस्यास्य भगवदधीनत्वमुच्यते – **धर्मस्य प्रभुरच्युत इति** । सर्वागमानामित्यवान्तरवाक्येन आचारवत एव सर्वधर्माधिकारः । आचारमूलत्वाद् धर्मस्येति दर्शयति । तथाच स्मृतिः –

"चतुर्णामपि वर्णानामाचारो धर्मपालकः ।
आचारभ्रष्टदेहानां भवेद् धर्मः पराङ्मुखः" ॥ इति ।

**ऋषयः पितरो देवा महाभूतानि धातवः ।**
**जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥ १८ ॥**

**योगो ज्ञानं तथा साङ्ख्यं विद्याः शिल्पादिकर्म च ।**
**वेदाः शास्त्राणि विज्ञानमेतत् सर्वं जनार्दनात् ॥ १९ ॥**

एतत् सर्वं जनार्दनात् प्रवर्तत इति शेषः ।

**एको विष्णुर्महद्भूतं पृथग् भूतान्यनेकशः ।**
**त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥ २० ॥**

**वि.**– सर्वभूतेषु महत्त्वान्महद्भूतम् । भूतानामात्मा अन्तर्यामी । विश्वं भुङ्क्ते पालयति च इति विश्वभुक् । व्ययरहितः एकः स्वतन्त्रः विष्णुस्त्रिलोकान् व्याप्य स्थितः पृथग् बहुरूपः सन् अनेकैः प्रकारैः अनेकानि भूतानि भुङ्क्ते संहरति रक्षति च इत्येको विष्णुरिति श्लोकार्थः ॥

**इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।**
**पठेद्य इच्छेत् पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ २१ ॥**

**वि.**– इमं स्तवमित्यनेन स्वतः सर्वज्ञेन भगवता बादरायणेन लोकहितार्थं कृतत्वादिदं स्तोत्रं सादरं सर्वैः पठनीयमिति दर्शयति ॥

किमत्र बहुनोक्तेन? भगवद्भक्ताः कृतकृत्या इति दर्शयति–

**विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।**
**भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥ २२ ॥**

**न ते यान्ति पराभवम् ओं नम इति ॥**

**वि.– विश्वेश्वरमिति** । उक्तावधारणार्था द्विरुक्तिः । एतावता प्रबन्धेन गुणपरिपूर्णत्वमेव सिद्धं विष्णोरित्याह **ओमिति** । एवं पूर्णतां स्मृत्वा स्वस्यापकृष्टतामाह भीष्मो **नम** इति नमस्कारेण । समाप्यते स्तोत्रमिति शब्देन, इत्यशेषमतिमङ्गलम् ।

**एवं विद्याधिराजेन प्रीत्यै माधवमध्वयोः ।**
**विष्णुनामसहस्रस्य निरुक्तिः सम्प्रदर्शिता ॥**

**इति श्रीमत्पूज्य–(टीकाचार्य)–जयतीर्थ–श्रीमच्चरण–**
**शिष्यविद्याधिराजयतिकृता विष्णुसहस्रनामफलस्तुतिटीका समाप्ता ॥**

॥ श्रीकृष्णार्पणमस्तु ॥

## श्रीसत्यसन्धतीर्थयतिकृतविष्णुसहस्रनाममहिमाटीका
## (फलस्तुतिः)

**स.– *इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।**
**नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ १ ॥**

**य इदं श्रुणुयान्नित्यं यश्चापि परिकीर्तयेत् ।**
**नाशुभं प्राप्नुयात्किञ्चित् सोमुत्रेह च मानवः ॥ २ ॥**

किञ्चिदप्यशुभं न प्राप्नुयादिति न साक्षाच्छ्रवणादिफलं किन्तु ज्ञान-द्वारैवेति द्रष्टव्यम्, ''तमेवं विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यते अयनाय, ''तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन, ''आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, ''यमेवैष वृणुते तेन लभ्य इत्यादिना, सत्त्वशुद्धस्य दृष्टानुश्रुतविषयवितृष्णस्य शमादिसम्पन्नस्य भगवद्भक्तिमतः श्रवणमननसहकृतनिदिध्यासनेनापरोक्षज्ञानोदये प्रसन्नात्परमेश्वरादेव बन्धविध्वंसस्यावगमात् ॥ २ ॥

**वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् ।**
**वैश्यो धनसमृद्धः स्यात् शूद्रः सुखमवाप्नुयात् ॥ ३ ॥**

वेदानां, अन्तं=निर्णयं, गच्छतीति वेदान्तगः । शूद्रस्य सुखप्राप्तिः श्रवणेनैव ''श्रावयेच्चतुरो वर्णान् इति तस्यापि श्रवणाधिकारश्रवणात् । ननु जपपारायणादियज्ञे ''तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः इति श्रुतेः नामसहस्रस्य श्रवणादिकं न कामनया अनुष्ठितं, मोक्षसाधनयाऽनुष्ठितं तत्फलसाधनं भवति । एकस्य अन्याभिसन्धिभेदादुभयरूपतोपपत्तेः ॥ ३ ॥

**धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।**
**कामानवाप्नुयात् कामी प्रजार्थी चाप्नुयात् प्रजाः ॥ ४ ॥**

भक्तिमानित्यादि भक्त्यादिविशिष्टस्य फलातिशयद्योतनार्थम् ॥ ४ ॥

**भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः ।**
**सहस्रं वासुदेवस्य नाम्नामेतत् प्रकीर्तयेत् ॥ ५ ॥**

शुचिः=बाह्याभ्यन्तरशौचवान् । शौचं तु द्विविधमित्यादि, बाह्य-शौचादपि आन्तरमेव श्रेयः । ''गङ्गातोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः । आमृत्योराचरन् शौचं भावदुष्टो न शुद्ध्यति । ''ज्ञानहृदे ध्यानजले रागद्वेषमलापहे । यः स्नाति मानसे तीर्थे स याति परमां गतिम् ॥

''आत्मा नदी संयमतोयपूर्णा सत्यहृदा शीलतटादयोर्मिः । तत्राभिषेकं कुरु पाण्डुपुत्र न वारिणा शुद्ध्यति चान्तरात्मा ॥ इत्यादि भारते ॥ ५ ॥

**यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ।**
**अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥ ६ ॥**

**न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।**
**भवत्यरोगो मतिमान् बलरूपगुणान्वितः ॥ ७ ॥**

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ ८ ॥

रोगार्त इत्यादिना च फलोन्मुखानिष्टनिवर्तकत्वमुच्यते ॥

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ ९ ॥

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ १० ॥

न वासुदेवभक्तानां न भयं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं वाऽप्युपजायते ॥ ११ ॥

वासुदेवाश्रय इत्यादिना यथाक्रमं नात्यन्तिकेष्टसाधनत्वं प्राप्नोति किन्त्वनिष्टनिवर्तकत्वमेवोच्यते ॥ ६-११ ॥

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युञ्जेतात्मा सुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ १२ ॥

इमं स्तवमित्यादिना गुणाभिसन्धानपूर्वकं फलान्तरसम्बन्धो अभिधीयते ॥ १२ ॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३ ॥

पुरुषोत्तमे भक्तिमतां न क्रोधादयो भवन्तीत्यर्थः । नेयं फलश्रुतिः प्ररोचना, किन्तु यथार्थभूतैवेति प्रदर्शनाय भगवन्माहात्म्यमुपवर्ण्यते ॥१३॥

द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १४ ॥

**ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।**
**जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥ १५ ॥**

**इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।**
**वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १६ ॥**

क्षेत्रं=प्रकृत्यादि, क्षेत्रज्ञः=ब्रह्मादिजीवसङ्घश्च वासुदेवात्मकमाहुः ॥ ''सन्नेव व्यभजत्तच्छ्रेयोरूपमसृजत् धर्मं तदेतत्क्षत्रस्य क्षत्त्रमिति श्रुत्या बलवत्त्वेन प्रसिद्धस्य धर्मस्यापि भगवदधीनत्वमुच्यते ॥ १६ ॥

**सर्वागमानामाचारः प्रथमं परिकल्पते ।**
**आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ १७ ॥**

धर्मस्य प्रभुरच्युत इति ॥ सर्वागमानामिति अवान्तरवाक्येन आचारवत एव सर्वधर्माधिकारः आचारमूलत्वात् धर्मस्येति दर्शयति ॥ तथा च स्मृतिः– ''चतुर्णामपि वर्णानामाचारो धर्मपालकः ॥ आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः इति ॥ १७ ॥

**ऋषयः पितरो देवा महाभूतानि धातवः ।**
**जङ्गमाजङ्गमं चैवं जगन्नारायणोद्भवम् ॥ १८ ॥**

**योगो ज्ञानं तथा साङ्ख्यं विद्याः शिल्पादि कर्म च ।**
**वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ १९ ॥**

एतत्सर्वं जनार्दनात्सर्वं प्रवर्तते इति शेषः ॥ १९ ॥

**एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।**
**त्रीन् लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥ २० ॥**

सर्वभूतेषु महत्वान्महद्भूतम्, भूतानामात्मा अन्तर्यामी विश्वं भुङ्क्ते इति विश्वभुक् व्ययरहितः एकः स्वतन्त्रो विष्णुः त्रिलोकं व्याप्य स्थितः । पृथक्

बहुरूपः सन् अनेकैः प्रकारैः अनेकानि भूतानि भुङ्क्ते इति एको विष्णुरिति श्लोकार्थः ॥ २० ॥

**इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।**
**पठेद्य इच्छेत् पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ २१ ॥**

इमं स्तवमित्यनेन स्वतः सर्वज्ञेन भगवता बादरायणेन लोकहितार्थं कृतत्वादिदं स्तोत्रं सादरं सर्वैः पठनीयमिति दर्शयति ॥ २१ ॥

**विश्वेश्वरमजं देवं जगतः प्रभुमव्ययम् ।**
**भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥ २२ ॥**
**न ते यान्ति पराभवम् ॐ नमः इति ।**

किमत्र बहुनोक्तेन भगवद्भक्ताः कृतकृत्या इति दर्शयति विश्वेश्वरमिति ॥ २२ ॥

**॥ इति श्रीभारतोक्ता सहस्रनाममहिमा समाप्ता ॥**

**॥ इति श्रीमन्महाभारते अनुशासनिके पर्वणि सहस्रनाममहिमायाः श्रीत्यसन्धतीर्थकृतटीका च समाप्ता ॥**

॥ श्रीकृष्णार्पणमस्तु ॥



# परिशिष्टम् - १

## विष्णुसहस्रनामावलिः

१. ॐ विश्वाय नमः ॐ
२. ॐ विष्णवे नमः ॐ
३. ॐ वषट्काराय नमः ॐ
४. ॐ भूतभव्यभवत्प्रभवे नमः ॐ
५. ॐ भूतकृते नमः ॐ
६. ॐ भूतभृते नमः ॐ
७. ॐ भावाय नमः ॐ
८. ॐ भूतात्मने नमः ॐ
९. ॐ भूतभावनाय नमः ॐ
१०. ॐ पूतात्मने नमः ॐ
११. ॐ परमात्मने नमः ॐ
१२. ॐ मुक्तानां परमागतये नमः ॐ
१३. ॐ अव्ययाय नमः ॐ
१४. ॐ पुरुषाय नमः ॐ
१५. ॐ साक्षिणे नमः ॐ
१६. ॐ क्षेत्रज्ञाय नमः ॐ
१७. ॐ अक्षराय नमः ॐ
१८. ॐ योगाय नमः ॐ
१९. ॐ योगविदांनेत्रे नमः ॐ
२०. ॐ प्रधानपुरुषेश्वराय नमः ॐ
२१. ॐ नारसिंहवपुषे नमः ॐ
२२. ॐ श्रीमते नमः ॐ
२३. ॐ केशवाय नमः ॐ
२४. ॐ पुरुषोत्तमाय नमः ॐ
२५. ॐ सर्वाय नमः ॐ
२६. ॐ शर्वाय नमः ॐ
२७. ॐ शिवाय नमः ॐ
२८. ॐ स्थाणवे नमः ॐ
२९. ॐ भूतादये नमः ॐ
३०. ॐ निधयेऽव्ययाय नमः ॐ
३१. ॐ सम्भवाय नमः ॐ
३२. ॐ भावनाय नमः ॐ
३३. ॐ भर्त्रे नमः ॐ
३४. ॐ प्रभावाय नमः ॐ
३५. ॐ प्रभवे नमः ॐ
३६. ॐ ईश्वराय नमः ॐ
३७. ॐ स्वयम्भुवे नमः ॐ
३८. ॐ शम्भवे नमः ॐ
३९. ॐ आदित्याय नमः ॐ
४०. ॐ पुष्कराक्षाय नमः ॐ
४१. ॐ महास्वनाय नमः ॐ
४२. ॐ अनादिनिधनाय नमः ॐ
४३. ॐ धात्रे नमः ॐ
४४. ॐ विधात्रे नमः ॐ
४५. ॐ धातुरुत्तमाय नमः ॐ
४६. ॐ अप्रमेयाय नमः ॐ
४७. ॐ हृषीकेशाय नमः ॐ
४८. ॐ पद्मनाभाय नमः ॐ
४९. ॐ अमरप्रभवे नमः ॐ
५०. ॐ विश्वकर्मणे नमः ॐ
५१. ॐ मनवे नमः ॐ
५२. ॐ त्वष्ट्रे नमः ॐ
५३. ॐ स्थविष्ठाय नमः ॐ
५४. ॐ स्थविराय ध्रुवाय नमः ॐ

५५. ॐ अग्राह्याय नमः ॐ
५६. ॐ शाश्वताय नमः ॐ
५७. ॐ कृष्णाय नमः ॐ
५८. ॐ लोहिताक्षाय नमः ॐ
५९. ॐ प्रतर्दनाय नमः ॐ
६०. ॐ प्रभूताय नमः ॐ
६१. ॐ त्रिककुद्धाम्ने नमः ॐ
६२. ॐ पवित्राय नमः ॐ
६३. ॐ मङ्गलाय पराय नमः ॐ
६४. ॐ ईशानाय नमः ॐ
६५. ॐ प्राणदाय नमः ॐ
६६. ॐ प्राणाय नमः ॐ
६७. ॐ ज्येष्ठाय नमः ॐ
६८. ॐ श्रेष्ठाय नमः ॐ
६९. ॐ प्रजापतये नमः ॐ
७०. ॐ हिरण्यगर्भाय नमः ॐ
७१. ॐ भूगर्भाय नमः ॐ
७२. ॐ माधवाय नमः ॐ
७३. ॐ मधुसूदनाय नमः ॐ
७४. ॐ ईश्वराय नमः ॐ
७५. ॐ विक्रमिणे नमः ॐ
७६. ॐ धन्विने नमः ॐ
७७. ॐ मेधाविने नमः ॐ
७८. ॐ विक्रमाय नमः ॐ
७९. ॐ क्रमाय नमः ॐ
८०. ॐ अनुत्तमाय नमः ॐ
८१. ॐ दुराधर्षाय नमः ॐ
८२. ॐ कृतज्ञाय नमः ॐ
८३. ॐ कृतये नमः ॐ
८४. ॐ आत्मवते नमः ॐ
८५. ॐ सुरेशाय नमः ॐ
८६. ॐ शरणाय नमः ॐ
८७. ॐ शर्मणे नमः ॐ
८८. ॐ विश्वरेतसे नमः ॐ
८९. ॐ प्रजाभवाय नमः ॐ
९०. ॐ अह्ने नमः ॐ
९१. ॐ संवत्सराय नमः ॐ
९२. ॐ व्यालाय नमः ॐ
९३. ॐ प्रत्ययाय नमः ॐ
९४. ॐ सर्वदर्शनाय नमः ॐ
९५. ॐ अजाय नमः ॐ
९६. ॐ सर्वेश्वराय नमः ॐ
९७. ॐ सिद्धाय नमः ॐ
९८. ॐ सिद्धये नमः ॐ
९९. ॐ सर्वादये नमः ॐ
१००. ॐ अच्युताय नमः ॐ
१०१. ॐ वृषाकपये नमः ॐ
१०२. ॐ अमेयात्मने नमः ॐ
१०३. ॐ सर्वयोगविनिःसृताय नमःॐ
१०४. ॐ वसवे नमः ॐ
१०५. ॐ वसुमनसे नमः ॐ
१०६. ॐ सत्याय नमः ॐ
१०७. ॐ समात्मने नमः ॐ
१०८. ॐ सम्मिताय (असम्मिताय) नमः ॐ
१०९. ॐ समाय नमः ॐ
११०. ॐ अमोघाय नमः ॐ
१११. ॐ पुण्डरीकाक्षाय नमः ॐ
११२. ॐ वृषकर्मणे नमः ॐ
११३. ॐ वृषाकृतये नमः ॐ

११४. ॐ रुद्राय नमः ॐ
११५. ॐ वहुशिरसे नमः ॐ
११६. ॐ वभ्रवे नमः ॐ
११७. ॐ विश्वयोनये नमः ॐ
११८. ॐ शुचिश्रवसे नमः ॐ
११९. ॐ अमृताय नमः ॐ
१२०. ॐ शाश्वतस्थाणवे नमः ॐ
१२१. ॐ वरारोहाय नमः ॐ
१२२. ॐ महातपसे नमः ॐ
१२३. ॐ सर्वगाय नमः ॐ
१२४. ॐ सर्वविद्भानवे नमः ॐ
१२५. ॐ विष्वक्सेनाय नमः ॐ
१२६. ॐ जनार्दनाय नमः ॐ
१२७. ॐ वेदाय नमः ॐ
१२८. ॐ वेदविदे नमः ॐ
१२९. ॐ अव्यङ्गाय नमः ॐ
१३०. ॐ वेदाङ्गाय नमः ॐ
१३१. ॐ वेदविदे नमः ॐ
१३२. ॐ कवये नमः ॐ
१३३. ॐ लोकाध्यक्षाय नमः ॐ
१३४. ॐ सुराध्यक्षाय नमः ॐ
१३५. ॐ धर्माध्यक्षाय नमः ॐ
१३६. ॐ कृताकृताय नमः ॐ
१३७. ॐ चतुरात्मने नमः ॐ
१३८. ॐ चतुर्व्यूहाय नमः ॐ
१३९. ॐ चतुर्दंष्ट्राय नमः ॐ
१४०. ॐ चतुर्भुजाय नमः ॐ
१४१. ॐ भ्राजिष्णवे नमः ॐ
१४२. ॐ भोजनाय नमः ॐ
१४३. ॐ भोक्त्रे नमः ॐ
१४४. ॐ सहिष्णवे नमः ॐ
१४५. ॐ जगदादिजाय नमः ॐ
१४६. ॐ अनघाय नमः ॐ
१४७. ॐ विजयाय नमः ॐ
१४८. ॐ जेत्रे नमः ॐ
१४९. ॐ विश्वयोनये नमः ॐ
१५०. ॐ पुनर्वसवे नमः ॐ
१५१. ॐ उपेन्द्राय नमः ॐ
१५२. ॐ वामनाय नमः ॐ
१५३. ॐ प्रांशवे नमः ॐ
१५४. ॐ अमोघाय नमः ॐ
१५५. ॐ शुचये नमः ॐ
१५६. ॐ ऊर्जिताय नमः ॐ
१५७. ॐ अतीन्द्राय नमः ॐ
१५८. ॐ सङ्ग्रहाय नमः ॐ
१५९. ॐ सर्गाय नमः ॐ
१६०. ॐ धृतात्मने नमः ॐ
१६१. ॐ नियमाय नमः ॐ
१६२. ॐ यमाय नमः ॐ
१६३. ॐ वेद्याय नमः ॐ
१६४. ॐ वैद्याय नमः ॐ
१६५. ॐ सदायोगिने नमः ॐ
१६६. ॐ वीरघ्ने नमः ॐ
१६७. ॐ माधवाय नमः ॐ
१६८. ॐ मधवे नमः ॐ
१६९. ॐ अतीन्द्रियाय नमः ॐ
१७०. ॐ महामायाय नमः ॐ
१७१. ॐ महोत्साहाय नमः ॐ
१७२. ॐ महावलाय नमः ॐ
१७३. ॐ महावुद्धये नमः ॐ

१७४. ॐ महावीर्याय नमः ॐ
१७५. ॐ महाशक्तये नमः ॐ
१७६. ॐ महाद्युतये नमः ॐ
१७७. ॐ अनिर्देश्यवपुषे नमः ॐ
१७८. ॐ श्रीमते नमः ॐ
१७९. ॐ अमेयात्मने नमः ॐ
१८०. ॐ महाद्रिधृषे नमः ॐ
१८१. ॐ महेष्वासाय नमः ॐ
१८२. ॐ महीभर्त्रे नमः ॐ
१८३. ॐ श्रीनिवासाय नमः ॐ
१८४. ॐ सतां गतये नमः ॐ
१८५. ॐ अनिरुद्धाय नमः ॐ
१८६. ॐ सुरानन्दाय नमः ॐ
१८७. ॐ गोविन्दाय नमः ॐ
१८८. ॐ गोविदाम्पतये नमः ॐ
१८९. ॐ मरीचये नमः ॐ
१९०. ॐ दमनाय नमः ॐ
१९१. ॐ हंसाय नमः ॐ
१९२. ॐ सुपर्णाय नमः ॐ
१९३. ॐ भुजगोत्तमाय नमः ॐ
१९४. ॐ हिरण्यनाभाय नमः ॐ
१९५. ॐ सुतपसे नमः ॐ
१९६. ॐ पद्मनाभाय नमः ॐ
१९७. ॐ प्रजापतये नमः ॐ
१९८. ॐ अमृत्यवे नमः ॐ
१९९. ॐ सर्वदृशे नमः ॐ
२००. ॐ सिंहाय नमः ॐ
२०१. ॐ सन्धात्रे नमः ॐ
२०२. ॐ सन्धिमते नमः ॐ
२०३. ॐ स्थिराय नमः ॐ
२०४. ॐ अजाय नमः ॐ
२०५. ॐ दुर्मर्षणाय नमः ॐ
२०६. ॐ शास्त्रे नमः ॐ
२०७. ॐ विश्रुतात्मने नमः ॐ
२०८. ॐ सुरारिघ्ने नमः ॐ
२०९. ॐ गुरवे नमः ॐ
२१०. ॐ गुरुतमाय नमः ॐ
२११. ॐ धाम्ने नमः ॐ
२१२. ॐ सत्याय नमः ॐ
२१३. ॐ सत्यपराक्रमाय नमः ॐ
२१४. ॐ निमिषाय नमः ॐ
२१५. ॐ अनिमिषाय नमः ॐ
२१६. ॐ स्रग्विणे नमः ॐ
२१७. ॐ वाचस्पतये नमः ॐ
२१८. ॐ उदारधिये नमः ॐ
२१९. ॐ अग्रण्ये नमः ॐ
२२०. ॐ ग्रामण्ये नमः ॐ
२२१. ॐ श्रीमते नमः ॐ
२२२. ॐ न्यायाय नमः ॐ
२२३. ॐ नेत्रे नमः ॐ
२२४. ॐ समीरणाय नमः ॐ
२२५. ॐ सहस्रमूर्ध्ने नमः ॐ
२२६. ॐ विश्वात्मने नमः ॐ
२२७. ॐ सहस्राक्षाय नमः ॐ
२२८. ॐ सहस्रपदे नमः ॐ
२२९. ॐ आवर्तनाय नमः ॐ
२३०. ॐ निवृत्तात्मने नमः ॐ
२३१. ॐ संवृताय नमः ॐ
२३२. ॐ सम्प्रमर्दनाय नमः ॐ
२३३. ॐ अहःसंवर्तकाय नमः ॐ

२३४. ॐ वह्नये नमः ॐ
२३५. ॐ अनिलाय नमः ॐ
२३६. ॐ धरणीधराय नमः ॐ
२३७. ॐ सुप्रसादाय नमः ॐ
२३८. ॐ प्रसन्नात्मने नमः ॐ
२३९. ॐ विश्वधृपे नमः ॐ
२४०. ॐ विश्वभुजे नमः ॐ
२४१. ॐ विभवे नमः ॐ
२४२. ॐ सत्कर्त्रे नमः ॐ
२४३. ॐ सत्कृतये नमः ॐ
२४४. ॐ साधवे नमः ॐ
२४५. ॐ जह्नवे नमः ॐ
२४६. ॐ नारायणाय नमः ॐ
२४७. ॐ नराय नमः ॐ
२४८. ॐ असङ्ख्येयाय नमः ॐ
२४९. ॐ अप्रमेयात्मने नमः ॐ
२५०. ॐ विशिष्टाय नमः ॐ
२५१. ॐ शिष्टकृते नमः ॐ
२५२. ॐ शुचये नमः ॐ
२५३. ॐ सिद्धार्थाय नमः ॐ
२५४. ॐ सिद्धसङ्कल्पाय नमः ॐ
२५५. ॐ सिद्धिदाय नमः ॐ
२५६. ॐ सिद्धिसाधनाय नमः ॐ
२५७. ॐ वृषाहिणे नमः ॐ
२५८. ॐ वृषभाय नमः ॐ
२५९. ॐ विष्णवे नमः ॐ
२६०. ॐ वृषपर्वणे नमः ॐ
२६१. ॐ वृषोदराय नमः ॐ
२६२. ॐ वर्धनाय नमः ॐ
२६३. ॐ वर्धमानाय नमः ॐ
२६४. ॐ विविक्ताय नमः ॐ
२६५. ॐ श्रुतिसागराय नमः ॐ
२६६. ॐ सुभुजाय नमः ॐ
२६७. ॐ दुर्धराय नमः ॐ
२६८. ॐ वाग्मिने नमः ॐ
२६९. ॐ महेन्द्राय नमः ॐ
२७०. ॐ वसुदाय नमः ॐ
२७१. ॐ वसवे नमः ॐ
२७२. ॐ नैकरूपाय नमः ॐ
२७३. ॐ बृहद्रूपाय नमः ॐ
२७४. ॐ शिपिविष्टाय नमः ॐ
२७५. ॐ प्रकाशनाय नमः ॐ
२७६. ॐ ओजस्तेजोद्युतिधराय नमः ॐ
२७७. ॐ प्रकाशात्मने नमः ॐ
२७८. ॐ प्रतापनाय नमः ॐ
२७९. ॐ ऋद्धाय नमः ॐ
२८०. ॐ स्पष्टाक्षराय मन्त्राय नमः ॐ
२८१. ॐ चन्द्रांशवे नमः ॐ
२८२. ॐ भास्करद्युतये नमः ॐ
२८३. ॐ अमृतांशूद्भवाय नमः ॐ
२८४. ॐ भानवे नमः ॐ
२८५. ॐ शशबिन्दवे नमः ॐ
२८६. ॐ सुरेश्वराय नमः ॐ
२८७. ॐ औषधाय नमः ॐ
२८८. ॐ जगतः सेतवे नमः ॐ
२८९. ॐ सत्यधर्मपराक्रमाय नमः ॐ
२९०. ॐ भूतभव्यभवन्नाथाय नमः ॐ
२९१. ॐ पवनाय नमः ॐ
२९२. ॐ पावनाय नमः ॐ
२९३. ॐ अनलाय नमः ॐ

२९४. ॐ कामघ्ने नमः ॐ
२९५. ॐ कामकृते नमः ॐ
२९६. ॐ कान्ताय नमः ॐ
२९७. ॐ कामाय नमः ॐ
२९८. ॐ कामप्रदाय नमः ॐ
२९९. ॐ प्रभवे नमः ॐ
३००. ॐ युगादिकृते नमः ॐ
३०१. ॐ युगावर्ताय नमः ॐ
३०२. ॐ नैकमायाय नमः ॐ
३०३. ॐ महाशनाय नमः ॐ
३०४. ॐ अदृश्याय नमः ॐ
३०५. ॐ व्यक्तरूपाय (अव्यक्तरूपाय) नमः ॐ
३०६. ॐ सहस्रजिते नमः ॐ
३०७. ॐ अनन्तजिते नमः ॐ
३०८. ॐ इष्टाय नमः ॐ
३०९. ॐ विशिष्टाय (अविशिष्टाय) नमः ॐ
३१०. ॐ शिष्टेष्टाय नमः ॐ
३११. ॐ शिखण्डिने नमः ॐ
३१२. ॐ नहुषाय नमः ॐ
३१३. ॐ वृषाय नमः ॐ
३१४. ॐ क्रोधघ्ने नमः ॐ
३१५. ॐ क्रोधकृते नमः ॐ
३१६. ॐ कर्त्रे नमः ॐ
३१७. ॐ विश्वबाहवे नमः ॐ
३१८. ॐ महीधराय नमः
३१९. ॐ अच्युताय नमः ॐ
३२०. ॐ प्रथिताय नमः ॐ
३२१. ॐ प्राणाय नमः ॐ
३२२. ॐ प्राणदाय नमः ॐ
३२३. ॐ वासवानुजाय नमः ॐ
३२४. ॐ अपांनिधये नमः ॐ
३२५. ॐ अधिष्ठानाय नमः ॐ
३२६. ॐ अप्रमत्ताय नमः ॐ
३२७. ॐ प्रतिष्ठिताय नमः ॐ
३२८. ॐ स्कन्दाय नमः ॐ
३२९. ॐ स्कन्दधराय नमः ॐ
३३०. ॐ धुर्याय नमः ॐ
३३१. ॐ वरदाय नमः ॐ
३३२. ॐ वायुवाहनाय नमः ॐ
३३३. ॐ वासुदेवाय नमः ॐ
३३४. ॐ बृहद्भानवे नमः ॐ
३३५. ॐ आदिदेवाय नमः ॐ
३३६. ॐ पुरन्दराय नमः ॐ
३३७. ॐ अशोकाय नमः ॐ
३३८. ॐ तारणाय नमः ॐ
३३९. ॐ ताराय नमः ॐ
३४०. ॐ शूराय नमः ॐ
३४१. ॐ शौरये नमः ॐ
३४२. ॐ जनेश्वराय नमः ॐ
३४३. ॐ अनुकूलाय नमः ॐ
३४४. ॐ शतावर्ताय नमः ॐ
३४५. ॐ पद्मिने नमः ॐ
३४६. ॐ पद्मनिभेक्षणाय नमः ॐ
३४७. ॐ पद्मनाभाय नमः ॐ
३४८. ॐ अरविन्दाक्षाय नमः ॐ
३४९. ॐ पद्मगर्भाय नमः ॐ
३५०. ॐ शरीरभृते नमः ॐ
३५१. ॐ महर्द्धये नमः ॐ

३५२. ॐ ऋद्धाय नमः ॐ
३५३. ॐ वृद्धात्मने नमः ॐ
३५४. ॐ महाक्षाय नमः ॐ
३५५. ॐ गरुडध्वजाय नमः ॐ
३५६. ॐ अतुलाय नमः ॐ
३५७. ॐ शरभाय नमः ॐ
३५८. ॐ भीमाय (अभीमाय) नमः ॐ
३५९. ॐ समयज्ञाय नमः ॐ
३६०. ॐ हविर्हरये नमः ॐ
३६१. ॐ सर्वलक्षणलक्षण्याय नमः ॐ
३६२. ॐ लक्ष्मीवते नमः ॐ
३६३. ॐ समितिञ्जयाय नमः ॐ
३६४. ॐ विक्षराय नमः ॐ
३६५. ॐ रोहिताय नमः ॐ
३६६. ॐ मार्गाय नमः ॐ
३६७. ॐ हेतवे नमः ॐ
३६८. ॐ दामोदराय नमः ॐ
३६९. ॐ सहाय नमः ॐ
३७०. ॐ महीधराय नमः ॐ
३७१. ॐ महाभागाय नमः ॐ
३७२. ॐ वेगवते नमः ॐ
३७३. ॐ अमिताशनाय नमः ॐ
३७४. ॐ उद्भवाय नमः ॐ
३७५. ॐ क्षोभणाय नमः ॐ
३७६. ॐ देवाय नमः ॐ
३७७. ॐ श्रीगर्भाय नमः ॐ
३७८. ॐ परमेश्वराय नमः ॐ
३७९. ॐ करणाय नमः ॐ
३८०. ॐ कारणाय नमः ॐ
३८१. ॐ कर्त्रे नमः ॐ
३८२. ॐ विकर्त्रे नमः ॐ
३८३. ॐ गहनाय नमः ॐ
३८४. ॐ गुहाय नमः ॐ
३८५. ॐ व्यवसायाय नमः ॐ
३८६. ॐ व्यवस्थानाय नमः ॐ
३८७. ॐ संस्थानाय नमः ॐ
३८८. ॐ स्थानदाय नमः ॐ
३८९. ॐ ध्रुवाय नमः ॐ
३९०. ॐ परर्द्धये नमः ॐ
३९१. ॐ परमस्पष्टाय नमः ॐ
३९२. ॐ तुष्टाय नमः ॐ
३९३. ॐ पुष्टाय नमः ॐ
३९४. ॐ शुभेक्षणाय नमः ॐ
३९५. ॐ रामाय नमः ॐ
३९६. ॐ विरामाय नमः ॐ
३९७. ॐ विरजाय नमः ॐ
३९८. ॐ मार्गाय नमः ॐ
३९९. ॐ नेयाय नमः ॐ
४००. ॐ नयाय नमः ॐ
४०१. ॐ अनयाय नमः ॐ
४०२. ॐ वीराय नमः ॐ
४०३. ॐ शक्तिमतां श्रेष्ठाय नमः ॐ
४०४. ॐ धर्माय नमः ॐ
४०५. ॐ धर्मविदुत्तमाय नमः ॐ
४०६. ॐ वैकुण्ठाय नमः ॐ
४०७. ॐ पुरुषाय नमः ॐ
४०८. ॐ प्राणाय नमः ॐ
४०९. ॐ प्राणदाय नमः ॐ
४१०. ॐ प्रणवाय नमः ॐ
४११. ॐ पृथवे नमः ॐ

४१२. ॐ हिरण्यगर्भाय नमः ॐ
४१३. ॐ शत्रुघ्नाय नमः ॐ
४१४. ॐ व्याप्ताय नमः ॐ
४१५. ॐ वायवे नमः ॐ
४१६. ॐ अधोक्षजाय नमः ॐ
४१७. ॐ ऋतवे नमः ॐ
४१८. ॐ सुदर्शनाय नमः ॐ
४१९. ॐ कालाय नमः ॐ
४२०. ॐ परमेष्ठिने नमः ॐ
४२१. ॐ परिग्रहाय नमः ॐ
४२२. ॐ उग्राय नमः ॐ
४२३. ॐ संवत्सराय नमः ॐ
४२४. ॐ दक्षाय नमः ॐ
४२५. ॐ विश्रामाय नमः ॐ
४२६. ॐ विश्वदक्षिणाय नमः ॐ
४२७. ॐ विस्ताराय नमः ॐ
४२८. ॐ स्थावरस्थाणवे नमः ॐ
४२९. ॐ प्रमाणाय नमः ॐ
४३०. ॐ बीजाय नमः ॐ
४३१. ॐ अव्ययाय नमः ॐ
४३२. ॐ अर्थाय नमः ॐ
४३३. ॐ अनर्थाय नमः ॐ
४३४. ॐ महाकोशाय नमः ॐ
४३५. ॐ महाभोगाय नमः ॐ
४३६. ॐ महाधनाय नमः ॐ
४३७. ॐ अनिर्विण्णाय नमः ॐ
४३८. ॐ स्थविष्ठाय नमः ॐ
४३९. ॐ भुवे (अभुवे) नमः
४४०. ॐ धर्मयूपाय नमः ॐ
४४१. ॐ महामखाय नमः ॐ
४४२. ॐ नक्षत्रनेमये नमः ॐ
४४३. ॐ नक्षत्रिणे नमः ॐ
४४४. ॐ क्षमाय नमः ॐ
४४५. ॐ क्षामाय नमः ॐ
४४६. ॐ समीहनाय नमः ॐ
४४७. ॐ यज्ञाय नमः ॐ
४४८. ॐ इज्याय नमः ॐ
४४९. ॐ महेज्याय नमः ॐ
४५०. ॐ क्रतवे नमः ॐ
४५१. ॐ सत्राय नमः ॐ
४५२. ॐ सतां गतये नमः ॐ
४५३. ॐ सर्वदर्शिने नमः ॐ
४५४. ॐ विमुक्तात्मने नमः ॐ
४५५. ॐ सर्वज्ञाय नमः ॐ
४५६. ॐ ज्ञानायोत्तमाय नमः ॐ
४५७. ॐ सुव्रताय नमः ॐ
४५८. ॐ सुमुखाय नमः ॐ
४५९. ॐ सूक्ष्माय नमः ॐ
४६०. ॐ सुघोषाय नमः ॐ
४६१. ॐ सुखदाय नमः ॐ
४६२. ॐ सुहृदे नमः ॐ
४६३. ॐ मनोहराय नमः ॐ
४६४. ॐ जितक्रोधाय नमः ॐ
४६५. ॐ वीरबाहवे नमः ॐ
४६६. ॐ विदारणाय नमः ॐ
४६७. ॐ स्वापनाय नमः ॐ
४६८. ॐ स्ववशाय नमः ॐ
४६९. ॐ व्यापिने नमः ॐ
४७०. ॐ नैकात्मने नमः ॐ
४७१. ॐ नैककर्मकृते नमः ॐ

४७२. ॐ वत्सराय नमः ॐ
४७३. ॐ वत्सलाय नमः ॐ
४७४. ॐ वत्सिने नमः ॐ
४७५. ॐ रत्नगर्भाय नमः ॐ
४७६. ॐ धनेश्वराय नमः ॐ
४७७. ॐ धर्मगुपे नमः ॐ
४७८. ॐ धर्मकृते नमः ॐ
४७९. ॐ धर्मिणे नमः ॐ
४८०. ॐ सते नमः ॐ
४८१. ॐ असते नमः ॐ
४८२. ॐ क्षराय नमः ॐ
४८३. ॐ अक्षराय नमः ॐ
४८४. ॐ अविज्ञात्रे नमः ॐ
४८५. ॐ सहस्रांशवे नमः ॐ
४८६. ॐ विधात्रे नमः ॐ
४८७. ॐ कृतलक्षणाय नमः ॐ
४८८. ॐ गभस्तिनेमये नमः ॐ
४८९. ॐ सत्वस्थाय नमः ॐ
४९०. ॐ सिंहाय नमः ॐ
४९१. ॐ भूतमहेश्वराय नमः ॐ
४९२. ॐ आदिदेवाय नमः ॐ
४९३. ॐ महादेवाय नमः ॐ
४९४. ॐ देवेशाय नमः ॐ
४९५. ॐ देवभृद्गुरवे नमः ॐ
४९६. ॐ उत्तराय नमः ॐ
४९७. ॐ गोपतये नमः ॐ
४९८. ॐ गोप्त्रे नमः ॐ
४९९. ॐ ज्ञानगम्याय नमः ॐ
५००. ॐ पुरातनाय नमः ॐ
५०१. ॐ शरीरभूतभृते नमः ॐ
५०२. ॐ भोक्त्रे नमः ॐ
५०३. ॐ कपीन्द्राय नमः ॐ
५०४. ॐ भूरिदक्षिणाय नमः ॐ
५०५. ॐ सोमपाय नमः ॐ
५०६. ॐ अमृतपाय नमः ॐ
५०७. ॐ सोमाय नमः ॐ
५०८. ॐ पुरुजिते नमः ॐ
५०९. ॐ पुरुसत्तमाय नमः ॐ
५१०. ॐ विनयाय नमः ॐ
५११. ॐ जयाय नमः ॐ
५१२. ॐ सत्यसन्धाय नमः ॐ
५१३. ॐ दाशार्हाय नमः ॐ
५१४. ॐ सात्वतां पतये नमः ॐ
५१५. ॐ जीवाय नमः ॐ
५१६. ॐ विनयितासाक्षिणे नमः ॐ
५१७. ॐ मुकुन्दाय नमः ॐ
५१८. ॐ अमितविक्रमाय नमः ॐ
५१९. ॐ अम्भोनिधये नमः ॐ
५२०. ॐ अनन्तात्मने नमः ॐ
५२१. ॐ महोदधिशयाय नमः ॐ
५२२. ॐ अन्तकाय नमः ॐ
५२३. ॐ अजाय नमः ॐ
५२४. ॐ महार्हाय नमः ॐ
५२५. ॐ स्वाभाव्याय नमः ॐ
५२६. ॐ जितामित्राय नमः ॐ
५२७. ॐ प्रमोदनाय नमः ॐ
५२८. ॐ आनन्दाय नमः ॐ
५२९. ॐ नन्दनाय नमः ॐ
५३०. ॐ नन्दाय नमः ॐ
५३१. ॐ सत्यधर्मणे नमः ॐ

५३२. ॐ त्रिविक्रमाय नमः ॐ
५३३. ॐ महर्षये नमः ॐ
५३४. ॐ कपिलाचार्याय नमः ॐ
५३५. ॐ कृतज्ञाय नमः ॐ
५३६. ॐ मेदिनीपतये नमः ॐ
५३७. ॐ त्रिपदाय नमः ॐ
५३८. ॐ त्रिदशाध्यक्षाय नमः ॐ
५३९. ॐ महाशृङ्गाय नमः ॐ
५४०. ॐ कृतान्तकृते नमः ॐ
५४१. ॐ महावराहाय नमः ॐ
५४२. ॐ गोविन्दाय नमः ॐ
५४३. ॐ सुपेणाय नमः ॐ
५४४. ॐ कनकाङ्गदिने नमः ॐ
५४५. ॐ गुह्याय नमः ॐ
५४६. ॐ गभीराय नमः ॐ
५४७. ॐ गहनाय नमः ॐ
५४८. ॐ गुप्ताय नमः ॐ
५४९. ॐ चक्रगदाधराय नमः ॐ
५५०. ॐ वेधसे नमः ॐ
५५१. ॐ स्वाङ्गाय नमः ॐ
५५२. ॐ अजिताय नमः ॐ
५५३. ॐ कृष्णाय नमः ॐ
५५४. ॐ दृढाय नमः ॐ
५५५. ॐ सङ्कर्पणाय नमः ॐ
५५६. ॐ अच्युताय नमः ॐ
५५७. ॐ वरुणाय नमः ॐ
५५८. ॐ वारुणाय नमः ॐ
५५९. ॐ वृक्षाय नमः ॐ
५६०. ॐ पुष्कराक्षाय नमः ॐ
५६१. ॐ महामनसे नमः ॐ
५६२. ॐ भगवते नमः ॐ
५६३. ॐ भगघ्ने नमः ॐ
५६४. ॐ आनन्दिने नमः ॐ
५६५. ॐ वनमालिने नमः ॐ
५६६. ॐ हलायुधाय नमः ॐ
५६७. ॐ आदित्याय नमः ॐ
५६८. ॐ ज्योतिरादित्याय नमः ॐ
५६९. ॐ सहिष्णवे नमः ॐ
५७०. ॐ गतिसत्तमाय नमः ॐ
५७१. ॐ सुधन्वने नमः ॐ
५७२. ॐ खण्डपरशवे नमः ॐ
५७३. ॐ दारुणाय नमः ॐ
५७४. ॐ द्रविणप्रदाय नमः ॐ
५७५. ॐ दिवस्पृशे नमः ॐ
५७६. ॐ सर्वदृग्व्यासाय नमः ॐ
५७७. ॐ वाचस्पतये नमः ॐ
५७८. ॐ अयोनिजाय नमः ॐ
५७९. ॐ त्रिसाम्ने नमः ॐ
५८०. ॐ सामगाय नमः ॐ
५८१. ॐ साम्ने नमः ॐ
५८२. ॐ निर्वाणाय नमः ॐ
५८३. ॐ भेपजाय नमः ॐ
५८४. ॐ भिपजे नमः ॐ
५८५. ॐ सन्न्यासकृते नमः ॐ
५८६. ॐ शमाय नमः ॐ
५८७. ॐ शान्ताय नमः ॐ
५८८. ॐ निष्ठायै नमः ॐ
५८९. ॐ शान्तये नमः ॐ
५९०. ॐ परायणाय नमः ॐ
५९१. ॐ शुभाङ्गाय नमः ॐ

५९२. ॐ शान्तिदाय नमः ॐ
५९३. ॐ स्रष्ट्रे नमः ॐ
५९४. ॐ कुमुदाय नमः ॐ
५९५. ॐ कुवलेशयाय नमः ॐ
५९६. ॐ गोहिताय नमः ॐ
५९७. ॐ गोपतये नमः ॐ
५९८. ॐ गोप्त्रे नमः ॐ
५९९. ॐ वृपभाक्षाय नमः ॐ
६००. ॐ वृषप्रियाय नमः ॐ
६०१. ॐ अनिवर्तिने नमः ॐ
६०२. ॐ निवृत्तात्मने नमः ॐ
६०३. ॐ सङ्क्षेप्त्रे नमः ॐ
६०४. ॐ क्षेमकृच्छिवाय नमः ॐ
६०५. ॐ श्रीवत्सवक्षसे नमः ॐ
६०६. ॐ श्रीवासाय नमः ॐ
६०७. ॐ श्रीपतये नमः ॐ
६०८. ॐ श्रीमतांवराय नमः ॐ
६०९. ॐ श्रीदाय नमः ॐ
६१०. ॐ श्रीशाय नमः ॐ
६११. ॐ श्रीनिवासाय नमः ॐ
६१२. ॐ श्रीनिधये नमः ॐ
६१३. ॐ श्रीविभावनाय नमः ॐ
६१४. ॐ श्रीधराय नमः ॐ
६१५. ॐ श्रीकराय नमः ॐ
६१६. ॐ श्रेयसे नमः ॐ
६१७. ॐ श्रीमते नमः ॐ
६१८. ॐ लोकत्रयाश्रयाय नमः ॐ
६१९. ॐ स्वक्षाय नमः ॐ
६२०. ॐ स्वङ्गाय नमः ॐ
६२१. ॐ शतानन्दाय नमः ॐ
६२२. ॐ नन्दये नमः ॐ
६२३. ॐ ज्योतिर्गणेश्वराय नमः ॐ
६२४. ॐ विजितात्मने नमः ॐ
६२५. ॐ विधेयात्मने (अविधेयात्मने) नमः ॐ
६२६. ॐ सत्कीर्तये नमः ॐ
६२७. ॐ छिन्नसंशयाय नमः ॐ
६२८. ॐ उदीर्णाय नमः ॐ
६२९. ॐ सर्वतश्चक्षुपे नमः ॐ
६३०. ॐ अनीशाय नमः ॐ
६३१. ॐ शाश्वतस्थिराय नमः ॐ
६३२. ॐ भूशयाय नमः ॐ
६३३. ॐ भूपणाय नमः ॐ
६३४. ॐ भूतये नमः ॐ
६३५. ॐ विशोकाय नमः ॐ
६३६. ॐ शोकनाशनाय नमः ॐ
६३७. ॐ अर्चिष्मते नमः ॐ
६३८. ॐ अर्चिताय नमः ॐ
६३९. ॐ कुम्भाय नमः ॐ
६४०. ॐ विशुद्धात्मने नमः ॐ
६४१. ॐ विशोधनाय नमः ॐ
६४२. ॐ अनिरुद्धाय नमः ॐ
६४३. ॐ अप्रतिरथाय नमः ॐ
६४४. ॐ प्रद्युम्नाय नमः ॐ
६४५. ॐ अमितविक्रमाय नमः ॐ
६४६. ॐ कालनेमिनिघ्ने नमः ॐ
६४७. ॐ वीराय नमः ॐ
६४८. ॐ शौरये नमः ॐ
६४९. ॐ शूरजनेश्वराय नमः ॐ
६५०. ॐ त्रिलोकात्मने नमः ॐ

६५१. ॐ त्रिलोकेशाय नमः ॐ
६५२. ॐ केशवाय नमः ॐ
६५३. ॐ केशिघ्ने नमः ॐ
६५४. ॐ हरये नमः ॐ
६५५. ॐ कामदेवाय नमः ॐ
६५६. ॐ कामपालाय नमः ॐ
६५७. ॐ कामिने नमः ॐ
६५८. ॐ कान्ताय नमः ॐ
६५९. ॐ कृतागमाय नमः ॐ
६६०. ॐ अनिर्देश्यवपुषे नमः ॐ
६६१. ॐ विष्णवे नमः ॐ
६६२. ॐ वीराय नमः ॐ
६६३. ॐ अनन्ताय नमः ॐ
६६४. ॐ धनञ्जयाय नमः ॐ
६६५. ॐ ब्रह्मण्याय नमः ॐ
६६६. ॐ ब्रह्मकृते नमः ॐ
६६७. ॐ ब्रह्मणे नमः ॐ
६६८. ॐ ब्रह्मणे नमः ॐ
६६९. ॐ ब्रह्मविवर्धनाय नमः ॐ
६७०. ॐ ब्रह्मविदे नमः ॐ
६७१. ॐ ब्राह्मणाय नमः ॐ
६७२. ॐ ब्रह्मिणे नमः ॐ
६७३. ॐ ब्रह्मज्ञाय नमः ॐ
६७४. ॐ ब्राह्मणप्रियाय नमः ॐ
६७५. ॐ महाक्रमाय नमः ॐ
६७६. ॐ महाकर्मणे नमः ॐ
६७७. ॐ महातेजसे नमः ॐ
६७८. ॐ महोरगाय नमः ॐ
६७९. ॐ महाक्रतवे नमः ॐ
६८०. ॐ महायज्वने नमः ॐ
६८१. ॐ महायज्ञाय नमः ॐ
६८२. ॐ महाहविषे नमः ॐ
६८३. ॐ स्तव्याय नमः ॐ
६८४. ॐ स्तवप्रियाय नमः ॐ
६८५. ॐ स्तोत्राय नमः ॐ
६८६. ॐ स्तुतये नमः ॐ
६८७. ॐ स्तोत्रे नमः ॐ
६८८. ॐ रणप्रियाय नमः ॐ
६८९. ॐ पूर्णाय नमः ॐ
६९०. ॐ पूरयित्रे नमः ॐ
६९१. ॐ पुण्याय नमः ॐ
६९२. ॐ पुण्यकीर्तये नमः ॐ
६९३. ॐ अनामयाय नमः ॐ
६९४. ॐ मनोजवाय नमः ॐ
६९५. ॐ तीर्थकराय नमः ॐ
६९६. ॐ वसुरेतसे नमः ॐ
६९७. ॐ वसुप्रदाय नमः ॐ
६९८. ॐ वसुप्रदाय नमः ॐ
६९९. ॐ वासुदेवाय नमः ॐ
७००. ॐ वसवे नमः ॐ
७०१. ॐ वसुमनसे नमः ॐ
७०२. ॐ हविषे नमः ॐ
७०३. ॐ सद्गतये नमः ॐ
७०४. ॐ सत्कृतये नमः ॐ
७०५. ॐ सत्तायै नमः ॐ
७०६. ॐ सद्भूतये नमः ॐ
७०७. ॐ सत्परायणाय नमः ॐ
७०८. ॐ शूरसेनाय नमः ॐ
७०९. ॐ यदुश्रेष्ठाय नमः ॐ
७१०. ॐ सन्निवासाय नमः ॐ

७११. ॐ सुयामुनाय नमः ॐ
७१२. ॐ भूतावासाय नमः ॐ
७१३. ॐ वासुदेवाय नमः ॐ
७१४. ॐ सर्वासुनिलयाय नमः ॐ
७१५. ॐ अनलाय नमः ॐ
७१६. ॐ दर्पघ्ने नमः ॐ
७१७. ॐ दर्पदाय नमः ॐ
७१८. ॐ दृप्ताय नमः ॐ
७१९. ॐ दुर्धराय नमः ॐ
७२०. ॐ अपराजिताय नमः ॐ
७२१. ॐ विश्वमूर्तये नमः ॐ
७२२. ॐ महामूर्तये नमः ॐ
७२३. ॐ दीप्तमूर्तये नमः ॐ
७२४. ॐ अमूर्तिमते नमः ॐ
७२५. ॐ अनेकमूर्तये नमः ॐ
७२६. ॐ अव्यक्ताय नमः ॐ
७२७. ॐ शतमूर्तये नमः ॐ
७२८. ॐ शताननाय नमः ॐ
७२९. ॐ एकाय नमः ॐ
७३०. ॐ नैकाय नमः ॐ
७३१. ॐ सवाय नमः ॐ
७३२. ॐ कस्मै (काय) नमः ॐ
७३३. ॐ कस्मै (किमे) नमः ॐ
७३४. ॐ यस्मै (यदे) नमः ॐ
७३५. ॐ तस्मै (तदे) नमः ॐ
७३६. ॐ पदायानुत्तमाय नमः ॐ
७३७. ॐ लोकबन्धवे नमः ॐ
७३८. ॐ लोकनाथाय नमः ॐ
७३९. ॐ माधवाय नमः ॐ
७४०. ॐ भक्तवत्सलाय नमः ॐ
७४१. ॐ सुवर्णवर्णाय नमः ॐ
७४२. ॐ हेमाङ्गाय नमः ॐ
७४३. ॐ वराङ्गाय नमः ॐ
७४४. ॐ चन्दनाङ्गदिने नमः ॐ
७४५. ॐ वीरघ्ने नमः ॐ
७४६. ॐ विषमाय नमः ॐ
७४७. ॐ शून्याय नमः ॐ
७४८. ॐ घृताशिषे नमः ॐ
७४९. ॐ अचलाय नमः ॐ
७५०. ॐ चलाय नमः ॐ
७५१. ॐ अमानिने नमः ॐ
७५२. ॐ मानदाय नमः ॐ
७५३. ॐ मान्याय नमः ॐ
७५४. ॐ लोकस्वामिने नमः ॐ
७५५. ॐ त्रिलोकधृपे नमः ॐ
७५६. ॐ सुमेधसे नमः ॐ
७५७. ॐ मेधजाय नमः ॐ
७५८. ॐ धन्याय नमः ॐ
७५९. ॐ सत्यमेधसे नमः ॐ
७६०. ॐ धराधराय नमः ॐ
७६१. ॐ तेजोवृषाय नमः ॐ
७६२. ॐ द्युतिधराय नमः ॐ
७६३. ॐ सर्वशस्त्रभृतांवराय नमः ॐ
७६४. ॐ प्रग्रहाय नमः ॐ
७६५. ॐ निग्रहाय नमः ॐ
७६६. ॐ व्यग्राय नमः ॐ
७६७. ॐ नैकशृङ्गाय नमः ॐ
७६८. ॐ गदाग्रजाय नमः ॐ
७६९. ॐ चतुर्मूर्तये नमः ॐ
७७०. ॐ चतुर्बाहवे नमः ॐ

७७१. ॐ चतुर्व्यूहाय नमः ॐ
७७२. ॐ चतुर्गतये नमः ॐ
७७३. ॐ चतुरात्मने नमः ॐ
७७४. ॐ चतुर्भावाय नमः ॐ
७७५. ॐ चतुर्वेदविदे नमः ॐ
७७६. ॐ एकपदे नमः ॐ
७७७. ॐ समावर्ताय नमः ॐ
७७८. ॐ निवृत्तात्मने (अनिवृत्तात्मने) नमः ॐ
७७९. ॐ दुर्जयाय नमः ॐ
७८०. ॐ दुरतिक्रमाय नमः ॐ
७८१. ॐ दुर्लभाय नमः ॐ
७८२. ॐ दुर्गमाय नमः ॐ
७८३. ॐ दुर्गाय नमः ॐ
७८४. ॐ दुरावासाय नमः ॐ
७८५. ॐ दुरारिघ्ने नमः ॐ
७८६. ॐ शुभाङ्गाय नमः ॐ
७८७. ॐ लोकसारङ्गाय नमः ॐ
७८८. ॐ सुतन्तवे नमः ॐ
७८९. ॐ तन्तुवर्धनाय नमः ॐ
७९०. ॐ इन्द्रकर्मणे नमः ॐ
७९१. ॐ महाकर्मणे नमः ॐ
७९२. ॐ कृतकर्मणे नमः ॐ
७९३. ॐ कृतागमाय नमः ॐ
७९४. ॐ उद्भवाय नमः ॐ
७९५. ॐ सुन्दराय नमः ॐ
७९६. ॐ सुन्दाय नमः ॐ
७९७. ॐ रत्ननाभाय नमः ॐ
७९८. ॐ सुलोचनाय नमः ॐ
७९९. ॐ अर्काय नमः ॐ
८००. ॐ वाजसनाय नमः ॐ
८०१. ॐ शृङ्गिणे नमः ॐ
८०२. ॐ जयन्ताय नमः ॐ
८०३. ॐ सर्वविज्जयिने नमः ॐ
८०४. ॐ सुवर्णविन्दवे नमः ॐ
८०५. ॐ अक्षोभ्याय नमः ॐ
८०६. ॐ सर्ववागीश्वरेश्वराय नमः ॐ
८०७. ॐ महाह्रदाय नमः ॐ
८०८. ॐ महागर्ताय नमः ॐ
८०९. ॐ महाभूताय नमः ॐ
८१०. ॐ महानिधये नमः ॐ
८११. ॐ कुमुदाय नमः ॐ
८१२. ॐ कुन्दराय नमः ॐ
८१३. ॐ कुन्दाय नमः ॐ
८१४. ॐ पर्जन्याय नमः ॐ
८१५. ॐ पावनाय नमः ॐ
८१६. ॐ अनिलाय नमः ॐ
८१७. ॐ अमृतांशाय नमः ॐ
८१८. ॐ अमृतवपुपे नमः ॐ
८१९. ॐ सर्वज्ञाय नमः ॐ
८२०. ॐ सर्वतोमुखाय नमः ॐ
८२१. ॐ सुलभाय नमः ॐ
८२२. ॐ सुव्रताय नमः ॐ
८२३. ॐ सिद्धाय नमः ॐ
८२४. ॐ शत्रुजिते नमः ॐ
८२५. ॐ शत्रुतापनाय नमः ॐ
८२६. ॐ न्यग्रोधाय नमः ॐ
८२७. ॐ उदुम्बराय नमः ॐ
८२८. ॐ अश्वत्थाय नमः ॐ
८२९. ॐ चाणूरान्ध्रनिपूदनाय नमः ॐ

८३०. ॐ सहस्रार्चिषे नमः ॐ
८३१. ॐ सप्तजिह्वाय नमः ॐ
८३२. ॐ सप्तैधसे नमः ॐ
८३३. ॐ सप्तवाहनाय नमः ॐ
८३४. ॐ अमूर्तये नमः ॐ
८३५. ॐ अनघाय नमः ॐ
८३६. ॐ अचिन्त्याय नमः ॐ
८३७. ॐ भयकृते नमः ॐ
८३८. ॐ भयनाशनाय नमः ॐ
८३९. ॐ अणवे नमः ॐ
८४०. ॐ बृहते नमः ॐ
८४१. ॐ कृशाय नमः ॐ
८४२. ॐ स्थूलाय नमः ॐ
८४३. ॐ गुणभृते नमः ॐ
८४४. ॐ निर्गुणाय नमः ॐ
८४५. ॐ महते नमः ॐ
८४६. ॐ अधृताय नमः ॐ
८४७. ॐ स्वधृताय नमः ॐ
८४८. ॐ स्वास्याय नमः ॐ
८४९. ॐ प्राग्वंशाय नमः ॐ
८५०. ॐ वंशवर्धनाय नमः ॐ
८५१. ॐ भारभृते नमः ॐ
८५२. ॐ कथिताय नमः ॐ
८५३. ॐ योगिने नमः ॐ
८५४. ॐ योगीशाय नमः ॐ
८५५. ॐ सर्वकामदाय नमः ॐ
८५६. ॐ आश्रमाय नमः ॐ
८५७. ॐ श्रमणाय नमः ॐ
८५८. ॐ क्षामाय नमः ॐ
८५९. ॐ सुपर्णाय नमः ॐ
८६०. ॐ वायुवाहनाय नमः ॐ
८६१. ॐ धनुर्धराय नमः ॐ
८६२. ॐ धनुर्वेदाय नमः ॐ
८६३. ॐ दण्डाय नमः ॐ
८६४. ॐ दमयित्रे नमः ॐ
८६५. ॐ दमाय नमः ॐ
८६६. ॐ अपराजिताय नमः ॐ
८६७. ॐ सर्वसहाय नमः ॐ
८६८. ॐ नियन्त्रे नमः ॐ
८६९. ॐ नियमाय (अनियमाय) नमः ॐ
८७०. ॐ यमाय (अयमाय) नमः ॐ
८७१. ॐ सत्त्ववते नमः ॐ
८७२. ॐ सात्त्विकाय नमः ॐ
८७३. ॐ सत्याय नमः ॐ
८७४. ॐ सत्यधर्मपरायणाय नमः ॐ
८७५. ॐ अभिप्रायाय नमः ॐ
८७६. ॐ प्रियार्हाय नमः ॐ
८७७. ॐ अर्हप्रियकृते नमः ॐ
८७८. ॐ प्रीतिवर्धनाय नमः ॐ
८७९. ॐ विहायसगतये नमः ॐ
८८०. ॐ ज्योतिषे नमः ॐ
८८१. ॐ सुरुचये नमः ॐ
८८२. ॐ हुतभुग्विभवे नमः ॐ
८८३. ॐ रवये नमः ॐ
८८४. ॐ विरोचनाय नमः ॐ
८८५. ॐ सूर्याय नमः ॐ
८८६. ॐ सवित्रे नमः ॐ
८८७. ॐ रविलोचनाय नमः ॐ
८८८. ॐ अनन्ताय नमः ॐ

८८९. ॐ हुतभुग्भोक्त्रे नमः ॐ
८९०. ॐ सुखदाय नमः ॐ
८९१. ॐ नैकजाय नमः ॐ
८९२. ॐ अग्रजाय नमः ॐ
८९३. ॐ अनिर्विण्णाय नमः ॐ
८९४. ॐ सदामर्षिणे नमः ॐ
८९५. ॐ लोकाधिष्ठानाय नमः ॐ
८९६. ॐ अद्भुताय नमः ॐ
८९७. ॐ सनात् (सनादे) नमः ॐ
८९८. ॐ सनातनतमाय नमः ॐ
८९९. ॐ कपिलाय नमः ॐ
९००. ॐ कपये नमः ॐ
९०१. ॐ अव्ययाय नमः ॐ
९०२. ॐ स्वस्तिदाय नमः ॐ
९०३. ॐ स्वस्तिकृते नमः ॐ
९०४. ॐ स्वस्ति (स्वस्तिने) नमः ॐ
९०५. ॐ स्वस्तिभुजे नमः ॐ
९०६. ॐ स्वस्तिदक्षिणाय नमः ॐ
९०७. ॐ अरौद्राय नमः ॐ
९०८. ॐ कुण्डलिने नमः ॐ
९०९. ॐ चक्रिणे नमः ॐ
९१०. ॐ विक्रमिणे नमः ॐ
९११. ॐ ऊर्जितशासनाय नमः ॐ
९१२. ॐ शब्दातिगाय नमः ॐ
९१३. ॐ शब्दसहाय नमः ॐ
९१४. ॐ शिशिराय नमः ॐ
९१५. ॐ शर्वरीकराय नमः ॐ
९१६. ॐ अक्रूराय नमः ॐ
९१७. ॐ पेशलाय नमः ॐ
९१८. ॐ दक्षाय नमः ॐ
९१९. ॐ दक्षिणाय नमः ॐ
९२०. ॐ क्षमिणांवराय नमः ॐ
९२१. ॐ विद्वत्तमाय नमः ॐ
९२२. ॐ वीतभयाय नमः ॐ
९२३. ॐ पुण्यश्रवणकीर्तनाय नमः ॐ
९२४. ॐ उत्तारणाय नमः ॐ
९२५. ॐ दुष्कृतिघ्ने नमः ॐ
९२६. ॐ पुण्याय नमः ॐ
९२७. ॐ दुःस्वप्ननाशनाय नमः ॐ
९२८. ॐ वीरघ्ने नमः ॐ
९२९. ॐ रक्षणाय नमः ॐ
९३०. ॐ सन्ताय नमः ॐ
९३१. ॐ जीवनाय नमः ॐ
९३२. ॐ पर्यवस्थिताय नमः ॐ
९३३. ॐ अनन्तरूपाय नमः ॐ
९३४. ॐ अनन्तश्रिये नमः ॐ
९३५. ॐ जितमन्यवे नमः ॐ
९३६. ॐ भयापहाय नमः ॐ
९३७. ॐ चतुरश्राय नमः ॐ
९३८. ॐ गभीरात्मने नमः ॐ
९३९. ॐ विदिशाय नमः ॐ
९४०. ॐ व्यादिशाय नमः ॐ
९४१. ॐ दिशाय नमः ॐ
९४२. ॐ अनादये नमः ॐ
९४३. ॐ भूर्भुवोलक्ष्म्यै नमः ॐ
९४४. ॐ सुवीराय नमः ॐ
९४५. ॐ रुचिराङ्गदाय नमः ॐ
९४६. ॐ जननाय नमः ॐ
९४७. ॐ जनजन्मादये नमः ॐ
९४८. ॐ भीमाय नमः ॐ

९४९. ॐ भीमपराक्रमाय नमः ॐ
९५०. ॐ आधारनिलयाय नमः ॐ
९५१. ॐ धात्रे (अधात्रे) नमः ॐ
९५२. ॐ पुष्पहासाय नमः ॐ
९५३. ॐ प्रजागराय नमः ॐ
९५४. ॐ ऊर्ध्वगाय नमः ॐ
९५५. ॐ सत्पथाचाराय नमः ॐ
९५६. ॐ प्राणदाय नमः ॐ
९५७. ॐ प्रणवाय नमः ॐ
९५८. ॐ पणाय नमः ॐ
९५९. ॐ प्रमाणाय नमः ॐ
९६०. ॐ प्राणनिलयाय नमः ॐ
९६१. ॐ प्राणभृते नमः ॐ
९६२. ॐ प्राणजीवनाय नमः ॐ
९६३. ॐ तत्वाय नमः ॐ
९६४. ॐ तत्वविदे नमः ॐ
९६५. ॐ एकात्मने नमः ॐ
९६६. ॐ जन्ममृत्युजरातिगाय नमः ॐ
९६७. ॐ भूर्भुवःस्वस्तरवे नमः ॐ
९६८. ॐ ताराय नमः ॐ
९६९. ॐ सवित्रे नमः ॐ
९७०. ॐ प्रपितामहाय नमः ॐ
९७१. ॐ यज्ञाय नमः ॐ
९७२. ॐ यज्ञपतये नमः ॐ
९७३. ॐ यज्वने नमः ॐ
९७४. ॐ यज्ञाङ्गाय नमः ॐ
९७५. ॐ यज्ञवाहनाय नमः ॐ
९७६. ॐ यज्ञभृते नमः ॐ
९७७. ॐ यज्ञकृते नमः ॐ

॥ श्रीकृष्णार्पणमस्तु ॥





अनुत्तमं नामशास्त्रम्–

तदिदं वैष्णवं पदसहस्रं विष्णोः अनन्तगुण-तनुवाचकं सत् महद्ब्रह्म यावद्रूपैर्विष्ठितं तावद्रूपजातं प्रतिपादयितुं अनुसरति । अथापि 'शब्दातिगः' श्रीहरिः स्वेन महामहिम्ना सर्वानपि शब्दान् अतिशेते । ईदृशशब्दातिगमहिमाऽपि शब्दसहो भगवान् सदागमैकविज्ञेयो भवति । तदयं दयानिधेः श्रीनिवासस्य अगाधमहिमा ।

अमितमहिमोपेतभगवद्रूपप्रतिपादनादिरूपेण ईदृशेन सर्वातिशायिना महिम्ना सर्वाणि नामसहस्राण्यतिगच्छति अयं श्रीविष्णुस्तवराजः ।

एतादृशं समस्तशास्त्रसारं बृहतीसहस्रमन्त्रव्याख्येयं इदं नामसहस्रं लेखन-श्रवण-सङ्कीर्तन-जप-व्याख्यानप्रभृतिभिः विष-पिशाच-व्याधि-ग्रह-दुःस्वप्नदुर्निमित्ताद्यशिवोपशमनरूपावान्तरफलकं सत् महापातकादिप्रायश्चित्ताय, संसारग्रन्थिविस्रंसनाय, परमपदावाप्तये परमं निदानम् ।

-श्री श्री सत्यात्मतीर्थश्रीपादाः